## विषय-सूची

### पद्य

## गद्य

# हमारी सहायता कीजिए

'त्यागभूमि' को अपनी साहित्यिक उच्चता और महत्ता पर गर्व नहीं, वह आपकी एक विनम्र सेविका है। उसने भरसक आपकी सेवा करने का प्रयत्न किया है—इस सेवा की नाप-तौल उसकी बाह्य सफलता पर नहीं वरन् आन्तरिक भावों पर आश्रित होनी चाहिए। वह आपकी है और आपकी सेवा के बल पर ही जीना चाहती है। मानव-जाति और राष्ट्र की सेवा के लिए—जीवन का सच्चा सन्देश सर्व साधारण तक पहुँचाने के लिए ही उसका जन्म हुआ है। यह आपका काम है अतएव 'त्यागभूमि' के प्रचा–२३२

# हमारी सहायता करना आपका धर्म है

–३४९

आशा है, उसके प्रचार में आप हमारा हाथ बटावेंगे।

## 'त्यागभूमि' के लेखकों और कवियों के नाम ही

## उसकी सार्थकता सिद्ध करने के लिए पर्याप्त हैं

[illegible] राय, दीनबन्धु ऐण्डरूज, भाई परमानन्द, श्री जमनालाल बजाज, श्री घनश्यामदास [illegible] ी, महामहोपाध्याय पं० गौरीशंकर हीराचन्द ओझा, राय [illegible] नारायण [illegible]. श्रीकृष्णदास ( महात्माजी के भू० पू० प्राइवेट सेक्रेटरी ),

* श्रीः *

पण्डितराजश्रीरोहिरामजीशास्त्रि(चिडावा-जयपुर)स्मारकं-

श्रीराजस्थान-संस्कृत-कालेज-ग्रन्थमालायाः

*त्रिंशत्कुसुमम्*

महामहोपाध्यायश्रीवरदराजाचार्यविरचिता

# लघुसिद्धान्तकौमुदी

श्रीगुरुप्रसादशास्त्रिणः

व्याकरणाचार्याः, न्यायाचार्याः, दर्शनाचार्याः,

इत्येतैः संगृहीतया सरलया सरलाख्यया टीकया

किञ्च भाषाटीकया च समलङ्कृता ।

[ ४२ वर्षाणां प्रश्नपत्रैरन्विता च ]

प्रकाशकः

भार्गवपुस्तकालयः, गायघाट, बनारस

तृतीयं संस्करणम् ] १९४२ [ मूल्य रफ ॥=) ग्लेज ॥।)

प्रथम सस्करण ५०००        १०-८-३७
द्वितीय संस्करण १००००        २४-७-३९
तृतीय संस्करण ५०००        १-५-४२

मुद्रक
पं० कैलासनाथ भार्गव,
भार्गव भूषण प्रेस, गायघाट, बनारस सिटी।

# तृतीयसंस्करणप्रस्तावना

अथ महामहोपाध्यायविद्वद्वरश्रीमद्भट्टोजिदीक्षितानामन्तेवासिभि-र्महामहोपाध्यायश्रीवरदराजभट्टैर्विरचिता वैयाकरणसिद्धान्तान्सरलया सरण्या प्रकाशयन्ती 'वैयाकरणसिद्धान्तकौमुदी'प्रदर्शित मार्गमुद्दिश्य प्रवर्त्तमाना बालोपकारपरायणा वैयाकरणलघुसिद्धान्तकौमुदीयं सरला-ख्यया टीकया किञ्च विस्तृतया भाषाटीकया च सनाथीकृताऽस्माभिः सम्मुद्य प्रकाश्यते ।

प्रथमपरीक्षार्थिनां बालानामुपकाराय चाऽस्यां सरलायां टीकायां सरलतमा एव विषया ग्रन्थलाघवायाऽपेक्ष्यमाणाः समुपनिबद्धा इति परीक्षार्थिनश्छात्रा इमां सरलां भाषाटीकां च प्रकाममादरिष्यन्ते ।

अभ्याससौकर्याय च महता श्रमेण सङ्गृहीतानि द्विचत्वारिंशद्वर्षाणां प्रश्नपत्राण्यप्यत्राऽन्ते निवेशितानि ।

तदुपरि च कृतेऽभ्यासे ध्रुवं ग्रन्थोपस्थितिदार्ढ्यं, ततश्च परीक्षासु नितरामभिमतफलप्राप्तिश्छात्राणां भविष्यतीति विश्वसिमः ।

सुस्निग्धैर्दुग्धधवलैः पत्रैर्मनोहरैरक्षरैर्बहिरङ्गान्तरसौष्ठवोपेतैर्बन्धना-दिभिश्च सर्वथा मञ्जुलमिदं संस्करणं स्वल्पतममूल्येन लभ्यं सहृदयाना-मानन्दं जनयिष्यतीति सुदृढोऽस्माकं प्रमोदभरः !

अथापि सुलभेनैव मूल्येनैतां प्रकाशयतां भार्गवमहोदयानां संस्कृतानुरागी छात्रसमूहः प्रकाममाभारीति ।

किञ्च तृतीये संस्करणे टीकायां बहवो विषया वर्धिता बाललोक-मुपकरिष्यन्तीति च ।

श्रीराजस्थान-संस्कृत-कालेज,
मीरघाट, काशी ।
५-५-४२

निवेदकः—
श्रीगुरुप्रसादशास्त्री ।

* श्रीगणेशाय नमः । श्रीसरस्वत्यै नमः *

# लघुसिद्धान्तकौमुदी

## सरला-भाषा-टीकाद्वयसमन्विता

नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम् ।
पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीम् ॥ १ ॥

* श्रीमन्महागणाधिपतये नमः *

अथ श्रीगुरुप्रसादशास्त्रिकृता

* सरला *

नुमोऽनवद्यसद्ग्रन्थविद्योद्भासितदिङ्मुखान् ।
मरुमण्डलमार्तण्डलोहिरामाऽभिधान् गुरून् ॥ १ ॥

नत्वा–अव्ययपदम् । सरस्वतीं–द्वितीयान्तम् । देवीं–द्वितीयान्तम् । शुद्धां–द्वितीयान्तम् । गुण्यां–द्वितीयान्तम् । करोमि–क्रियापदम् । अहं प्रथमान्तम् । पाणिनीयप्रवेशाय–चतुर्थ्यन्तम् । लघुसिद्धान्तकौमुदीं–द्वितीयान्तम् । ( इति पदच्छेदः ) ।

अहं वरदराजाचार्यो लघुसिद्धान्तकौमुदीं करोमि । किङ्कृत्वा ? सरस्वतीं नत्वा । कथम्भूतां सरस्वतीं ? । देवीम् । पुनः कथम्भूता सरस्वती ? । शुद्धाम् । पुनः कथम्भूता सरस्वती ?- गुण्याम् । कस्मै प्रयोजनाय ? । पाणिनीयप्रवेशाय । ( इति खण्डान्वयः ) ।

१ भाषा टीका–मैं वरदराजाचार्य भगवती श्रीसरस्वती देवीजी को ( जो शुद्ध स्वरूप हैं और समस्त गुणों करके युक्त हैं–) प्रणाम करके बालकों को अनायास से व्याकरण शास्त्र का ज्ञान कराने के लिए इस लघुसिद्धान्तकौमुदी नामक ग्रन्थ को बनाता हूँ ॥ १ ॥

सरो-ज्ञानं, तदस्या अस्तीति सरस्वती, तां-सरस्वतीम् । दीव्यतीति देवी, तां-देवीम् । प्रशस्ता गुणाः सन्त्यस्याः सा-गुण्या, तां-गुण्याम् । पणनं पणः=व्यवहारः । पणोऽस्यास्तीति पणी=प्रजापतिः, पणिनो गोत्रापत्यं-पाणिनः, पाणिनस्य युवापत्यं-पाणिनिः । पाणिनिना प्रोक्तं पाणिनीयम् । पाणिनीये प्रवेशः-पाणिनीयप्रवेशः, तस्मै-पाणिनीयप्रवेशाय । सिद्धोऽन्तो=निश्चयो येषु ते सिद्धान्ताः, लघवश्च ते सिद्धान्ताश्च-लघुसिद्धान्ताः, लघुसिद्धान्तानां कौमुदीव- लघुसिद्धान्तकौमुदी, तां-लघुसिद्धान्तकौमुदीम् ।

( इति विग्रहः ) ।

वैयाकरणसिद्धान्तप्रकाशकत्वेन, बालानामतिदुरूहवृत्तिमहाभाष्यकैयटादाकरग्रन्थान्तरेभ्यःसिद्धान्तज्ञाने जायमानस्य क्लेशरूपसन्तापस्य शामकत्वेन च कौमुदीसादृश्यम् । कौमुदी हि-घटपटाद्यर्थं प्रकाशयति, घर्मादिसन्तापजन्यं लोकानां क्लेशं शमयति चेति प्रसिद्धमेव । 'चन्द्रिका कौमुदी ज्योत्स्ने'त्यमरः ॥

ननु ग्रन्थादौ 'नत्वा सरस्वतीं देवी'मिति मङ्गलपद्यं किमर्थं समुपनिबद्धमिति वाच्यं, 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाण्यायुष्मत्पुरुषकाणि-'इति महाभाष्योक्तेः, 'समाप्तिकामो मङ्गलमाचरेत्' इति शिष्टाचारानुमितश्रुतेश्च विघ्नध्वंसपूर्वकसमाप्त्यादिकामनया मङ्गलार्थं, 'मा च्छिष्या अप्येवं कुर्यु'रिति शिष्यशिक्षार्थं च ग्रन्थादौ तदुपन्यासात् ।

नन्वेवमपि 'पाणिनीयप्रवेशाये'त्यादिकं किमर्थमिति चेन्न, ग्रन्थादाववश्यं वक्तव्यस्य अनुबन्धचतुष्टयस्य सूचनायैव तदुपन्यासात् । तदुक्तं

'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते ।'
'सर्वस्यैव हि शास्त्रस्य कर्मणो वाऽपि कस्यचित् ॥
यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते' ? ॥
किञ्च ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते ।
ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥' इति ।

'लघुसिद्धान्तकौमुदी'त्यन्वर्थसञ्ज्ञया च लघवो वैयाकरणसिद्धान्ता विषयाः, पाणिनीयानां स्वल्पानां वैयाकरणसिद्धान्तानामनायासेन ज्ञानं प्रयोजनम्, अनेन ग्रन्थेन च सह सिद्धान्तानां प्रतिपाद्यप्रतिपादकभावः सम्बन्धः, अधीतकोशादिर्वैयाकरणस्वल्पसिद्धान्तजिज्ञासुर्बालश्चाधिकारीति अनुबन्धचतुष्टयं सूचितम् ।

# अथ सञ्ज्ञाप्रकरणम् ।

**अइउण् १ । ऋलृक् २ । एओङ् ३ । ऐऔच् ४ । हयवरट् ५ । लण् ६ । ञमङणनम् ७ । झभञ् ८ । घढधष् ९ । जबगडदश् १० । खफछठथचटतव् ११ । कपय् १२ । शषसर् १३ । हल् १४ ।**

इति माहेश्वराणि सूत्राण्यणादिसञ्ज्ञाऽर्थानि ।

तत्रादौ पाणिनीयव्याकरणशास्त्रमूलभूतानि महेश्वरोपदिष्टानि चतुर्दश सूत्राणि निर्दिशति–अइउणित्यादि । तत्र **अइउण्**–प्रथमान्तं, सञ्ज्ञासूत्रम् । **ऋलृक्**–प्रथमान्तं सञ्ज्ञासूत्रम् । **एओङ्**–प्रथमान्तं सञ्ज्ञासूत्रम् । **ऐऔच्**–प्रथमान्तं सञ्ज्ञासूत्रम् । **हयवरट्**–प्रथमान्तं सञ्ज्ञासूत्रम् । **लण्**–प्रथमान्तं सञ्ज्ञासूत्रम् । एवमग्रेऽपि बोध्यम् ।

'हयवर'डित्यत्र हकारोपदेशः अट्–अश्–हश्–इण्ग्रहणेषु हकारस्यापि ग्रहणाय । तत्फलन्तु–'अर्हेणे'त्यत्र 'अड्व्यवायेऽपी'ति णत्वम् । 'देवा हसन्ती'त्यत्र 'भोभगो' इति रोर्यत्वम् । 'देवो हसती'त्यत्र च 'हशि चे'त्युत्वम् । 'लिलिहिध्वे' 'लिलिहिढ्वे' इत्यत्र 'विभाषेट' इति ढत्वविकल्पः ।

'ह'लिति सूत्रं च वल्–रल्–झल्–शल्षु हकारग्रहणार्थम् । तत्फलञ्च 'रुदिही'त्यत्र 'रुदादिभ्यः सार्वधातुके' इति वलादित्वनिबन्धन इट् । 'स्निहित्वा–स्नेहित्वे'त्यत्र 'रलो व्युपधा'दिति वा कित्त्वम् । 'अदाग्धा'मित्यत्र 'झलो झली'ति सकारलोपः । 'अलिक्षत्' 'अघुक्ष'दित्यत्र 'शल इगुपधा'दिति सिचः क्सादेशः । तदुक्तं

'हकारो द्विरुपात्तोऽयमटि शल्यपि वाञ्छता ।
अर्हेणाऽधुक्षदित्यत्र द्वय सिद्धं भविष्यति' ॥ इति ।

नन्विमानि सूत्राणि मुनित्रयानुक्तत्वादप्रमाणमित्यत आह–इतीति । **इति**=इमानि पूर्वोक्तानि 'अइउ'णित्यादिचतुर्दश सूत्राणि । **माहेश्वराणि**=

१ अइउण् ऋलृक् आदि ये जो पूर्वोक्त १४ चौदह सूत्र हैं वे श्रीशिवजी महाराज की कृपा से भगवान् पाणिनिजी को अणादिसंज्ञा बनाने के लिए ( मन्त्रवत ) मिले हैं ।

महेश्वरादागतानि । महेश्वरवरप्रसादाद्भगवता पाणिनिना सम्प्राप्तानि । एवञ्चैवमानुपूर्वीका श्रुतिरेषा महेश्वरप्रसादात्पाणिनिना लब्धेति सूचितम् । तदुक्तं नन्दिकेश्वरेण स्वकृतशिक्षायाम्-

'नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्च(१४)वारम् ।
उद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥ इति ।

अत्र सर्वत्र सूत्रेष्वनुबन्धाश्च महेश्वरकृता एव । तदुक्तम्

'अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम् ।
धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये' ॥ इति ।

किञ्च पाणिनीयशिक्षायां

'येनाऽक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः' ॥ इति ।

सूत्रलक्षणन्तु

'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ॥' इति ।

तच्च सूत्रं षड्विधम् । तदुक्तं

'सञ्ज्ञा च परिभाषा च विधिर्नियम एव च ।
अतिदेशोऽधिकारश्च षड्विधं सूत्रमुच्यते ॥' इति ।

तत्र च शक्तिपरिच्छेदकत्वं सञ्ज्ञासूत्रत्वम् । स्वदेशे अनाहार्याऽप्रामाणिकज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकबोधोपयोगिबोधाऽतिरिक्तबोधाऽजनकत्वे सति विध्येकवाक्यतया साधुत्वप्रकारकबोधजनकत्वं परिभाषासूत्रत्वम् । ( अधिकारवारणाय सत्यन्तम् )। साक्षाल्लक्ष्यधर्मिकसाधुत्वप्रकारकबोधजनत्वं विधिसूत्रत्वम् । अन्यनिवृत्तिफलकत्वे सति सिद्धार्थप्रतिपादकत्वं नियमसूत्रत्वम् । आरोपप्रतिपादकत्वमतिदेशसूत्रत्वम् । वतिघटितत्वं वा तत्त्वम् । स्वस्मिन् फलशून्यत्वे ( =स्वदेशे वाक्यार्थशून्यत्वे ) सति उत्तरोत्तरसम्बन्धित्वम् अधिकारत्वमिति तत्तल्लक्षणं बोध्यम् ।

एषां चतुर्दशसूत्राणां च क्रमबोधकत्वेऽपि क्रमस्य सञ्ज्ञाद्वारैवोपयोगादादिरन्त्येन सहेतेत्यनेन आदिरकारादिः अन्त्येनेता ( तत्सदृशेन ) णकारादिना सहोच्चार्यमाण आद्यन्ताक्षिप्तानां मध्यगानां स्वस्य च सञ्ज्ञेत्येवमेकवाक्यतया अणादिपदशक्तिनियामकत्वेन सञ्ज्ञासूत्रत्वं बोध्यम् ।

एषामन्त्या इतः ।

अइउणित्यादौ स्पष्टप्रतिपत्तये सौत्रत्वाच्च न स्वरसन्धिः, अन्यथा आद्गुण इति गुणेऽयादेशे च 'अयुण्'इति 'अ-उ'णिति च प्रसज्येत, तथा च वर्णानां स्पष्टं प्रतिपत्तिर्न स्यात् । अनुकरणत्वेन सौत्रत्वाच्च वर्णेभ्यो न विभक्त्युत्पत्तिः।

ननु 'वर्णात्कार'इत्यनेन ( वर्णविशिष्टात्कारप्रत्ययो भवति, वैशिष्ट्यञ्च 'स्वनिष्ठवर्णत्वव्याप्याऽत्वादिजात्यवच्छिन्नविशेष्यताप्रयोजकतापर्याप्त्यधिकरण-घटितत्व,' 'स्वनिष्ठवर्णत्वव्याप्याऽत्वादिजात्यवच्छिन्नविशेष्यताप्रयोजकता-पर्याप्त्यधिकरणेतराऽघटितत्वो'भयसम्बन्धेनेत्यर्थकेन )-अइउणित्यादौ प्रत्येकं वर्णेभ्यः कारप्रत्ययापत्तिरिति चेन्न ; 'कृत्यल्युटो बहुल'मित्यत्र 'बहुल'मिति योगविभागाद्बाहुलकात्तदनुत्पत्तेः । परेतु 'वर्णात्कार'इत्यस्य वर्णमात्रबोधका-दित्यर्थः, 'सनकादीष्टसिद्ध्यर्थतया च प्रकृते वर्णमात्रबोधकत्वाऽभावेन न कार-प्रत्ययः, 'अकारो वासुदेवः स्या'दित्यादि तु 'किकार' 'सुकारः' इत्यादिभाष्य-प्रयोगवत् कृधातोर्बोधनार्थात् कर्मण्यणि साधु-इति तु गौडाः ।

नन्वेषां सूत्राणां वैयाकरणलघुसिद्धान्तप्रकाशने उपयोगाऽभावादिह तदुपन्यासो व्यर्थ इत्यत आह- **अणादीति** । अण् आदिर्यासां ताः अणादयः, अणादयश्च ताः सञ्ज्ञाश्च-अणादिसञ्ज्ञाः, अणादिसञ्ज्ञा **अर्थः**= प्रयोजनं येषान्तानि अणादिसञ्ज्ञार्थानि । एवञ्च लाघवेन व्याकरणशास्त्र-प्रवृत्तये आश्रीयमाणासु अणादिसञ्ज्ञासु उपयोगादेषां सूत्राणामादाविहो-पन्यासो न व्यर्थ इति सूचितम् ।

ननु कथमेषां सूत्राणामणादिसञ्ज्ञार्थत्वमत आह-**एषामिति** । **एषां**= पूर्वोक्तानामइउणित्यादिचतुर्दशसूत्राणाम् । **अन्त्याः**=अन्ते भवा णकारादि-वर्णाः । **इतः**=वक्ष्यमाणसूत्रेण 'हलन्त्य'मित्यनेन इत्सञ्ज्ञका भवन्ति । एवञ्च णकारस्येत्सञ्ज्ञकत्वादादिरन्त्येनेति सूत्रप्रवृत्त्याऽणादिप्रत्याहारसिद्धिः स्पष्टैव ।

ननु 'हयवर'डित्यादौ पुनः पुनरकारोच्चारणं व्यर्थं, किञ्च हशादि-प्रत्याहारेऽकारघटितानामेव हादीनां ग्रहणे 'रामो हिनस्ती'त्यादावुत्वाना-

१ इन चौदह सूत्रों के अन्त्यके ['ण्' 'क्' 'ङ्' 'च्' 'ट्' 'ण्' आदि] अक्षरों की आगे कहे जाने वाले 'हलन्त्यम्' इस सूत्र से इत्सञ्ज्ञा ['इत्' यह नाम] होती है ।

हकारादिष्वकार उच्चारणार्थः[1] । लणमध्ये त्वित्संज्ञकः[2] ॥

हलन्त्यम् १ । ३ । ३ ॥

उपदेशेऽन्त्यं हलित्स्यात्[3] । उपदेश आद्योच्चारणम्[4] ॥

पत्तिरत आह—हकारादिष्विति । अकारः=अत्वजात्यवच्छिन्नवर्णमात्रम् । अकारा इति यावत् । प्रत्येकाभिप्रायेण जात्यभिप्रायेण वैकवचनम् । उच्चारणमेव अर्थः=प्रयोजनं यस्यासौ—उच्चारणार्थः । एवञ्च हकारादीनां सुखेनोच्चारणायैव तत्र पुनःपुनरकारोच्चारणम्, अन्यथा 'ह्य्व्र्ट्' इत्येवमुच्चारणे क्लेशापत्तिरिति भावः । किञ्च हशादिप्रत्याहारे हकारमात्रस्यैव ग्रहणं नाऽकारमात्रघटितस्येति न 'रामो हिनस्ती'त्यादावुत्वानापत्तिरित्यपि बोध्यम् ।

'र' प्रत्याहारसिद्धये लणमध्यस्थाऽकारस्येत्सञ्ज्ञाम्प्रतिजानीते—लणमध्ये इति । लकारोत्तरवर्त्यकारोऽनुनासिक इति तस्य 'उपदेशेऽजनुनासिक इ'दित्यनेनेत्सञ्ज्ञा भवतीत्यर्थः । अन्यार्थं नीयमानस्य दध्यादेर्मङ्गलार्थत्वमिव लणमध्यस्थाऽकारस्योच्चारणार्थत्वमपीत्यप्यवधेयम् ।

हलन्त्यमिति । हल्—प्रथमान्तम्, अन्त्य—प्रथमान्तम् । द्विपदमिदं सूत्रम् । तत्र हल्शब्दो नपुंसकलिङ्गोऽप्यस्ति, 'अन्त्य'मिति नपुंसकपदसामानाधिकरण्यात् । 'उपदेशेऽजनुनासिक इ'दिति पूर्वसूत्रादुपदेशे इति इदिति चानुवर्त्तते । तदाह—उपदेशे इति । इत्स्यात्=इत्सञ्ज्ञकं स्यात् । सञ्ज्ञाप्रकरणात् ।

अत्राऽन्योन्याश्रयपरिहारस्तु हलन्त्यमित्यस्याऽऽवृत्त्या हल्प्रत्याहारमादौ संसाध्य सिद्धान्तकौमुद्यां प्रदर्शितस्ततं एवावगन्तव्यः ।

यद्यपि भाष्ये वृत्त्यादौ च 'उपदिश्यतेऽनेनेत्युपदेशः=शास्त्रम् । तच्च शासनकरणं, प्रत्यासत्त्या एतच्छास्त्रीयधात्वागमप्रातिपदिकप्रत्याहारसूत्रप्रत्ययादेशरूप'मित्येव व्याख्यातं, तथापि तत्रादत्तव्यं, ल्युटा बाधेन

१ हकार यकार वकार आदि वर्णों में जो अकार है वह उच्चारण के ही लिए है, हल् आदि प्रत्याहारों में ग्रहण के लिए नहीं है । २ लण् के मध्य में जो अकार है वह तो इत्संज्ञक है । (और उससे 'र' प्रत्याहार बनता है) । ३ उपदेश अवस्था में जो अन्त्य हल सो इत्संज्ञक होता है । अर्थात् उस अक्षर का 'इत्' यह नाम होता है ।

४ भगवान् पाणिनि कात्यायन पतञ्जलि और श्रीमहेश्वरकर्तृक जो अज्ञातस्वस्वरूपज्ञापक प्रथम उच्चारण सो यहाँ आद्योच्चारण कहलाता है ।

सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र ॥

**अदर्शनं लोपः १ । १ । ६० ॥**

प्रसक्तस्याऽदर्शनं लोपसञ्ज्ञं स्यात् ॥

---

करणे घञो दुर्लभत्वात् । असञ्ज्ञात्वात्पुंसि सञ्ज्ञायामिति घस्याऽपि च दुर्लभत्वात् । असञ्ज्ञात्वादेव 'हलश्चे'ति घञोऽप्यप्रवृत्तेश्च । एवञ्च भावे घञा उपदेशनम्-उपदेश इत्येवार्थः । उपशब्दश्च आद्यार्थः, दिशिरुच्चारणार्थः । एवञ्च 'उपदेश आद्योच्चारण'मिति फलितमित्याह-**आद्योच्चारणमिति** । आद्यमुच्चारणमित्यर्थः । तच्च-प्रत्यासत्त्या व्याकरणशास्त्रप्रवर्त्तकानामाचार्याणा तत्रभवतां पाणिनि-कात्यायन-पतञ्जलि-महेश्वराणामेव ग्राह्यम् । आद्यत्वञ्च-अज्ञातस्वस्वरूपज्ञापकत्वम् । तच्च 'अइउण्' इत्यादीनामस्त्येवेति भाव ।

केचित्तु उपदेशपदे करणकर्मोभयव्युत्पत्त्या **'धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् । आगमप्रत्ययादेशा उपदेशाः प्रकीर्त्तिताः'** इति परिगणनमाहुः, तन्न युक्तम्, एषामुपदेशसञ्ज्ञाया भाष्यादावनुक्तेः । योगस्य स्वीकारे तु परिगणनस्यैव व्यर्थत्वम् । 'लोपश्चेतिद्विशकारको निर्देश., द्वितीयः शकार इ'दिति भाष्यविरोधश्च । नह्यनेन किञ्चिदुपदिश्यते । एवञ्च मूलोक्तमेव युक्तम् । 'आदेच उपदेशे' 'उपदेशेऽत्वत' इत्यादावाद्योच्चारणस्यैवोपदेशपदार्थतायाः प्रसिद्धेश्च । **शेखरकृतस्तु** करणे घञा धातुप्रत्ययनिपातागमादेशपरमेवात्रोपदेशपदमित्यभिप्रयन्ति ।

ननु 'हलन्त्य' मिति सूत्रस्य-'उपदेशेऽन्त्यं हलित्स्या'दिति वृत्तिरधिकाऽत आह **सूत्रेष्विति** । व्याकरणसूत्रेषु-'हलन्त्य'मित्यादिषु, अदृष्टं यत्पदं (उपदेशे इत् इत्यादि)-**तत्-सूत्रान्तरात्**=पूर्वसूत्रात्, (क्वचिदुत्तरसूत्राच्च)-अनुवर्त्तनीयमित्यर्थः । एवञ्च 'उपदेशेऽजनुनासिक' इति पूर्वसूत्रादुपदेशपदेत्पदयोरनुवृत्तिरत्रेति न वृत्तेरसङ्गतिरिति भावः ।

**अदर्शनमिति । अदर्शनं**-प्रथमान्तं, **लोपः**-प्रथमान्तम् । 'स्थानेऽन्तरतम' इत्यत. 'स्थाने'इत्यनुवर्त्तते । 'प्रसङ्गे सती'ति तदर्थः । तदाह-

१ सूत्रों में नहीं देखे गये जो पद वे सभी जगह पीछे के सूत्रों से ( कहीं २ आगे के सूत्रों से भी ) अनुवर्त्तित जानना ।

२ प्रसक्त-( विद्यमान ) का जो अदर्शन सो लोपसंज्ञक होता है ।

## तस्य लोपः १ । ३ । ९ ॥

तस्य=इतो लोपः स्यात् । णादयोऽणाद्यर्थाः ।

## आदिरन्त्येन सहेता १ । १ । ७१ ॥

---

प्रसक्तस्येति । शास्त्रतोऽर्थतश्च प्रसक्तोच्चारणस्येत्यर्थः । विद्यमानस्येत्यर्थो वा । अदर्शनम्=उच्चारणाऽभावः । अत्र हि दृशिर्ज्ञानसामान्ये । तत्र ज्ञानस्याऽवर्जनीयत्वेन तया ज्ञानसामग्रीमध्यगता उच्चारणकृता सत्ता निषिध्यते । उच्चारणाऽभावरूपस्याऽर्थस्यैषा लोपसञ्ज्ञा, व्याख्यानात् ।

तस्येति । तस्य-षष्ठ्यन्तम्, लोपः-प्रथमान्तम् । इत्सञ्ज्ञाप्रकरणान्ते हि इदं सूत्रम्, तत्र तच्छब्दः सन्निहितमितं परामृशति, तदाह-तस्येत इति । तस्य इत्यस्यार्थः 'इत' इति । इत्सञ्ज्ञकस्येत्यर्थः । उपदेशेऽजनुनासिक इ'दिति सूत्रादित्पदानुवृत्त्या षष्ठ्या विपरिणामेन च 'इतो लोप' इत्यर्थस्य सम्भवेऽपि 'तस्ये'ति ग्रहण-यस्य इत्सञ्ज्ञा तस्य सर्वस्य लोपार्थम् । तेन 'आदिर्ञिटुडव' इत्यनेनेत्सञ्ज्ञकानां ञिटुडूनां सर्वेषां लोपः सिध्यति । अन्यथाऽलोन्त्यपरिभाषयाऽन्त्यस्यैव ( इकारोकारादेः ) लोपः स्यात् । नच 'नानर्थकेऽलोन्त्यविधि'रित्ति निषेधादेव नान्त्यस्य लोप इति 'तस्ये'ति पदं व्यर्थमिति वाच्यं, तस्याः परिभाषाया भाष्ये प्रत्याख्यातत्वात् ।

ननु णादीनां हलन्त्यमित्यनेन इत्सञ्ज्ञायां लोपापत्तिरत आह णादय इति । 'अइउण्' 'ऌलृक्' इत्यादिचतुर्दशसूत्रीघटका इत्सञ्ज्ञका अन्त्या णादयो लकारान्ता वर्णाः-अणाद्यर्थाः=अण्-अक्-अच्-इत्यादिप्रत्याहारसिद्ध्यर्थाः, न तु लोपार्था इत्यर्थः । एवञ्च तेषु'तस्य लोप' इति लोपो न प्रवर्त्तते इत्याशयः ।

ननु कथमत्राऽणादिप्रत्याहारसिद्धिरत आह-आदिरिति । आदिः-

---

१ जिसकी इत्संज्ञा होती है ( 'इत्' यह नाम होता है ) उसका लोप ( अदर्शन ) होता है ।

२ 'अइउण्' आदि सूत्रों में जो इत्सञ्ज्ञकणकार आदि हैं वे 'अण्' 'अक्' आदि प्रत्याहारों की सिद्धि के लिए हैं, लोप के लिए नहीं हैं । [ अत. इत्सञ्ज्ञा होने पर भी उनका लोप नहीं होता है ] ।

[1]अन्त्येनेता सहित आदिर्मध्यगानां स्वस्य च सञ्ज्ञा स्यात् । [2]यथा-'अण्'-इति अइउवर्णाना सञ्ज्ञा । [3]एवमच्-हल्-अलित्यादयः ।

प्रथमान्तम्, अन्त्येन-तृतीयान्तं, सह-अव्ययपदम्, इता-तृतीयान्तम् ।

**मध्यगानामिति** । आद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आक्षिप्यते, तस्य च युगपल्लक्ष्ये प्रयोगाऽभावात्तदवयवेष्ववतरन्ती सञ्ज्ञा मध्यगेषु विश्राम्यति, नत्वाद्यन्तयोः, अणादिसञ्ज्ञास्वरूपान्तर्भावेण तयोः पारार्थ्यनिर्णयात् ।

**स्वस्येति** । 'स्वं रूप'मित्यनुवृत्तेः । तत्र स्वं रूपं चादेरेव गृह्यते नान्त्यस्य, अन्त्येनेत्यप्रधानतृतीयानिर्देशादन्त्यस्याऽप्रधानत्वात्, सर्वनाम्नाञ्चोत्सर्गतः प्रधानपरामर्शित्वात् । आदिरेव हि तत्र प्रधानमित्याशयः ।

**यथेति** । 'हलन्त्यम्' 'आदिरन्त्येने'त्यनयोः प्रवृत्त्येत्यर्थः । 'अइउण्' इत्यत्र हि 'हलन्त्य'मित्यनेनान्त्यणकारस्येत्सञ्ज्ञा । एवञ्च अन्त्य इत् णकारः, तत्सहित आदिः-अकार -'अ-ण्'इति । तदिदम्-अण्पदं मध्यगयोः-इ-उवर्णयोः, स्वस्य-अकारस्य च सञ्ज्ञेति-अण्पदेन-अइउवर्णानां ग्रहणमिति भावः । एवं हलादयः सर्वे प्रत्याहाराः साधनीयाः ।

**एवम्**=अण्प्रत्याहारवत् । '**इत्यादय**' इत्यस्य 'प्रत्याहारा बोध्या' इति शेषः । आदिपदेन-अक्-अट्-अश्-हश्-इत्यादेः परिग्रहः ।

इमे प्रत्याहाराश्च एकचत्वारिंशत् (४१) । तदुक्तम्-

**'एकस्मान्ङञणवटा, द्वाभ्यां षस्त्रिभ्य एव कणमाः स्युः ।**
**ज्ञेयौ च-यौ चतुर्भ्यो, रः पञ्चभ्यः, श-लौ षड्भ्यः ॥ इति ।**

तत्र चय्प्रत्याहारस्य 'चयो द्वितीया' इत्यत्र दर्शनात् द्विचत्वारिंशत्प्रत्याहारा इत्यन्ये । 'पाणिनिकात्यायनव्यवहृताना चतुर्दशसूत्रीसिद्धाना प्रत्याहाराणामियं सङ्ख्ये'त्यपि बोध्यम् । तेन 'ञमन्ताड्ड' इत्यादावुणादौ ञमादिप्रत्याहाराणामाधिक्येऽपि न क्षतिः ।

१ अन्त्य इत् सहित जो आदिवर्ण सो मध्यगवर्णों की प्रत्याहार संज्ञा होता है, और 'स्व' करके आदि ( वर्ण ) की भी प्रत्याहार संज्ञा होता है ।

२ जैसे 'अण्' यह 'अइउ' इन तीन वर्णों की संज्ञा [ नाम ] होता है ।

३ ऐसे ही अच् हल् अल् इन प्रत्याहारों में भी जानना ।

ऊकालोऽज्झ्रस्वदीर्घप्लुतः १ । २ । २७ ॥

उश्च ऊश्च ऊ ३ श्च वः । वां काल इव कालो यस्य सोऽच् क्रमाध्रस्वदीर्घप्लुतसञ्ज्ञः स्यात् ॥[1]

स प्रत्येकमुदात्तादिभेदेन त्रिधा ।[2]

ऊकाल इति । ऊकालः प्रथमान्तम्, अच् प्रथमान्तम्, ह्रस्वदीर्घप्लुतः प्रथमान्तम् । ऊकाल इति । उश्च ऊश्च ऊ ३ श्च वः । वः कालो यस्य असौ-ऊकाल. । अत्र हि ऊशब्दस्य स्वोच्चारणकालसदृशे लक्षणा । एवञ्च ऊशब्दस्य कालशब्देन सह सामानाधिकरण्यमुपपद्यते । तत्फलितमाह वां काल इति । अत्र वा काल इव कालो यस्येति न विग्रहो, व्यधिकरणत्वात् । 'काल' इति जात्याख्यायामेकवचनम् ।

'व' इति च 'ऊ' शब्दस्य जसि रूपम् । 'वा'मिति च 'ऊ' शब्दस्य आमि रूपम् । कुक्कुटोच्चरिते शब्दे उकारे एकद्वित्रिमात्राणां प्रसिद्धेरकारादयो नोक्ताः ।

ह्रस्वश्च दीर्घश्च प्लुतश्च एषां समाहारः-ह्रस्वदीर्घप्लुतः । सौत्रं पुंस्त्वम् । इतरेतरद्वन्द्वे सौत्रमेकवचनमिति वा ।

एकमात्रिकोऽच् ह्रस्वसञ्ज्ञः, द्विमात्रिकोऽच् दीर्घः, त्रिमात्रिकः प्लुत इत्यर्थः ।

अत्र च सूत्रे ऊ-उ-ऊ ३' इत्येव तु न च्छेदः, एवं सति द्विमात्रिकस्य ह्रस्वत्वे एकमात्रिकस्य दीर्घत्वे च 'प्वादीनां ह्रस्व' इत्यस्य 'अतो दीर्घ' इत्यस्य च वैयर्थ्यापत्तेः । 'उ-ऊ ३ ऊ' इत्येवमपि न प्रश्लेष, एवं सति द्विमात्रिकस्य प्लुतत्वेन 'ओमभ्यादाने' इति प्लुतविधेर्वैयर्थ्यापत्तेः, ओमित्यस्य द्विमात्रिकतया तस्येदानीं प्लुतत्वस्य स्वतः सिद्धत्वात् । नापि 'ऊ ३ ऊ उ' इति एकमात्रिकस्यान्तेच्छेदः, 'विभाषा पृष्टप्रतिवचने हे'रिति हेरिकारस्य प्लुतविधेरानर्थक्यापत्तेः ।

क्रमादिति । यथासङ्ख्यसूत्रलभ्यमिदम् । लौकिकन्यायसिद्धं वा ।

सः-लब्धह्रस्वादिसञ्ज्ञकोऽच् ,प्रत्येकमुदात्तादिभेदेन=उदात्तानुदात्त-

१ एकमात्रिक द्विमात्रिक त्रिमात्रिक जो उकार, उसके उच्चारण काल की तरह उच्चारण काल है जिसका ऐसा जो अच् सो क्रम से ह्रस्व दीर्घ प्लुत संज्ञक होता है । अर्थात् एकमात्रिक ह्रस्व, द्विमात्रिक दीर्घ, और त्रिमात्रिक प्लुत होता है ।

२ लब्ध हुई है ह्रस्व दीर्घ प्लुत संज्ञा जिसको ऐसा जो अच् सो प्रत्येक-अर्थात् एक-एक के प्रति उदात्त अनुदात्त स्वरित भेद करके तीन-तीन प्रकार का है ।

## उच्चैरुदात्तः । १ । २ । २९ ॥

[ ताल्वादिषु सभागेषु स्थानेषूर्ध्वभागे निष्पन्नोऽजुदात्तसञ्ज्ञः स्यात्। ]

## नीचैरनुदात्तः १ । २ । ३० ॥

[ताल्वादिषु सभागेषु स्थानेष्वधोभागे निष्पन्नोऽजनुदात्तसंज्ञः स्यात्।]

## समाहारः स्वरितः १ । २ । ३१ ॥

स्वरितभेदेन ( उदात्तत्वानुदात्तत्वस्वरितत्वधर्मैः )-त्रिधा=त्रिप्रकारक इत्यर्थः।

तदित्थं (१) ह्रस्व उदात्तः, (२) ह्रस्वोऽनुदात्तः, (३) ह्रस्वः स्वरितः। (४) दीर्घ उदात्त, (५) दीर्घोऽनुदात्तः, (६) दीर्घः स्वरितः। (७) प्लुत उदात्तः, (८) प्लुतोऽनुदात्तः, (९) प्लुतः स्वरितः। इति नवभेदाः।

एवञ्च अकारादीनां प्रत्येकं नव भेदा इति लब्धम्।

तत्र उदात्तसञ्ज्ञासूत्रमाह-**उच्चैरिति**। उच्चैः-अव्ययपदम्, **उदात्तः**-प्रथमान्तम्। प्रकृते उच्चैस्त्वं न श्रवणकृतम्, उपांशु उच्चरिते उदात्तेऽव्याप्तेः, किन्तु स्थानकृतम्। उच्चैरिति चाधिकरणशक्तिप्रधानम्। अधिकरणत्वञ्च उच्चारणक्रियानिरूपितम्। 'ऊकाल' इत्यतोऽजित्यनुवर्त्तते। एवञ्च ताल्वादीनाम् ऊर्ध्वभागे निष्पन्न उच्चरितोऽच् उदात्तसञ्ज्ञ-इति लब्धम्। ऊर्ध्वाऽधोभागव्यवहारोहि ताल्वादिस्थानानां सभागत्वे एव सम्भवति।

अनुदात्तसञ्ज्ञासूत्रमाह-'**नीचै**'रिति। अत्रापि नीचैरित्यधिकरणशक्तिप्रधानम्। पूर्ववदेवोच्चारणक्रियानिरूपितमधिकरणत्वम्। एवञ्च-ताल्वादीनामधोभागे निष्पन्नोऽजनुदात्तसञ्ज्ञ इत्यर्थो बोध्यः।

स्वरितसञ्ज्ञासूत्रमाह **समाहार इति**। पूर्वसूत्रेभ्य 'उदात्त' इति, 'अ'जिति चानुवर्त्तते। 'उदात्त' इति 'अनुदात्त' इति च धर्मप्रधानो निर्देशः, षष्ठ्या च तयोर्विपरिणामः। समाहार इति चाधिकरणे घञ्। तदेवम् 'उदात्तत्वानुदात्तत्वयोर्धर्मयोर्यस्मिन्नचि सम्मेलनं सोऽच् स्वरितसञ्ज्ञः' इत्यर्थो लभ्यते।

१ भाग सहित जो तालु कण्ठ आदि स्थान उनमें ऊर्ध्वभाग में निष्पन्न जो अकार आदि अच्, सो उदात्त सञ्ज्ञक होय। २ भागसहित जो ताल्वादिस्थान, उनमें अधो भाग में निष्पन्न जो अच् सो अनुदात्त संज्ञक होय।

[1] उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरितसञ्ज्ञः स्यात् ।

स [2] नवविधोऽपि प्रत्येकमनुनासिकत्वाऽननुनासिकत्वाभ्यां द्विधा।

**मुखनासिकावचनोऽनुनासिकः १ । १ । ८ ॥**

[3] मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसञ्ज्ञः स्यात् ।

तदित्थम् अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टादश भेदाः ।

स इति । सः=लब्धह्रस्वोदात्तादिसञ्ज्ञकोऽच् पूर्वोक्तरीत्या नवविधोऽपि, प्रत्येकम् **अनुनासिकत्वाननुनासिकत्वाभ्याम्**=अनुनासिकत्वेन, अननुनासिकत्वेन च धर्मेण, **द्विधा**-द्विप्रकारक इत्यर्थः । एवञ्चाऽचामष्टादशभेदलाभः ।

अनुनासिकसञ्ज्ञां दर्शयति **मुखेति** । मुखेन सहिता मुखसहिता, मुखसहिता चासौ नासिका च-मुखनासिका । उच्यते (-उच्चार्यते-) असौ वचनः । कर्मणि ल्युट् । मुखनासिकया वचनः-मुखनासिकावचन इति विग्रहः । अनुनासिकभिन्नश्चाऽननुनासिकः ।

ननु किं सर्वेषामेवाऽचामविशेषणाऽष्टादश भेदाः ?, नेत्याह-**तदित्थमिति** । 'ऊकालोऽच्' 'उच्चैरुदात्तः' 'नीचैरनुदात्तः', 'समाहारः स्वरितः' 'मुखनासिकावचन' इति पञ्चसूत्रीप्रवृत्त्याऽक्षु यल्लब्धं तत्, इत्थम्=अमुना प्रकारेण-वेदितव्यमित्यर्थः । **भेदाः**=प्रकाराः ।

ते च-ह्रस्वोदात्ताऽनुनासिकः, ह्रस्वोदात्तानुनासिकः, ह्रस्वानुदात्ताऽनुनासिकः, ह्रस्वानुदात्तानुनासिकः, ह्रस्वस्वरितानुनासिकः, ह्रस्वस्वरितानुनासिकः । इति ह्रस्वेषु षट् ।

दीर्घोदात्तानुनासिक, दीर्घोदात्तानुनासिकः, दीर्घानुदात्तानुनासिकः, दीर्घानुदात्तानुनासिकः, दीर्घस्वरितानुनासिकः, दीर्घस्वरिताननुनासिकः । इति दीर्घेषु षट् ।

१ उदात्तत्व, अनुदात्तत्व ये ( दो ) वर्णों के धर्म, इकट्ठे किए जाएँ जिसमें, ऐसा जो अच् सो स्वरितसञ्ज्ञक होय ।

२ लब्ध हुई है ह्रस्वोदात्तादि सञ्ज्ञा जिसको ऐसा जो अच् सो नौ-प्रकार का होकर के भी प्रत्येक अर्थात् एक एक के प्रति अनुनासिकत्व अननुनासिकत्व भेद से दो दो प्रकार का होता है । ३ मुखसहित नासिका से उच्चार्यमाण जो ढकार आदि वर्ण सो अनुनासिकसञ्ज्ञक होता है ।

ऌवर्णस्य द्वादश, तस्य दीर्घाभावात्। एचामपि द्वादश, तेषां ह्रस्वाऽभावात्॥

**तुल्यास्यप्रयत्नं सवर्णम् । १ । १ । ९ ॥**

ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसञ्ज्ञं स्यात्। *[3]ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम्।

[13]प्लुतोदात्तानुनासिकः, [14]प्लुतोदात्तानुनासिकः, [15]प्लुतानुदात्तानुनासिकः, [16]प्लुतानुदात्तानुनासिकः, [17]प्लुतस्वरितानुनासिकः, [18]प्लुतस्वरितानुनासिकः- इति प्लुतेषु षडिति रीत्याऽकारादीनामष्टादश भेदा बोध्याः।

**तस्येति।** **तस्य**=ऌवर्णस्य चिन्त्यतस्य। [1]'होतृ-ऌकार' इत्यत्र सवर्णदीर्घे होतॄकार इति दीर्घऋकारघटितो भाष्यप्रयोगोऽत्र ( ऌवर्णस्य दीर्घाऽभावे ) मानम्। ईषस्पृष्टस्य ऌकारस्य दीर्घत्वन्तु इष्टमेव।

**ह्रस्वाऽभावादिति।** एचो यदि ह्रस्वाः स्युस्तर्हि त एव 'अइउ' इतिवद्वर्णसमाम्नाये पठ्येरन्, एवं च ह्रस्वा एचो न सन्त्येवेति लब्धम्।

'अणुदित्सवर्णस्ये'ति ( अष्टादशानामकारेकारादीनाम् ) 'अ-इ-उ' इत्यादिसञ्ज्ञां वक्ष्यन् तदुपयोगिनीं सवर्णसञ्ज्ञां तावदाह **तुल्येति।**

तोलनं तुला, तुलया समितं-तुल्यम्। तुल्यश्च तुल्यश्च तुल्यौ। अस्यन्ति-उच्चारयन्ति-वर्णान् अनेनेति-आस्यम्। आस्ये भवम्-आस्यम्। प्रकृष्टो यत्न-प्रयत्न। आस्यश्च प्रयत्नश्च-आस्यप्रयत्नौ, तुल्यावास्यप्रयत्नौ तस्य तत्-**तुल्यास्यप्रयत्नम्**-प्रथमान्तम्। **सवर्णं**-प्रथमान्तम्।

अत्र आस्यशब्दो न मुखमात्रपरः, सर्वेषु वर्णेषु आस्यस्य जनकस्य तुल्यतया तदुपादानस्य वैयर्थ्यापत्तेः, किन्तु आस्यपदम्-आस्यभवस्थानपरम्, प्रयत्नस्य पृथगुपादानात्। वर्णोत्पत्त्यव्यवहितप्राग्भावित्वरूपप्रकर्षवत्त्वात्प्रकृष्टो यत्न इह आभ्यन्तर। 'कण्ठादी'ति वक्तुमुचित, शिक्षाया कण्ठादित्येव स्थानाना निर्देशात्। **मिथः**=परस्परम्।

**ऋऌवर्णयोरिति।** ऋ च ऋ च रलौ, रलौ च तौ वर्णौ च ऋऌवर्णौ,

१ इस प्रकार 'अ' 'इ' 'उ' 'ऋ' इन वर्णों के (प्रत्येक के) १८-१८ भेद हैं। ऌवर्ण के १२ भेद हैं। क्योंकि वह दीर्घ नहीं है। एचों के भी १२-१२ भेद हैं, क्योंकि वे ह्रस्व नहीं हैं। २ तालवादि जो स्थान, और आभ्यन्तर जो प्रयत्न-ये जो जनकद्वय, जिस वर्ण के जनकद्वय के साथ तुल्य हों वे वर्ण परस्पर सवर्ण सञ्ज्ञक हों। ३ भिन्न स्थानिक जो ऋऌवर्ण उनकी परस्पर में सवर्ण सञ्ज्ञा होती है।

अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । लृतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः

तयोरिति विग्रहः । यद्वा ऋ च लृवर्णश्च ऋलृवर्णौ, तयोरिति विग्रहः । परिनिष्ठितविभक्त्या समास इति पक्षे तु ऋश्च लृ च ऋलृौ, तयोश्च तयोर्वर्णयोरिति विग्रहो बोध्यः । 'ऋत्यक' इति प्रकृतिभावः । अत्र च—भोः सूत्रकार ! ननु त्वया न्यूनमुक्तं, त्वया इदमपि वाच्यं, किन्तद्वाच्यं ?—भिन्नस्थानिकयोः ऋलृवर्णयोरपि सावर्ण्यं वाच्यमिति च वार्त्तिकार्थः ।

कस्य किं स्थानमित्याकाङ्क्षायामाह—अकुहेति । अश्च कुश्च हश्च विसर्जनीयश्च ते—अकुहविसर्जनीयाः, तेषामिति विग्रहः । 'अ' पदेन अष्टादशभेदा ग्राह्याः । विसर्जनीयपदेन अकाराश्रयो विसर्ग एव ग्राह्यः, साहचर्यात् । तेन 'अयोगवाहा विज्ञेया आश्रयस्थानभागिनः' इति शिक्षया न विरोधः । यद्यपि सर्ववर्णोच्चारणे कण्ठव्यापार आवश्यकस्तथापि चकाराद्युच्चारणे तालवादिव्यापारोऽपि आवश्यकः, आकाराद्युच्चारणे तु न तालवादिव्यापारावश्यकतेति तेषां कण्ठस्थानत्वोक्तिरिति भावः । कचयोर्बाह्यस्थानसाम्याऽभावान्न मिथः सावर्ण्यमित्यपि बोध्यम् ।

इचुयेति । इश्च चुश्च यश्च शश्च ते—इचुयशाः, तेषाम्—इचुयशानामिति विग्रहः । अत्र 'इ' पदेन इकारस्य अष्टादश भेदा ग्राह्याः ।

ऋटुरषेति । ऋ च टुश्च रश्च षश्च ते—ऋटुरषाः, तेषाम्—ऋटुरषाणाम् ।

लृतुलसेति । लृ च तुश्च लश्च सश्च लृतुलसाः, तेषाम्—लृतुलसानाम् । दन्तपदं तत्संयुक्तदन्तमूलप्रदेशपरम्, अतो भग्नदन्तस्याप्युच्चारणं भवति ।

उपूपेति । उश्च पुश्च उपध्मानीयश्च उपूपध्मानीयाः तेषाम् । उश्च पश्च—उपौ, उपौ ध्मायेते येनासौ—उपध्मानः=ओष्ठः, उध्माने भव उपध्मानीय इति विग्रहेण उपध्मानीयस्य ओष्ठस्थानत्वस्य लाभ इत्याशयेन तस्याऽत्र ओष्ठस्थानतोक्ता ।

ञमेति । ञश्च मश्च ङश्च णश्च नश्च—ञमङणनाः, तेषामिति विग्रहः । चेन स्वस्ववर्गानुकूलं तालवादि समुच्चीयते ।

एदैतोरिति । एच्च ऐच्च एदैतौ, तयोः—एदैतोः । अत्र तपरस्य मुखसुखार्थ-

कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्य ।

यत्नो द्विधा—आभ्यन्तरो, बाह्यश्च । आद्यः पञ्चधा—स्पृष्टेष-त्स्पृष्टेषद्विवृतसंवृतभेदात् । तत्र स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्स्पृष्ट-मन्तःस्थानाम् । ईषद्विवृतमूष्मणाम् । विवृतं स्वराणाम् । ह्रस्व-स्याऽवर्णस्य प्रयोगे संवृतम् । प्रक्रियादशायां तु विवृतमेव ।

बाह्यप्रयत्नस्त्वेकादशधा । विवारः संवारः श्वासो नादो घोषो-ऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति ।

तया लोकानुभवसिद्धार्थानुवादके तपरशास्त्राऽप्रवृत्त्या च प्लुतानामपि तत्स्थानत्वं बोध्यम् । कण्ठश्च तालु च—अनयोः समाहारः—कण्ठतालु । एवं कण्ठोष्ठमित्यपि ।

दन्ताश्च ओष्ठौ च एषां समाहारः—दन्तोष्ठम् । एवञ्च वकारस्य दन्तस्थानता ओष्ठस्थानता च लभ्यते । दन्तोष्ठादि तु न समुदितं स्थानम्, 'अष्टौ स्थानानी'ति शिक्षाविरोधात् ।

स्थानान्युक्त्वा प्रयत्नं तावन्निर्दिशति—यत्न इति । आद्यः=आभ्यन्तरः । तत्र=पञ्चसु यत्नेषु मध्ये । 'प्रयतन'मिति नपुंसके भावे ल्युडन्तम् । प्रयत्न इत्यर्थः । ह्रस्वस्याऽवर्णस्य=देवदत्तादिघटकस्याऽवर्णस्य ।

प्रयोगे=परिनिष्ठितानां 'राम' इत्यादीनामुच्चारणे । प्रक्रिया-दशायां=प्रयोगसाधनावसरे । शास्त्रीयकार्यप्रवृत्तौ । विवृतमेवेति । तस्य विवृ-तत्वं प्रतिज्ञेयमित्यर्थः । तेन 'दण्ड-आढक'मित्यत्र ह्रस्वस्याऽकारस्य सवर्णदीर्घे कर्त्तव्ये विवृतं प्रयतनमाकारस्यापि विवृतं प्रयतनमिति ह्रस्वदीर्घयोरकाराऽऽकार-योः परस्परं सावर्ण्यादकः सवर्णे इति दीर्घः सिद्ध्यति । अन्यथा तत्र संवृतस्य ह्रस्वाऽकारस्य विवृतेन दीर्घेण सावर्ण्याऽभावाद्दीर्घो न स्यात् । ह्रस्वस्याऽवर्णस्य प्रयोगे संवृतत्वञ्च 'अ-अ' इति सूत्रबलादेव लभ्यते । प्रक्रियादशायान्तु 'पूर्वत्रासिद्ध'मिति संवृतविधेरसिद्धत्वाद्विवृतत्वमेवावशिष्यते इत्यवधेयम् ।

बाह्यप्रयत्न इति । बाह्यप्रयत्ना यद्यपि सवर्णसञ्ज्ञायामनुपयुक्ताः, एवञ्च तेषामिहोपादानं व्यर्थं, तथापि खयरिरित्यादावान्तरतम्यपरीक्षायान्ते

खरो-विवाराः श्वासा अघोषाश्च । हशः-संवारा नादा घोषाश्च । वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाऽल्पप्राणाः ।

वर्गाणा द्वितीयचतुर्थौ शलश्च-महाप्राणाः ।

कादयो माऽवसानाः स्पर्शाः । यणोऽन्तःस्थाः ।

शल ऊष्माणः । अचः स्वराः ।

ᳵ क ᳵ ख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः । ᳶ प ᳶ फ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः ।

'अं' 'अः' इत्यचः परावनुस्वारविसर्गौ ॥

---

उपयोक्ष्यन्ते इति प्रसङ्गादत्र ते दर्शिताः । उदात्तादिशब्दाश्च धर्मपराः । लोके यत्नप्रयत्नशब्दयोः पर्यायशब्दतया तदनुसारेण बाह्येषु यत्नेष्वपि प्रकृते प्रयत्नशब्द उपात्त इत्यवधेयम् ।

**घोषाश्चेति** । अचामपि संवारनादघोषाल्पप्राणत्वमिति प्रकृते चेनाऽचामपि ग्रहणम् ।

**यणश्चेति** । चेन अचामपि ग्रहणम् । तेन संवारनादघोषाल्पप्राणत्वमचां लभ्यम् । 'सुपां सुलु'गितिसूत्रे 'इकारस्यान्तर्यतो दकार' इति भाष्यमत्र मानम्, अन्यथा तत्र तदौ पर्यायेण स्याताम्, अल्पप्राणत्वानङ्गीकारे दधौ पर्यायेण स्यातामिति ध्येयम् । उदात्तत्वादेरज्धर्मतायाः प्रसिद्धत्वात्तद्व्यवस्था नोक्ता । नाऽतो तदनुक्त्या न्यूनतेत्यपि बोध्यम् ।

स्पर्शाः=स्पर्शपदव्यवहार्याः । **अन्तस्था इति** । स्पर्शोष्मणोरन्तः=मध्ये तिष्ठतीति-अन्तस्था, ते अन्तस्थाः । अयमन्तस्थाशब्द आदन्तो, विश्वपाशब्दवत् ।

**ऊष्माण इति** । ऊष्मा=वायुः, तत्प्रधाना इत्यर्थः ।

**स्वरा इति** । स्वयमेव ( उदात्तादिभिः ) राजन्ते इति व्युत्पत्त्या अचां स्वरत्वस्य लाभः । स्वरधर्मत्वादुदात्तादयोऽपि 'स्वरा' इत्युच्यन्ते ।

'अं-अः' इत्युपलक्षणम्, इकारादेरपि, तदाह-**अचः परावि**ति ।

**अणुदित्सवर्णस्य चाऽप्रत्ययः १ । १ । ६९ ॥**

प्रतीयते—विधीयते—इति **प्रत्ययः** । अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा स्यात् । अत्रैवाऽण् परेण णकारेण । कु—चु—टु—तु—पु एते **उदितः** । तदेवम् अ इत्यष्टादशानां संज्ञा । तथेकारोकारौ ।

अण् प्रथमान्तम्, उदित्—प्रथमान्तं, **सवर्णस्य**—षष्ठ्यन्तम्, च, अव्ययपदम्, **अप्रत्ययः** प्रथमान्तम् । 'सवर्णस्ये'त्यस्य 'बोधक'मिति शेषः । अणमुद्दिश्य सवर्णबोधकताऽत्र विधीयते । तेन अण् उदिच्च सवर्णस्य बोधकं भवतीत्यर्थलाभः ।

प्रत्ययानामिव अकाराद्यादेशानामपि सवर्णग्रहणवारणाय आह—**प्रतीयते इति** । एवञ्च यौगिकेन प्रत्ययपदेन आदेशादेरपि ग्रहणमिति 'त्यदादीनाम' इत्यादौ न दीर्घाकारादेर्विधानमित्यवधेयम् । अत्र च चो भिन्नक्रमः, अत आह—**उदिच्चेति** । 'अविधीयमान' इति न उदिद्विशेषणं, 'चोः कु'रित्यादौ विधीयमानेऽपि सवर्णग्रहणस्येष्टत्वात् । **अत्रैव**=अणुदित्सूत्रे एव । **परेण**=लण्सूत्रघटकेन णकारेण । अण्—अण्प्रत्याहारः । 'बोध्य' इति शेषः । एवञ्च इतोऽन्यत्र 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यादौ पूर्वेणैवाण्प्रत्याहारो बोध्यः । तदुक्तं

**'परेणैवेण्ग्रहाः सर्वे, पूर्वेणैवाऽण्ग्रहा मताः ।**
**ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु ॥' इति ।**

**उदित इति** । शास्त्रान्तरे 'उदि'दिति एषां सञ्ज्ञेत्यर्थः । तयाऽत्रापि व्यवहारः । **तदेवमिति** । **तत्**=अणि अणुदित्सूत्रप्रवृत्तौ सत्याम् । एवम् फलति-इत्यर्थः । यद्वा—**तत्**=अणुदित्सूत्रप्रवृत्त्या यल्लब्धं तत्, **एवम्**=वक्ष्यमाण-रीत्या बोध्यमित्यर्थः । **सञ्ज्ञा**=बोधकः । **इकारोकाराविति** । 'प्रत्येकमष्टा-

१ अविधीयमान जो अण् और उदित् ये अपने सवर्ण की सञ्ज्ञा ( ग्राहक ) होते हैं । अर्थात् अविधीयमान 'अ' से १८ प्रकार के अकार लेना, 'इ' से १८ प्रकार के इकार लेना । इसी प्रकार आगे भी जानना ।

२ इस प्रकार, 'अ' यह अट्ठारह की संज्ञा है ।

३ इसी प्रकार इकार उकार भी अट्ठारह-अट्ठारह की संज्ञा है ।

ऋकारस्त्रिंशतः[1] । एवम् लृकारोऽपि[2] । एचो द्वादशानाम्[3] । अनुनासिकाननुनासिकभेदेन यवला द्विधा[4] । तेनाऽननुनासिकास्ते द्वयोर्द्वयोस्सञ्ज्ञा[5] ॥

**परः सन्निकर्षः संहिता । १ । ४ । १०९ ॥**

वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात्[6] ॥

**हलोऽनन्तराः संयोगः । १ । १ । ७ ॥**

अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः[7] ॥

दशाना-सञ्ज्ञेति'ति शेष. । **त्रिंशत इति** । ऋलृवर्णयोः सावर्ण्यादिति भाव. ।

**लृकारोऽपीति** । 'त्रिंशतिः सञ्ज्ञे'ति शेपः । **द्वादशानामिति** । 'प्रत्येक द्वादशानां-सञ्ज्ञे'ति शेपः । एचां ह्रस्वाऽभावादिति भावः ।

**तेन**=यवलानां द्वैविध्येन । **ते**=यवलाः । **द्वयोः**=अनुनासिकाननुनासिकयोः । एवञ्च-अणुदित्सूत्रबलेन यकारः 'यँ' 'य' इत्यनयोर्ग्राहकः, एवं वकारः 'वँ' 'व' इत्यनयोः, लकारश्च 'लँ' 'ल' इत्यनयोर्ग्राहक इति लब्धम् ।

**परः** प्रथमान्तं, **सन्निकर्षः**-प्रथमान्तं, **संहिता** प्रथमान्तम् । परशब्दो नाऽन्यार्थोऽन्यत्वस्याऽव्यभिचरितत्वात्, किन्तूत्कृष्टार्थ इत्याह **अतिशयत इति** । स्वभावसिद्धाऽर्द्धमात्राऽधिककालव्यवायरहित इत्यर्थः । **सन्निकर्षः**=सामीप्यम् । शब्दानुशासनप्रस्तावादाह-**वर्णानामिति** ।

**हलः** प्रथमान्तम्, **अनन्तराः**-प्रथमान्तं, **संयोगः** प्रथमान्तम् । **आनन्तर्यं**=व्यवधानाभावः । व्यवधानञ्च विजातीयेनैवेत्याशयेनाह **अज्भिरिति** । हलौ च हलश्च हला इत्येकशेपः, तेन द्वयोर्बहूनाञ्च संयोगसञ्ज्ञेति लभ्यते । तेन शिक्षेत्यादौ 'गुरोश्च हल' इत्यप्रत्ययसिद्धिः । समुदायस्यैव च संयोगसञ्ज्ञा, संयोग इति महासञ्ज्ञाकरणात् ।

१ ऋकार ३०-तीस की संज्ञा है । २ लृकार भी ३० तीस की संज्ञा है । ३ ए, ओ, ऐ, औ ये प्रत्येक बारह बारह १२ की संज्ञा हैं । ४ अनुनासिक अननुनासिक भेद करके य, व, ल, ये दो दो प्रकार के हैं । ५ इस वास्ते अननुनासिक जो य व ल हैं वे दो दो की संज्ञा हैं । ६ वर्णों का अतिशयित जो सन्निधि उसकी संहिता संज्ञा होती है । ७ अच् से अव्यवहित जो हल् उनकी संयोगसंज्ञा होती है ।

सुप्तिङन्तं पदम् १।४।१४॥

[1] सुबन्तं तिङन्तं च पदसञ्ज्ञं स्यात् ॥

इति संज्ञाप्रकरणम्

## अथाच्सन्धिः

इको यणचि ६।१।७७॥

[2] इकः स्थाने यण् स्यादचि संहितायां विषये । सुधी उपास्य इति स्थिते ॥

तस्मिन्निति निर्दिष्टे पूर्वस्य १।१।६६॥

[3] सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाऽव्यवहितस्य पूर्वस्य बोध्यम् ॥

सुप् तिङ् च सुप्तिङौ, तौ अन्ते यस्य तत्-सुप्तिङन्तं-प्रथमान्तम्, पदं-प्रथमान्तम् । 'शब्दस्वरूप'मिति च शब्दानुशासनप्रस्तावाल्लभ्यते । अन्तशब्द प्रत्येकं सम्बध्यते, तदाह-सुबन्तमिति । 'शब्दरूप'मिति शेषः । सुबिति सुप. पकारेण प्रत्याहारो, व्याख्यानात् ।

इति श्रीगुरुप्रसादशास्त्रिविरचितायां लघुकौमुद्याः सरलायां सञ्ज्ञाप्रकरणम् ।

इकः षष्ठ्यन्तम्, यण् प्रथमान्तम्, अचि सप्तम्यन्तम् । 'संहितायां' मित्यधिक्रियते । विषयसप्तमीयं, तदाह-विषये इति ।

इति स्थिते इत्यस्य-'यत्सूत्र प्रवर्त्तते तदाहे' ति शेष. ।

तस्मिन्निति सप्तम्यन्तानुकरणं लुप्तसप्तम्यन्तम् । नागेशमते तु 'अची'त्यादिसप्तम्यन्तार्थकतच्छब्दात्सप्तमीय 'तस्मिन्निती'ति ध्येयम् । इति-अव्ययपदम् । निर्दिष्टे-सप्तम्यन्तम् । पूर्वस्य-षष्ठ्यन्तम् ।

१ सुबन्त और तिङन्त की पद संज्ञा होती है । २ इक् के स्थान में यण् आदेश होय अच्परे रहते संहिता के विषय में । ३ सप्तमी निर्देश करके क्रियमाण जो कार्य सो वर्णान्तर से व्यवधान रहित पूर्व के स्थान में हो ।

स्थानेऽन्तरतमः १ । १ । ५० ॥

[1]प्रसङ्गे सति सदृशतम आदेशः स्यात् । सुध्य् उपास्य इति जाते ॥

अनचि च ८ । ४ । ४७ ॥

[2]अचः परस्य यरो द्वे वा स्तो, न त्वचि । इति धकारस्य द्वित्वम् ॥

[3]झलां जश् झशि ८ । ४ । ५३ ॥

स्पष्टम् । इति पूर्वधकारस्य दकारः ॥

संयोगान्तस्य लोपः ८ । २ । २३ ॥

संयोगान्तं यत्पदं तस्य लोपः स्यात् ॥

अलोऽन्त्यस्य १ । १ । ५२ ॥

षष्ठीनिर्दिष्टाऽन्त्यस्याऽल आदेशः स्यात् । इति यलोपे प्राप्ते ।

अनचि–सप्तम्यन्तम् । च–अव्ययपदम् । 'अचो रहाभ्या'मित्यतः–'अच' इति, 'द्वे' इति. 'यरोऽनुनासिके' इत्यतो 'यर' इति 'वे' ति चानुवर्त्तते । 'अनची'ति च प्रसह्य प्रतिषेधस्तदाह–अच इति ।

झला स्थाने जशादेशः स्याज्झशि परत इत्यर्थः । इति=इत्यनेन शास्त्रेण । धकारस्य दकारः=स्थानत आन्तर्यात्पूर्वधकारस्य दकारः ।

संयोग. अन्ते यस्यासौ–संयोगान्त., तस्य संयोगान्तस्य । 'पदस्ये'त्यधिकृतम् ।

'षष्ठी स्थानयोगे' त्यनुवर्त्तते । अल.—षष्ठ्यन्तम् , अन्त्यस्य—षष्ठ्यन्तम् । स्थाने विधीयमान आदेशः—षष्ठीनिर्दिष्टान्त्यस्य अलः स्यादित्यर्थः ।

१ प्रसङ्ग होने पर सदृशतम आदेश होय । २ अच् से परे जो यर् उसको द्वित्व हो । अच् परे रहते यर् को द्वित्व नहीं होय । ३ झलों के स्थान में जश् आदेश होय झश् परे रहते । ४ सयोगान्त जो पद उसका लोप होय । ५ स्थान में विधीयमान जो कार्य वह-षष्ठी निर्दिष्ट के अन्त्य अल् को होय ।

*[1]यणः प्रतिषेधो वाच्यः। सुद्ध्युपास्यः। मद्ध्वरिः। धात्त्रंशः। लाकृतिः॥

एचोऽयवायावः ६।१।७८॥

**यण** इति। यणः संयोगान्तलोपस्य प्रतिषेधो वक्तव्य इत्यर्थः। 'इति यलोपो न भवती' ति शेषः।

सुधीभिरुपास्य इति तृतीयासमासः। 'सुधी-उपास्य' इत्यवस्थायां 'तस्मिन्निति निर्दिष्टे पूर्वस्य' 'स्थानेऽन्तरतमः' इति परिभाषासूत्रद्वयसहकारेण 'इको यणचि' ति सूत्रेण धकारोत्तरवर्त्तीकारस्य तालुस्थानिकस्य स्थाने तालुस्थानिके यकारेऽनचि चेति धकारस्य वैकल्पिके द्वित्वे 'झलां जश् झशी'ति पूर्वधकारस्य दकारे सति प्राप्तस्य 'संयोगान्तस्य लोपः' इति प्राप्तस्य लोपस्य 'यणः प्रतिषेधो वाच्यः' इति प्रतिषेधे 'सुद्ध्युपास्य' इति सिद्धम्। 'अनचि चे' ति द्वित्वाऽभावपक्षे 'सुध्युपास्य' इति रूपं बोध्यम्। **सुद्ध्युपास्यः**= पण्डितैराश्रयणीयो हरिः, भूपतिश्च।

'मधु+अरिः' इत्यवस्थायामिको यणचीति शास्त्रेण 'स्थानेऽन्तरतम' इति परिभाषाबलेन स्थानत आन्तर्यादुकारस्य वकारे 'अनचि च'ति धकारस्य वैकल्पिके द्वित्वे 'झलां जश् झशी' ति धकारे दकारे प्राप्तस्य संयोगान्तलोपस्य 'यणः प्रतिषेधो वाच्यः' इति निषेधे 'मद्ध्वरि' रिति सिद्धम्। द्वित्वाभावे च 'मध्वरिः' इति रूपम्। **मद्ध्वरिः**=मधोर्दैत्यस्य शत्रुर्विष्णुः।

एवं 'धातृ+अंशः' इत्यवस्थायामिको यणचीतिशास्त्रेण 'स्थानेऽन्तरतमः' इति परिभाषासहकृतेन मूर्धस्थानिकस्य ऋकारस्य स्थाने मूर्धस्थानिके रेफादेशे कृतेऽनचि चेति द्वित्वे-प्राप्तस्य संयोगान्तलोपस्य 'यणः प्रतिषेधो वाच्यः' इति प्रतिषेधे 'धात्त्रंशः' इति सिद्धम्। 'द्वित्वाभावे च 'धात्रंशः' इत्यपि रूपं बोध्यम्। **धात्त्रंशः**=धातुर्ब्रह्मणो भागः।

'लृ+आकृति' इत्यवस्थायामिको यणचीति सूत्रेण स्थानत आन्तर्याल्लृकारस्य लकारादेशे 'लाकृति' रिति सिद्धम्। लृ-आकृतिः-**लाकृतिः**= देवमातुरदितेः स्वरूपं, वर्णविशेषस्य लृकारस्य स्वरूपं वा।

**एचः**-षष्ठ्यन्तम्, **अयवायावः**-प्रथमान्तम्। 'इको यणची' त्यतो-

१ यण् का संयोगान्त लोप नहीं होता है।

एचः क्रमादय् अव् आय् आव् एते स्युरचि ॥

**यथासङ्ख्यमनुदेशः समानाम् १ । ३ । १० ॥**

समसम्बन्धी विधिर्यथासङ्ख्यं स्यात् । हरये । विष्णवे । नायकः । पावकः ॥

**वान्तो यि प्रत्यये ६ । १ । ७९ ॥**

---

ऽचीत्यनुवर्त्तते । 'क्रमा' दिति यथासङ्ख्यसूत्रबललब्धं, तदाह एच-इति ।

'क्रमा'दित्यस्य लाभायाह-**यथासङ्ख्यमिति** । सम्यक् ख्यानं-सङ्ख्या= ( क्रमवैशिष्ट्येन ज्ञानम् ) । सङ्ख्यामनतिक्रम्य यथासङ्ख्यम् । अनुदिश्यते इति-**अनुदेश**=पश्चादुद्देशवाक्यार्थबोधकालिकः सम्बन्धः ।

साम्य-सङ्ख्यया, योग्यत्वात्, उपस्थितत्वाच्च । एवञ्च-समसङ्ख्यानां सम्बन्धो यथाक्रम-( यथासङ्ख्य ) भवति । अर्थात्-येन क्रमेण पदानां पदादुपस्थितिर्वा तेनैव क्रमेण समसङ्ख्यानां वाक्यार्थबोधविषयः सम्बन्धो भवतीत्यर्थः । तत्फलितमाह-**समसम्बन्धीति** ।

'हरये नमः' इत्येतद्घटकं 'हरये' इति चतुर्थ्यन्तम् । एवं 'विष्णवे नमः' इत्येतद्घटक 'विष्णवे' इति पदम् ।

नयतीति **नायकः**=प्रभुः । **पावकः**=अग्निः ।

व-अन्ते यस्यासौ **वान्तः**-प्रथमान्तम् । यि-सप्तम्यन्तम् । **प्रत्यये**-सप्तम्यन्तम् । 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषालब्धमर्थमाह-

---

१ एचों के स्थान में क्रम से अय् अव् आय् आव् ये आदेश होंय, अच् परे रहते । २ समबन्धी जो विधि वह यथासङ्ख्य करके होय । ३ यकारादि प्रत्यय परे रहते ओ औ के स्थान में अव् आव् ये आदेश हों ।

---

१ यथासंख्यं-प्रथमान्तम्, अनुदेश. प्रथमान्त, समानां-षष्ठ्यन्तम् । यद्वा-यथासङ्ख्यमिति,-यथा स्यात्तथा भवतीत्येव रीत्या क्रियाविशेषणत्वाद्द्वितीयान्तम् । २ पदज्ञानाधनन्तरं जायमानस्य शाब्दबोधस्य विषयः सम्बन्धः ।

३ सप्तम्यन्ते विशेषणीभूतेऽल्मात्रबोधके पदे उपादीयमाने यस्मिन्=अलि-यो विधिः स तदादौ बोध्य इति तदर्थः । प्रकृते च 'यी'ति पदमल्मात्रबोधकम् ।

यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः । गव्यम् । नाव्यम् । *अध्वपरिमाणे च । गव्यूतिः ॥

**अदेङ् गुणः १ । १ । २ ॥**

अत्[2] एङ् च गुणसंज्ञः स्यात् ॥

**तपरस्तत्कालस्य १ । १ । ७० ॥**

तः[3] परो यस्मात्स च तात्परश्चोच्चार्यमाणःसमकालस्यैव संज्ञा स्यात् ।

**यकारादाविति** । 'ओदौतोरिति वक्तव्य'मिति वार्त्तिकोक्तेराह **ओदौतोरिति** ।

गोर्विकारो गव्यं=दुग्धदध्यादिकम् । नावा तार्यं—**नाव्यं**= नौकामात्रेण तरणार्हं जलं । गभीरमिति यावत् । 'गो+य' मित्यवस्थायां'वान्तो यि प्रत्यये' इति अवादेशे 'गव्य'मिति सिद्धम् । एवं 'नौ+य' मित्यवस्थायां 'वान्तो यी'ति औकारस्य स्थाने आवादेशे नाव्यमिति सिद्धम् । अत्र 'हलि सर्वेषा'-मिति 'लोपः शाकल्यस्ये'ति वा वलोपस्तु न, 'यचि भ'मिति भत्वेन वकार-स्याऽपदान्तत्वात् ।

**अध्वेति** । गोशब्दस्य वान्तादेशः स्याद्यूति शब्दे परे, समुदायेन मार्गपरिमाणे गम्यमाने इत्यर्थः । **गव्यूतिः**=कोशद्वयम् । 'गव्यूतिः स्त्री क्रोश-युग'मित्यमरः । अत्र सञ्ज्ञाभङ्गभयाल्लोपः शाकल्यस्येति वलोपो न ।

अत—प्रथमान्तम्, **एङ्**—प्रथमान्त, **गुणः**—प्रथमान्तम् ।

**तपरः**—प्रथमान्तं, **तत्कालस्य**—षष्ठ्यन्तम् । 'तत्पर' इत्यत्र तः **परो** यस्मादिति बहुव्रीहिः, 'अतो भिस ऐस्' इत्यत्र तपरकरणात् । अत्र तात्पर इति पञ्चमीतत्पुरुषोऽपि, 'सहिवहोरोदवर्णस्ये'त्यत्र वर्णग्रहणात् । तदाह **तात्पर इति** । वर्णग्रहणे तु तत्सामर्थ्यादत्वावच्छिन्नाष्टादशाकारग्रहणबोध-नेन न 'सहिवहोरो'दित्यत्रास्य तपरसूत्रस्य प्रवृत्तिरिति तच्चारितार्थ्यम् ।

तः परो यस्मादित्यस्योदाहरणम्—'अतो भिस ऐस्'—विश्वपाभिः । 'तात्पर' इति द्वितीयस्योदाहरणं—'वृद्धिरादैच्' 'अदेङ्गुण' इति ।

१ गो शब्दको वान्त (अव्) आदेश हो, यूति शब्द परे रहते । समुदाय से यदि मार्गका परिमाण (दो कोश) वाच्य हो तो । २ अ, ए, ओ इनकी गुण संज्ञा होय । ३ त है परे जिससे और त से जो परे वह समकाल का बोधक होता है ।

आद्गुणः ६ । १ । ८७ ॥

अवर्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात् । उपेन्द्रः । गङ्गोदकम् ॥

उपदेशेऽजनुनासिक इत् १ । ३ । २ ॥

उपदेशेऽनुनासिकोऽजित्सञ्ज्ञः स्यात् । प्रतिज्ञानुनासिक्याः पाणिनीयाः । लण्सूत्रस्थाऽवर्णेन सहोच्चार्यमाणो रेफो रलयोः संज्ञा ॥

---

तत्कालस्येत्यस्य—उच्चारणकालसमकालस्येत्यर्थः, तत्फलितमाह—उच्चार्यमाण इति । सवर्णस्येत्यपि बोध्यं, तेन हरिभिरित्यत्र अतो भिस ऐस् न । अकारेकारयोः सावर्ण्याभावात् ।

आत्—पञ्चम्यन्तं, गुणः—प्रथमान्तम् । 'इको यणची'त्यतोऽचीत्यनुवर्तते, 'एकः पूर्वपरयो'रित्यधिकृतं, तदाह—अवर्णादिति ।

'उप-इन्द्रः' इत्यवस्थायामाद्गुण इत्यनेन कण्ठतालुस्थानिकयोरकारेकारयोः स्थाने कण्ठतालुस्थानिके गुणे एकारे कृते 'उपेन्द्रः' इति सिद्धम् । इन्द्रमुपगतः—उपेन्द्रः—विष्णुः । 'गङ्गा—उदक'मित्यवस्थायाम् 'आद्गुण' इत्यनेन कण्ठोष्ठस्थानिकयोराकारोकारयोरुभयोः स्थाने कण्ठोष्ठस्थानिके ओकारे कृते 'गङ्गोदक'मिति सिद्धम् । गङ्गोदकम्=गङ्गाजलम् ।

उपदेशे—सप्तम्यन्तम्, अच्—प्रथमान्तम्, अनुनासिकः—प्रथमान्तम्, इत्—प्रथमान्तम् ।

प्रतिज्ञायते इति-प्रतिज्ञा । आतश्चोपेति कर्मण्यङ् । अनुनासिकस्य भावः—आनुनासिक्यम् । प्रतिज्ञा आनुनासिक्यं येषान्ते—प्रतिज्ञाऽनुनासिक्याः । पाणिनिना प्रोक्ताः—पाणिनीयाः । पाणिनीया इत्यस्य पाणिनिप्रभृतिप्रोक्ता वर्णा—इत्यर्थः । प्रतिज्ञाविषयाऽऽनुनासिक्यवन्त इत्यर्थः । प्रतिज्ञा च—'अयमेवम्' इति कथनं, वर्णानां तत्त्वज्ञापको व्यवहारश्च । यद्यपि सूत्रकार-

१ अवर्ण से अच् परे रहते पूर्व पर के स्थान में गुण रूप एकादेश हो ।

२ उपदेश में जो अनुनासिक अच् उसकी इत्संज्ञा होय ।

३ पाणिनिजीने जो वर्ण कहे हैं वे प्रतिज्ञा से अनुनासिक जानना । ४ लण् सूत्रस्थ जो अकार तत्सहित उच्चार्यमाण जो रेफ वह र-ल इन दो की संज्ञा है ।

## उरण् रपरः १ । १ । ५१ ॥

'ऋ' इति त्रिंशतः सञ्ज्ञेत्युक्तम् । तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते । कृष्णर्द्धिः । तवल्कारः ॥

## लोपः शाकल्यस्य ८ । ३ । १९

अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाऽशि परे ॥

---

कृतोऽनुनासिकपाठ इदानीं परिभ्रष्टस्तथापि वृत्तिकारादिव्यवहारबलेन यथा-कार्यं प्राक्स्थित इत्यनुमीयते इति भाव. ।

लण् च तत्सूत्रञ्च, लण्सूत्रं, लण्सूत्रे तिष्ठतीति लण्सूत्रस्थ', लण्सू-त्रस्थश्चासौ अवर्णश्च लण्सूत्रस्थावर्णः, तेनेति विग्रह । लण्सूत्रघटकाऽकारस्य 'उपदेशेऽजनुनासिकः' इतीत्सञ्ज्ञायाम्–'आदिरन्त्येने'ति सूत्रप्रवृत्त्या लण्सूत्र-स्थाऽवर्णेन सह उच्चार्यमाणो 'हयवर'डिति सूत्रस्थो रेफो र–ल्योः (मध्यगस्य लस्य, स्वस्य रेफस्य च ) सञ्ज्ञेति रप्रत्याहारसिद्धिप्रकारः ।

उः–षष्ठ्यन्तम् , अण्–प्रथमान्तं, रपरः–प्रथमान्तम्। **त्रिंशत इति**। तेन ऋपदेन ऋकारऌकारयोरुभयोर्ग्रहणं बोध्यम् । **तत्स्थाने**–ऋऌवर्णयोः स्थाने । **रपर इति** । ऋकारस्थाने रपरः, ऌकारस्थाने लपर इत्यर्थ ।

'कृष्ण–ऋद्धिः' इत्यवस्थायाम् 'आद्गुणः' इत्यनेन आकार ऋकारयोः कण्ठमूर्द्धस्थानिकयोः स्थाने 'उरण्पर.' इति सूत्रसहकारेण कण्ठमूर्धस्थानिके गुणे अरादेशे जलतुम्बिकान्यायेन रेफस्योर्द्ध्वगमने च 'कृष्णर्द्धि' इति सिद्धम् । कृष्णस्य ऋद्धिः **कृष्णर्द्धि** =भगवत कृष्णस्य समृद्धिः ।

तव–ऌकार इत्यवस्थायाम् 'आद्गुण.' इत्यनेन पूर्वपरयो. कण्ठ-दन्तस्थानिकयोः अकारऌकारयोः स्थाने 'उरण्पर' इति सूत्रसहकारेण कण्ठ-दन्तस्थानिके अलादेशे कृते तवल्कार इति सिद्धम्।तव ऌकारो वर्ण इत्यर्थः।

'भोभगोअघो' इत्यत. 'अपूर्वस्य' 'अशि' इति चानुवर्त्तते, 'व्योर्लघु-प्रयत्नतर.' इत्यतो 'व्यो'रिति वर्त्तते । पदस्येत्यधिकृत, तदाह–**अवर्णेति** ।

१ तीस प्रकार का जो ऋ उसके स्थान में जायमान जो अण् वह रपर होकर प्रवृत्त होता है । २ अवर्ण पूर्वक जो पदान्त में स्थित यकार वकार उनका विकल्प से लोप होता है अश् परे रहते ।

## पूर्वत्रासिद्धम् ८ । २ । १ ॥

[1] सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धं स्यात् । हर इह । हरयिह । विष्ण इह । विष्णविह ॥

## वृद्धिरादैच् १ । १ । १ ॥

[2] आदैच्च वृद्धिसञ्ज्ञः स्यात् ।

## वृद्धिरेचि ६ । १ । ८८ ॥

[3] आदेचि परे वृद्धिरेकादेशः स्यात् । गुणापवादः । कृष्णैकत्वम् । गङ्गौघः । देवैश्वर्यम् । कृष्णौत्कण्ठ्यम् ॥

## एत्येधत्यूठ्सु ६ । १ । ८९ ॥

[4] अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् ।

पूर्वत्र-अव्ययपदम्, असिद्धं-प्रथमान्तम् । सपादसप्ताध्यायी-प्रति=अष्टमाध्यायस्य प्रथमपादं यावत् पठितानि सूत्राणि प्रति । त्रिपादी= अष्टमाध्यायद्वितीयतृतीयचतुर्थपादपठितानि सूत्राणि ।

हे हरे ! इह-आगच्छेत्यर्थः । एवं विष्णो इहेत्यत्रापि 'आगच्छे'ति शेषः । वृद्धिः-प्रथमान्तम्, आत्-प्रथमान्तम् । ऐच्-प्रथमान्तम् । गुणापवाद इति । येन नाप्राप्तिन्यायेन वृद्धिर्गुणबाधिका, गुणस्यावश्यप्राप्तत्वात् ।

कृष्णैकत्वं-कृष्णस्य एकरूपता । गङ्गाया ओघः-वेगः ।

देवस्य=राज्ञः, देवानां वा ऐश्वर्यम् । कृष्णस्य कृष्णे वा उत्कण्ठा ।

'एजाद्यो'रिति एत्येधत्योरेव विशेषणं, न तु ऊठः, असम्भवात् ।

१ सपाद सप्ताध्यायीस्थ सूत्रों के प्रति त्रिपादीस्थ सूत्र असिद्ध हों । और त्रिपादी में भी पूर्व शास्त्र के प्रति पर शास्त्र असिद्ध होय । २ आ, ऐ औ इनकी वृद्धि संज्ञा होय । ३ अवर्ण से एच् परे रहते पूर्वपर के स्थान में वृद्धि रूप एकादेश हो ।

४ अवर्ण से एजादि एति एधति और ऊठ् परे रहते पूर्वपर के स्थान में वृद्धिरूप एकादेश होय ।

उपैति। उपैधते। प्रष्ठौहः। एजाद्योः किम्? । उपेतः। मा भवान्प्रेदिधत्। *अक्षा[1]दूहिन्यामुपसंख्यानम्। अक्षौहिणी सेना। *प्रा[2]दूहोढोढ्येषैष्येषु। प्रौहः। प्रौढः। प्रौढिः। प्रैषः। प्रैष्यः। *ऋ[3]ते च तृतीयासमासे। सुखेन ऋतः सुखार्तः। तृतीयेति किम्? । परमर्त्तः। *प्र-वत्सतर-कम्बल-वसनार्ण-दशानामृणे। प्रार्णम्। वत्सतरार्णम्—इत्यादि ॥

## उपसर्गाः क्रियायोगे १।४।५९॥

प्रादयः क्रियायोगे उपसर्गसंज्ञाः स्युः। प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु

उपैति=ग्राममुपगच्छति, प्राप्नोति। उपैधते=समृद्धो भवति।

प्रष्ठौहः=वत्सदमनकाष्ठविशेषवाहकस्य वत्सस्य। षष्ठ्यन्तोऽयम्।

मा भवान्नित्यस्य=भवान् प्रवृद्धिं न करोत्वित्यर्थः।

अक्षाणामूहिनीति विग्रहः, 'पूर्वपदात्सञ्ज्ञायामगः' इति णत्वम्।

प्रौहः=प्रकृष्टस्तर्कः। प्रौढः=महान्, प्रवृद्धश्च। प्रौढिः=महत्त्वं, गर्वश्च। प्रेषः=प्रेरणम्। प्रैष्यः=दासः।

सुखार्त्तः=सुखेन गतः।

परमश्चासौ ऋतश्चेति कर्मधारयोऽत्र, न तु तृतीयासमासोऽतोऽत्र न वृद्धिः।

प्रार्णं=प्रकृष्टम् ऋणम्।

वत्सतरस्य ऋणं। वत्सतररूपम् ऋणमिति यावत्। (वत्सतर=वछड़ा)। एवं-कम्बलार्ण-वसनार्णमित्यादावप्यर्थो बोध्यः। ऋणस्यापनयनाय यदन्यदृणं क्रियते तत्-ऋणार्णम्। दशार्णो देशः [ रीवाँ प्रान्त ]।

१ अक्ष शब्दान्त्यावयव अवर्ण से ऊहिनीशब्दाद्यावयव अच् परे रहते पूर्वपर के स्थान में वृद्धिरूप एकादेश होय। २ प्र शब्दान्त्यावयव अवर्ण से ऊहादि शब्दाद्यवयव अच् परे रहते वृद्धिरूप एकादेश होय। ३ अवर्ण से ऋतशब्दाद्यवयव अच् परे रहते पूर्वपर के स्थान में वृद्धिरूप एकादेश हो तृतीया समास में। ४ क्रिया के योग में प्रादिकों की गति संज्ञा होती है।

उत् अभि प्रति परि उप एते प्रादयः ॥

**भूवादयो धातवः १ । ३ । १ ॥**

क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः ॥

**उपसर्गादृति धातौ । ६ । १ । ९१ ॥**

अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् । प्रार्च्छति ॥

**एङि पररूपम् ६ । १ । ९४ ॥**

आदुपसर्गादेङादौ धातौ पररूपमेकादेशः स्यात् । प्रेजते । उपोषति ।

**अचोऽन्त्यादि टि १ । १ । ६४ ॥**

अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् ।

***शकन्ध्वादिषु पररूपं वाच्यम् ।** तच्च टेः । शकन्धुः । कर्कन्धुः ।

'प्रादय' इत्यनुवर्त्तत, तदाह-प्रादय इति ।

भूवादय इत्यत्र-भूश्च वाश्च भूवौ, आदिश्च आदिश्च-आदी, भूवावादी येषां ते भूवादय इति विग्रहः ।

प्रार्च्छति=प्रकर्षेण याति । प्रेजते=प्रकर्षेण कम्पते । उपोषति=उपदहति ।

अचः=षष्ठ्यन्तम्, अन्त्य आदिर्यस्य तत्-अन्त्यादि - प्रथमान्तं, (सापेक्षत्वेऽपि गमकत्वात्समासः) । टि -प्रथमान्तम् ।

शकन्ध्वादिषु विषये शकन्ध्वादीनामनुरूप - तत्सिद्ध्यर्थं - पूर्वपरयोः स्थाने पररूपं वक्तव्यमित्यर्थः । तच्च = पररूपञ्च । शकन्धुः =शकदेशकूपः । 'पुंस्येवान्धुः प्रहिः कूपः' इत्यमरः । कर्कन्धुः=राजविशेषकूपः, श्वेताश्वकूपो वा ।

'मनस् + ईषा' इत्यत्र सकाराकारनकारयोर्मध्येऽन्त्योऽच् नकारोत्तराऽकारः, स आदिर्यस्य-'अस्' इत्यस्य, तस्य टिसञ्ज्ञा । एवञ्च शकन्ध्वा-

---

१ क्रियावाची जो भ्वादि उनकी धातु संज्ञा होती है । २ अवर्णान्त उपसर्ग से ऋकारादि धातु परे रहते पूर्वपर के स्थान में वृद्धि रूप एकादेश होय । ३ अवर्णान्त उपसर्ग से एङादि धातु परे रहते पूर्वपर के स्थान में पररूप एकादेश होय । ४ अचों के मध्य में जो अन्त्य अच् वह आदि में है जिसके उसकी टि संज्ञा होय । ५ शकन्ध्वादि गण पठित जो शब्द उनकी सिद्धि के अनुगुण पररूप होता है । वह टि के स्थान में होता है ।

मनीषा । आकृतिगणोऽयम् । मार्त्तण्डः ॥

**ओमाङोश्च ६ । १ । ९५ ॥**

ओमि आङि चाऽत्परे पररूपमेकादेशः स्यात् । शिवायो नमः । शिव-एहि ॥

**अन्तादिवच्च ६ । १ । ८५ ॥**

योऽयमेकादेशः स पूर्वस्याऽन्तवत्परस्यादिवत्स्यात् । शिवेहि ॥

**अकः सवर्णे दीर्घः ६ । १ । १०१ ॥**

अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः । होतॄकारः ॥

दित्वाद्द पररूपे 'अस्' इत्यस्य स्थाने ईकारे जाते 'मनीषा' इति सिद्धम् । **मनीषा**=बुद्धिः ।

अयं=शकन्ध्वादिः । आकृत्या स्वरूपेणैव गण्यते इति-**आकृतिगणः** । एवञ्च येषु शब्देषु पररूपं करणीयं ते शब्दा अत्र गणे बोध्या इत्यर्थः ।

'आद्गुणः' इत्यत 'आ' दिति वर्त्तते, तदाह-**अत्परे** इति । अवर्णादोमि आङि च परे इति सरलोऽर्थः ।

**शिवेहीति**। 'शिव-आ-इही'त्यवस्थायां अ+आ इत्यत्र सवर्णदीर्घोऽपि प्राप्नोति, आ+इत्यत्र गुणोऽपि प्राप्नोति । तत्र 'धातूपसर्गयोः कार्यमन्तरङ्गम्, अन्यद्बहिरङ्ग' मिति परिभाषया धातूपसर्गकार्यस्य गुणस्यान्तरङ्गत्वादादौ प्रवृत्त्या 'शिव+एही' ति जाते वृद्धौ प्राप्तायाम् 'ओमाङोश्चे' त्यनेन ('अन्तादिवच्चे'ति शास्त्रप्रवृत्त्या 'ए' इत्यस्याऽऽङ्त्वात्) पररूपे 'शिवेही'ति सिद्धम् । हे शिव ! आगच्छेति तदर्थः ।

'इको यणचि' इत्यतः 'अचि' इति, 'एकः पूर्वपरयोः' इति सम्पूर्णमधिकारसूत्रं चानुवर्तते । अत आह-**अचि परे** इत्यादि ।

१ अवर्ण से ओम् आङ् परे रहते पररूप एकादेश होय । २ यह जो एकादेश है वह पूर्व के अन्तवत् होय, और पर के आदिवत् होय । ३ अक् से सवर्ण अच् पर रहते पूर्व पर के स्थान में दीर्घरूप एकादेश होय ।

## एङः पदान्तादति ६ । १ । १०९ ॥

पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽव । विष्णोऽव ॥

## सर्वत्र विभाषा गोः ६ । १ । १०९ ॥

लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः स्यात् पदान्ते । गोअग्रम् । गोऽग्रम् । एङन्तस्य किम् ? । चित्रग्वग्रम् । पदान्ते किम् ? । गोः ॥

## अनेकाल् शित्सर्वस्य १ । १ । ५५ ॥

[अनेकाल् यं आदेशः शिच्च स सर्वस्य षष्ठीनिर्दिष्टस्य स्थाने स्यात् ]॥ इति प्राप्ते ॥

## ङिच्च १ । १ । ५३ ॥

ङिदनेकालप्यन्त्यस्यैव स्यात् ॥

'अमि पूर्व.' इत्यतः 'पूर्व' इति 'एङि पररूपम्' इत्यतो 'रूपम्' इति चानुवर्तते अत आह–**पूर्वरूपमिति** ।

'एङ. पदान्तादती'ति सूत्रादेङ इति, 'प्रकृत्यान्त. पादम्' इति सूत्रात् 'प्रकृत्या' इति चानुवर्तते, अत आह–**एङन्तस्येत्यादि** ।

**चित्रेति** । 'एकदेशविकृतमनन्यवत्' इति न्यायेन 'गु'शब्दे गोशब्दत्वस्य सत्त्वेऽपि 'विकृतावयवनिबन्धनकार्ये नायं न्यायः' इति गुशब्दे नैङन्तत्वमिति भावः ।

**'गोरिति** । गो अस् इत्यवस्थाया गो इत्यस्य 'यचि भ'मिति भसंज्ञा न तु पदसंज्ञा । 'ङसिङसोश्चे'ति पूर्वरूपं रुत्वं विसर्गश्चेति तत्सिद्धिः ।

**अनेकालिति** । अलोऽन्त्यस्य,' 'आदेः परस्य' इत्यनयोरपवादोऽयम्। आरम्भसामर्थ्यादाह–**अनेकालपीति** ।

१ पदान्त एङ् से 'अत्' नाम=ह्रस्व अकार परे रहते पूर्वपर के स्थान में पूर्वरूप एकादेश हो । २ लोक में अथवा वेद में एङन्त जो गो शब्द उसको प्रकृतिभाव होना है, विकल्प करके, पदान्त में । ३ अनेकाल् जो आदेश और शित् जो आदेश वह सम्पूर्ण के स्थान में होता है । ४ ङित् यदि अनेकाल् हो तो भी वह अन्त्य के ही स्थान में होता है ।

## अवङ् स्फोटायनस्य ६ । १ । १२३ ॥

[1]पदान्ते एङन्तस्य गोरवङ् वा स्यादचि । गवाग्रम् । गोऽग्रम् । पदान्ते किम् ? । गवि ॥

## इन्द्रे च ६ । १ । १२४ ॥

[2]गोरवङ् स्यादिन्द्रे । गवेन्द्रः ॥

## दूराद्धूते च ८ । २ । ८४ ॥

[3]दूरात्सम्बोधने वाक्यस्य टेः प्लुतो वा स्यात् ॥

## प्लुतप्रगृह्या अचि नित्यम् ६ । १ । १२५ ॥

[4]एतेऽचि प्रकृत्या स्युः । आगच्छ कृष्णा ३ अत्र गौश्चरति ॥

## ईदूदेद्द्विवचनं प्रगृह्यम् १ । १ । ११ ॥

[5]ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात् । हरी एतौ । विष्णू इमौ । गङ्गे अमू ॥

## अदसो मात् १ । १ । १२ ॥

**दूरादिति** । 'वाक्यस्य टेः प्लुत उदात्तः' इत्यधिक्रियते । 'सर्वः प्लुतः साहसमनिच्छता विभाषा कर्तव्यः' इति भाष्यम् ।

**प्लुतेति** । अत्र नित्यपदं प्रायिकं, नित्यप्रहसित इत्यादाविव । तेन 'मणीवोष्ट्रस्ये'त्यत्र न प्रकृतिभावः ।

'प्रकृत्याऽन्तः पादम्'-इत्यतः 'प्रकृत्या' इत्यनुवर्तते ।

'पचेते' इत्यादौ प्रगृह्यत्वार्थं तदन्तविधिमाश्रित्योक्तम्-**ईदूदेदन्तमिति**

'आद्यन्तवदेकस्मिन्' इति सूत्रानुसारादुदाहरति-**हरी इत्यादि** ।

१ पदान्त में एङन्त जो गो शब्द उसको अवङ् आदेश हो अच्परे रहते । २ गो शब्द को अवङ् आदेश होय इन्द्र शब्द परे रहते, पदान्त में ।

३ दूर से सम्बोधन में जो वाक्य-उसकी टि को प्लुत होता है विकल्प करके । ४ प्लुत और प्रगृह्य ये अच् परे रहते नित्य प्रकृति से रहते हैं । ५ ईदन्त ऊदन्त एदन्त जो द्विवचन उनकी प्रगृह्य संज्ञा हो । ६ अदस्शब्द सम्बन्धी मकार से परे जो ईत् ऊत् उनकी प्रगृह्य संज्ञा होती है ।

अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः । रामकृष्णावमू आसाते । मात्किम् ? । अमुकेऽत्र ।

**चादयोऽसत्त्वे १ । ४ । ५७ ॥**

[1]अद्रव्यार्थाश्चादयो निपाताः स्युः ॥

**प्रादयः १ । ४ । ५८ ॥**

[2]एतेऽपि तथा स्युः ॥

**निपात एकाजनाङ् १ । १ । १४ ॥**

[3]एकोऽच् निपात आङ्वर्जः प्रगृह्यः स्यात् । इ इन्द्रः । उ उमेशः । वाक्यस्मरणयोरङित् । आ एवं नु मन्यसे ! । आ एवं किल तत् ! । अन्यत्र ङित् । ईषदुष्णम्—ओष्णम् ॥

'ईदूदेत्' इत्यनुवृत्तावपि अदस्शब्दसम्बन्धिमकारात्परस्यैकारस्याऽसम्भवादाह—**ईदूताविति** ।

'अत्र द्विवचनानुवृत्तिरितिसूचनाय बहुवचनमुदाहृतम्—**अमी इति** ।

**अमुकेत्रेति** । 'असति माद्ग्रहणे एकारोऽप्यनुवर्त्तेत, माद्ग्रहणे कृते तु मकाराद्व्यवहितपरस्यैकारस्याऽसम्भव इति न तदनुवृत्तिः ।

'प्राग्रीश्वरात्' इत्यतो 'निपाताः' इत्यनुवर्तते इत्यभिप्रेत्याह—**निपाता इति** । 'लिङ्गसंख्यानन्वयित्वमद्रव्यत्वम्' ।

'चादयोऽसत्त्वे' इत्यतो 'असत्त्वे', इति 'निपाताः' इति चानुवर्त्त्याह—**एतेऽपीति** ।

'प्रगृह्यम्' इत्यनुवर्तते, 'एकाच्' इति च कर्मधारयः—इत्येतदभिप्रायेणाह—**एकोजिति** ।

**'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।**
**एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्' ॥**

१ अद्रव्यार्थ वाची जो चादि, उनकी निपात सञ्ज्ञा होती है । २ अद्रव्यार्थ वाची जो प्रादि उनकी भी निपात सञ्ज्ञा होती है । ३ आङ् से भिन्न जो एकाच् निपात उसकी प्रगृह्य सञ्ज्ञा होती है । ४ वाक्य और स्मरण अर्थ में 'आ' (ङित्) नहीं है, किन्तु 'आ' ही है । अर्थात्—अन्यत्र 'आ' ङित् ( आङ् ) है ।

**ओत् १ । १ । १५ ॥**

ओदन्तो निपातः प्रगृह्यः स्यात् । अहो ईशाः ॥

**सम्बुद्धौ शाकल्यस्येतावनार्षे १ । १ । १६ ॥**

सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति । विष्ण इति । विष्णविति ॥

**मय उञो वो वा ८ । ३ । ३३ ॥**

मयः परस्य उञो वो वा स्यादचि । किम्वुक्तम् । किमु उक्तम् ॥

**इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६ । १ । १२७ ॥**

पदान्ता इको ह्रस्वा वा स्युरसवर्णेऽचि परे । ह्रस्वविधिसामर्थ्यान्न स्वरसन्धिः । चक्रि अत्र । चक्र्यत्र । पदान्ता इति किम् ? । गौर्यौ ॥

'प्रगृह्यम्' इति 'निपातः' इति च द्वयमनुवर्तते । तदन्तविधिरित्याह—**ओदन्त इति** । अहो इत्यखण्डनिपातः ।

'ओत्' इति 'प्रगृह्यम्' इति चानुवर्तते । ऋषिशब्दो वेदवाचीत्यभिप्रेत्याह **सम्बुद्धिनिमित्तक इति** । शाकल्यो लोपस्य स्मर्ता, पाणिनिर्नेति व्याख्यानानुसारेण शाकल्यमते विष्ण इतीत्युदाहृतम् ।

'ङमो ह्रस्वात्' इत्यतोऽचीत्यनुवर्तते । अत आह—**अचीति** । 'इको यणचि' इत्युत्तरं 'मय उञो वो वा' इति सूत्रकरणेनापि प्रकृतिभावलाभः, त्रिपाद्यां तत्सूत्रकरणन्तु वत्वस्याऽसिद्धत्वादनुस्वारवारणायेत्याशयेनोक्तं **किम्वुक्तमिति** । 'एङः पदान्तात्' इत्यतः 'पदान्तात्' इति विभक्तिविपरिणतम्, 'प्लुतप्रगृह्या' इत्यतः 'अचि' इति चानुवर्तते । अत आह **अचीति** । ह्रस्वोत्तरमपि यदि यण् स्यात् तर्हि ह्रस्वविधानमेव व्यर्थं स्यादिति भाव ।

१ ओदन्त जो निपात उसकी प्रगृह्यसञ्ज्ञा होती है ।

२ सम्बुद्धिनिमित्तक जो ओकार उसकी विकल्प में प्रगृह्यसञ्ज्ञा होती है अवैदिक इतिशब्द परे रहते ।

३ मय् से परे जो उञ् उसको व आदेश हो, विकल्प करके, अच् परे रहते ।

४ पदान्त इक् को ह्रस्व होता है असवर्ण अच् परे रहते विकल्प करके ।

## अचो रहाभ्यां द्वे ८ । ४ । ४६ ॥

[1] अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः। गौर्य्यौं। *न समासे। वाप्यश्वः॥

## [3] ऋत्यकः ६ । १ । १२८ ॥

ऋति परे पदान्ता अकः प्राग्वद्वा। ब्रह्म ऋषिः। ब्रह्मर्षिः। पदान्ताः किम्? । आर्च्छत्॥

इत्यच्सन्धिः।

# अथ हल्सन्धिप्रकरणम्।

## [4] स्तोः श्चुना श्चुः ८ । ४ । ४० ॥

सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः। रामश्शेते। रामश्चिनोति। सच्चित्। शार्ङ्गिञ्जय॥

## [5] शात् ८ । ४ । ४४ ।

'यरोऽनुनासिकेऽनुनासिको वा' इत्यतः 'यरः' इति, 'वा' इति चानुवर्त्योक्तं **यर इति**।

'इकोऽसवर्णे शाकल्यस्य ह्रस्वः' इत्यनुवर्तते।

'एङः पदान्तात्' इति 'इकोऽसवर्णे' इत्यतः 'शाकल्यस्य ह्रस्वः' इति चानुवर्त्योक्तं **प्राग्वदिति**। 'आडजादीनाम्' इति जातस्याऽऽडागमस्य धात्ववयवत्वेन पदान्तत्वाऽभाव इति भावः।

अत्र स्थान्यादेशयोरेव यथासङ्ख्यं, न तु निमित्तकार्यिणोः, नापि निमित्तादेशयोः, 'शात्' इति ज्ञापकादित्यभिप्रेत्योदाहरति-**रामश्चिनोतीति**।

'तोः षि' इत्यतः 'तोः' इति, 'न पदान्तात्' इत्यत. 'न' इति चानु-

१ अच् से परे जो रेफ हकार उनसे परे जो यर् उसको द्वित्व होता है विकल्प करके। २ समासघटक जो पदान्त इक् उसको ह्रस्व नहीं होता है असवर्ण अच् परे रहते। ३ पदान्त इक् को ह्रस्व होता है विकल्प से ह्रस्व ऋकार परे रहते।

४ सकार तवर्ग के स्थान में शकार चवर्ग के योग में शकार चवर्ग आदेश हों। अर्थात् सकार को शकार आदेश हो, तवर्ग को चवर्ग होय।

५ शकार से परे जो तवर्ग उसको चुत्व नहीं होता है।

शात्परस्य तवर्गस्य चुत्वं न स्यात् । विश्नः । प्रश्नः ।

**ष्टुना ष्टुः ८ । ४ । ४१ ।**

स्तोः ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे ॥

**न पदान्ताट्टोरनाम् ८ । ४ । ४२ ॥**

पदान्ताट्टवर्गात्परस्याऽनामः स्तोः ष्टुर्न स्यात् । षट् सन्तः । षट् ते । पदान्तात्किम् ? । ईट्टे । टोः किम् ? । सर्पिष्टमम् ।

*अनाम्नवतिनगरीणामिति वाच्यम् । षण्णाम् । षण्णवतिः । षण्णगर्य्यः ॥

वर्त्तते । तत्र प्राप्तस्य चुत्वस्य निषेधायाह–चुत्वमिति । 'विश्न' इत्यत्र 'विच्छ गतौ' इति धातोर्यजयाचविच्छप्रच्छेति भावे नङि च्छ्वोः शूडिति शादेशः । एवं प्रश्न इत्यत्रापि । 'स्तोः श्चुना' इत्यतः 'स्तोः' इति षष्ठ्यन्तमनुवर्ततेऽत आह–स्तोरिति । अत्रापि स्थान्यादेशयोरेव यथासङ्ख्यम् , न तु निमित्तकार्यिणोः, 'तोः षि' इति ज्ञापकादित्यभिप्रायेणाह–रामष्टीकते । पेष्टेति ।

'स्तोः श्चुना' इत्यतः 'स्तोः' इति, ''ष्टुना ष्टुः' इत्यतः 'ष्टुः' इति चानुवर्त्तते, अत आह–स्तोः ष्टुरिति । ईट्टे इति । तिङन्तमेतत् । ईड् ते इति स्थिते ष्टुत्वे चर्त्वम् । पदान्ते षकारस्य जश्त्वेन टवर्ग एव भविष्यतीति 'ष्टुने'त्यत्र ष्टुग्रहणानुवृत्त्यैव सिद्धे किं टोर्ग्रहणेनेति पृच्छति टोः किमिति । 'ह्रस्वात्तादौ तद्धिते' इति जातस्य षत्वस्य जश्त्वं प्रत्यसिद्धत्वात् पदान्ते षकारो दृश्यतेत्यभिप्रेत्योक्तं–सर्पिष्टममिति ।

अनामिति । भो सूत्रकार ! त्वया न्यूनमुक्तं, त्वया–'न पदान्ताट्टोरनाम्नवतिनगरीणा'मित्येव सूत्रणीयमित्यर्थः ।

१ सकार तवर्ग के स्थान में षकार-टवर्ग के योग में षकार टवर्ग आदेश हो। अर्थात् सकार को षकार हो, तवर्ग को टवर्ग हो ।

२ पदान्त टवर्ग से परे नाम् भिन्न जो तवर्ग और सकार इनको ष्टुत्व नहीं होय।

३ पदान्त टवर्ग से परे नाम् नवति और नगरी के अवयव से भिन्न जो तवर्ग सकार उसको ष्टुत्व नहीं होय ।

तोः षि ८ । ४ । ४३ ॥

[1]तवर्गस्य षकारे परे न ष्टुत्वम् । सन्षष्ठः ॥

झलां जशोऽन्ते ८ । २ । ३९ ॥

[2]पदान्ते झलां जशः स्युः । वागीशः ॥

[3]यरोऽनुनासिकेऽनुनासिको वा ८ । ४ । ४५ ॥

यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः । एतद्मुरारिः । [4]*प्रत्यये भाषायां नित्यम् । तन्मात्रम् । चिन्मयम् ।

[5]तोर्लि ८ । ४ । ६० ॥

तवर्गस्य लकारे परे परसवर्णः स्यात् । तल्लयः । विद्वाँल्लिखति । नकारस्याऽनुनासिको लकारः ॥

[6]उदः स्थास्तम्भोः पूर्वस्य ८ । ४ । ६१ ॥

उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात् ॥

'न पदान्ताट्टोरनाम्' इत्यत. 'न' इति, 'ष्टुना ष्टुः' इत्यतः 'ष्टुः' इति चानुवर्तते इत्याह–**न ष्टुत्वमिति** । 'पदस्य' इत्यनुवर्त्य–पदस्य अन्ते इति सम्बन्धमभिप्रेत्याह–**पदान्ते इति** । 'पदस्य' इत्यनुवर्तते । तदन्तविध्य-लोन्त्यपरिभाषोभयलब्धमर्थमाह–**यरः पदान्तस्येति** ।

यरः पदान्तस्य प्रत्ययावयवेऽनुनासिके परे भाषायां नित्यमनुनासिको भवतीत्यर्थः । 'वेद्मि' 'बध्नाती'त्यादेस्तु नानुनासिकः, यरःपदान्तत्वाभावात् । 'अनुस्वारस्य ययी'ति सूत्रात् 'परसवर्ण' इत्यनुवर्तते इत्याह–**परसवर्ण इति** । 'अनुस्वारस्य' इति सूत्रतः 'सवर्ण' इत्यनुवर्तते इत्याह–**पूर्वसवर्ण इति** ।

१ तवर्ग को षकार परे रहते ष्टुत्व नहीं होय । २ पदान्त में विद्यमान झलों के स्थान में जश् होय । ३ पदान्त यर् को अनुनासिक होय, अनुनासिक परे रहते, विकल्प करके । ४ पदान्त यर् के स्थान में नित्य अनुनासिक हो, प्रत्ययावयव अनुनासिक परे रहते, भाषा नाम लोक में । ५ तवर्ग को लकार परे रहते परसवर्ण होय । ६ उद् से परे जो स्था और स्तम्भ उनको पूर्व का सवर्ण होय ।

**तस्मादित्युत्तरस्य १ । १ । ६७ ॥**[1]

पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाऽव्यवहितस्य परस्य ज्ञेयम् ॥

**आदेः परस्य १ । १ । ५४ ॥**[2]

परस्य यद्विहितं तत्तस्यादेर्बोध्यम् । इति सस्य थः ॥

**झरो झरि सवर्णे ८ । ४ । ६५ ॥**[3]

हलः परस्य झरो लोपो वा स्यात् सवर्णे झरि ॥

**खरि च ८ । ४ । ५५ ॥**[4]

खरि परे झलां चरः स्युः । इत्युदो दस्य तः । उत्थानम् । उत्तम्भनम् ॥

**झयो होऽन्यतरस्याम् ८ । ४ । ६२ ॥**[5]

झयः परस्य हस्य वा पूर्वसवर्णः स्यात् । नादस्य घोषस्य संवारस्य महाप्राणस्य तादृशो वर्गचतुर्थः । वाग्घरिः । वाग्हरिः ॥

'तस्मिन्निति निर्दिष्टे' इत्यतः 'निर्दिष्टे' इत्यनुवर्तते, अत आह **अव्यवहितस्येति** । 'अलोऽन्त्यस्ये'त्यस्यापवादोऽयं योगः । **सस्येति** । अघोषस्य महाप्राणप्रयत्नवत सस्य तादृश एव थकार इत्यर्थः । तस्य 'झरो झरी'ति पाक्षिको लोपः । लोपाभावे थस्य श्रवणं, न तु खरि चेति चर्त्वं, चर्त्वं प्रति थकारस्याऽसिद्धत्वात् । **हल इति** । 'हलो यमां यमि लोप,'इत्यतः 'हल·' इति 'लोप·' इति च पदमनुवर्तते ।

'झला जश् झशि' इत्यतो 'झलाम्' इति, 'अभ्यासे चर्च' इत्यतः '**चर**' इति च वहुवचनविपरिणतमनुवर्तते, अत आह–**खरीति** ।

१ पञ्चमी निर्देश करके क्रियमाण जो कार्य वह वर्णान्तर से व्यवधानरहित पर के स्थान में होय । २ पर को कहा गया जो कार्य वह उसके आदि में होय ।

३ हल् से परे जो झर उसका लोप होय, विकल्प से सवर्ण झर परे रहते ।

४ खर् परे रहते झलों के स्थान में चर् होय ।

५ झय् से परे जो हकार उसको पूर्वसवर्ण होय विकल्प करके ।

**शश्छोऽटि ८ । ४ । ६३ ॥**

पदान्ताज्झयः[1] परस्य शस्य छो वा स्यादटि । तद् शिव इत्यत्र दस्य श्चुत्वेन जकारे कृते खरि चेति जकारस्य चकारः । तच्शिवः । तच्छिवः । *छत्वममीति वाच्यम्[2] । तच्श्लोकेन ॥

**मोऽनुस्वारः[3] ८ । ३ । २३ ॥**

मान्तस्य पदस्याऽनुस्वारः स्याद्धलि । हरिं वन्दे ॥

**नश्चाऽपदान्तस्य झलि[4] ८ । ३ । २४ ॥**

नस्य मस्य चाऽपदान्तस्य झल्यनुस्वारः स्यात् । यशांसि । आक्रंस्यते । झलि किम् ? । मन्यसे ।

**अनुस्वारस्य ययि परसवर्णः[5] ८ । ४ । ५८ ॥**

स्पष्टम् । [ अनुस्वारस्य ययि परे परसवर्णः स्यात् ] शान्तः ॥

**वा पदान्तस्य[6] ८ । ४ । ५९ ॥**

पदान्तस्याऽनुस्वारस्य ययि परे परसवर्णो वा स्यात् । त्वङ्करोषि । त्वं करोषि ॥

**मो राजि समः क्वौ[7] ८ । ३ । २५ ॥**

'वा पदान्तस्य' इत्यतः 'पदान्तस्ये'ति विभक्तिविपरिणामेनानुवर्त्तते, तदाह पदान्तादिति । 'झयो होऽन्यतरस्या'मित्यतो 'झय' इत्यनुवर्त्तते इत्यपि बोध्यम् ॥ 'पदस्य' इत्यधिकृतम् । 'हलि सर्वेषाम्' इत्यतो हलीति चानुवर्तते । 'येन विधिः' इति तदन्तविधिस्तदाह-मान्तस्येति ।

मोऽनुस्वारः' इत्यतः 'मः' 'अनुस्वार.' इति पदद्वयमनुवर्तते, अत आह-नस्य मस्येत्यादि । अनुस्वारस्य ययि परे परसवर्णः स्यादित्यर्थः ।

१ पदान्त झय् से परे जो शकार उसको छकार होय विकल्प करके अट् परे रहते।

२ पदान्त झय् से परे शकार को छकार हो अम् परे रहते विकल्प से ।

३ मान्तपद को अनुस्वार होय हल् परे रहते । ४ अपदान्त जो नकार मकार उनको अनुस्वार होय झल् परे रहते । ५ अनुस्वार को यय् परे रहते परसवर्ण होय । ६ पदान्त अनुस्वार को यय् परे रहते परसवर्ण होय विकल्प करके । ७ क्विबन्त राज् धातु परे रहते सम् के मकार को मकारही होय(अनुस्वार नहीं होय)।

क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट् ॥

**हे [1]मपरे वा ८ । ३ । २६ ॥**

मपरे हकारे परे मस्य मो वा स्यात् । किम् ह्मलयति । किं ह्मलयति ॥ * **यवलपरे यवला[2] वा** । किय्ँ ह्यः । किं ह्यः । किव्ँ ह्वलयति । किं ह्वलयति । किल्ँ ह्लादयति । किं ह्लादयति ॥

**[3]नपरे नः ८ । ३ । २७ ॥**

नपरे हकारे मस्य नो वा स्यात् । किन् ह्नुते । किं ह्नुते ।

**आद्यन्तौ[4] टकितौ १ । १ । ४६ ॥**

टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः । षट्त्सन्तः, षट्सन्तः ॥

**ङ्णोः कुक्टुक् शरि ८ । ३ । २८ ॥**

ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि । * **चयो-**

'मोऽनुस्वारः' इत्यतः 'मः' इति षष्ठ्यन्तमनुवर्तते । मस्य मविधानमनुस्वारव्यावृत्त्यर्थमित्यभिप्रेत्याह–**मस्य म एवेति** ।

'मोऽनुस्वारः' इत्यतः 'मः' इति षष्ठ्यन्तम्, 'मो राजि' इत्यतो 'मः' इति प्रथमान्तं चानुवर्त्तते,तदाह–**मस्य मो वेति**। वार्तिके'मः'इति षष्ठ्यन्तं, 'हे' इति चानुवर्तते । यवलपरे हकारे परे मकारस्य यवला वा इत्यर्थः ।

'मः' इति षष्ठ्यन्तम्, 'हे'इति 'वा' इति चानुवर्तते ॥ टश्च कश्च टकौ, टकावितौ ययोस्तौ **टकितौ** । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायमाश्रित्याह–**टित्किताविति** । यथासङ्ख्यपरिभाषालब्धमर्थमाह–**क्रमादिति** । 'हे मपरे वा' इत्यतो 'वा' इत्यनुवर्त्याह–**वेति** ।

१ मपरक हकार परे रहते मकार को मकार ही होय विकल्प करके। २ यवलपरक हकार परे रहते मकार को क्रम से य व ल हों, विकल्प करके । ३ नपरक हकार परे रहते मकार को नकार होय विकल्प करके । ४ टित्कित् जिस समुदाय को कहे जांय उसके आदि अवयव टित् होय, और अन्त्यावयव कित् होय । ५ ङकार णकार को कुक् टुक् का आगम होय विकल्प करके शर् परे रहते ।

द्वितीयाः शरि पौष्करसादेरिति वाच्यम् । प्राङ्ख् षष्ठः । प्राङ्क्षष्ठः । प्राङ्षष्ठः । सुगण्ठ्षष्ठः । सुगण्ट्षष्ठः । सुगण्षष्ठः ॥

**डः सि धुट् ८ । ३ । २९ ॥**

डात्परस्य सस्य धुड् वा स्यात् ॥

**नश्च ८ । ३ । ३० ॥**

नान्तात्परस्य सस्य धुड् वा स्यात् । सन्त्सः । सन्सः ॥

**शि तुक् ८ । ३ । ३१ ॥**

पदान्तस्य नस्य शे परे तुग् वा स्यात् । सञ्छम्भुः । सञ्च्छम्भुः । सञ्च्शम्भुः । सञ्शम्भुः ॥

**ङमो ह्रस्वादचि ङमुण् नित्यम् ८ । ३ । ३२ ॥**

चय इति । चय्प्रत्याहारीयवर्णानां स्थाने स्वस्ववर्गीया द्वितीया वर्णा भवन्ति इत्यर्थः ।

'हे मपरे'-इत्यतो 'वा'इति वर्तते । 'ड'इति पञ्चमी,'सि' इति सप्तमी । तथा च 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति परिभाषया 'सि' इति सप्तम्याः षष्ठ्यर्थत्वमित्यत आह-**सस्य धुड्वेति** । 'डः सि धुट्' इत्यतः 'सि धुट्' इति 'वा' इति चानुवर्तते, 'सि' इति सप्तम्याः षष्ठ्यर्थत्वमित्यत आह-**सस्येति** ।

'पदस्य' इत्यधिकृतम् , 'नश्च' इत्यतः 'नः' इति 'वा' इति चानुवर्तते । 'नः' इति पञ्चम्याः 'नश्च' इत्यत्र चरितार्थतया 'शि' इति सप्तम्याश्च निरवकाशतया पञ्चम्या षष्ठ्यर्थत्वमित्यभिप्रायेणाह-**पदान्तस्येति** । **सञ्छम्भुरिति** ।

**'अछौ अचछा अचशा अशाविति चतुष्टयम् ।**
**रूपाणामिह तुक्छत्वचलोपानां विकल्पनात् ॥'**

**ङम इति** । 'नित्यप्रहसित॰'इत्यादाविव प्रकृते नित्यपदं प्रायःपदार्थकमिति तेन

१ चय् को द्वितीय अक्षर होय शर्परे रहते पौष्करसादि आचार्य के मत में । २ ड से परे जो सकार उसको धुट् का आगम होय विकल्प करके । ३ नान्त पद से परे जो सकार उसको धुट् का आगम होय विकल्प से । ४ पदान्त नकार को श परे रहते तुक् होय विकल्प से । ५ ह्रस्व से परे जो ङम् तदन्त जो पद उससे परे जो अच् उसको नित्य ङमुट् ( ङुट् णुट् नुट् ) का आगम होय ।

ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याऽचो नित्यं ङमुडागमः स्यात् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः ॥

**समः सुटि[1] ८ । ३ । ५ ॥**

समो रुः स्यात् सुटि ॥

**अत्राऽनुनासिकः पूर्वस्य तु वा[2] ८ । ३ । २ ॥**

अत्र=रुप्रकरणे-रोः पूर्वस्यानुनासिको वा स्यात् ॥

**अनुनासिकात्परोऽनुस्वारः[3] ८ । ३ । ४ ॥**

अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः स्यात् ॥

**खरवसानयोर्विसर्जनीयः[4] ८ । ३ । १५ ॥**

खरि अवसाने च पदान्तस्य रेफस्य विसर्गः स्यात् ।

'इको यणचि' 'सुप्तिङन्तं-' 'सनाद्यन्ता' इत्यादौ ङमुड् न भवतीति तत्त्वम् ।

अचि इति सप्तम्याः षष्ठ्यर्थत्वमाश्रित्याह-**अच** इति ।

'मतुवसो रु सम्बुद्धौ छन्दसि' इत्यतो 'रु' इत्यनुवर्तते । तदाह-**रुरिति** । सुडत्रागम एव गृह्यते, व्याख्यानात् । सूत्रे-**अत्र** इत्यस्य-रुप्रकरणे इत्यर्थः । राविति वक्तव्येऽत्रग्रहणात्ससजुष इति विहितस्य न ग्रहणम् । 'मतुवसो रु' 'इत्यतो 'रु' इत्यनुवर्त्य दिग्योगलक्षणपञ्चमीं च कृत्वाह-**रोः पूर्वस्येति** । 'अनुनासिकात्' इति ल्यब्लोपे पञ्चमीत्यभिप्रेत्याह-**अनुनासिकं विहायेति** । 'अनुनासिक'मित्यस्य हि अर्शआद्यजन्ततया अनुनासिकघटितप्रयोगमित्यर्थः । 'रोः' 'पूर्वस्य' इति अनुवर्त्य योग्यतया विभक्तिं विपरिणमय्य च व्याचष्टे-**रोः पूर्वस्मात् पर इति** ।

'पदस्य' इत्यधिकृत, 'रो रि'इत्यत 'र' इत्यनुवर्त्तते, तदन्तविध्यलोन्त्य-

१ सम् के मकार को रु होता है सुट् परे रहते । २ इस रुप्रकरण में रु से पूर्व अच् को अनुनासिक आदेश होता है । ३ इस ( अष्टमाध्याय तृतीयपाद स्थित ) रुप्रकरण मे अनुनासिकघटितप्रयोग को छोड़ कर रु से जो पूर्व अच् उससे परे अनुस्वार का आगम होय । ४ खर् परे रहते और अवसान में विद्यमान जो पदान्त रेफ उसको विसर्ग होय ।

*सम्पुंकानां सो वक्तव्यः[1] । सँस्स्कर्ता । संस्स्कर्ता ॥

**पुमः खय्यम्परे ८ । ३ । ६ ॥**

अम्परे खयि पुमो रुः स्यात्[2] । पुँस्कोकिलः । पुंस्कोकिलः ॥

**नश्छव्यप्रशान् ८ । ३ । ७ ॥**

अम्परे छवि नान्तस्य पदस्य रुः स्यात्[3], न तु प्रशान्शब्दस्य॥

**विसर्जनीयस्य सः ८ । ३ । ३४ ॥**

खरि विसर्जनीयस्य सः स्यात्[4] । चक्रिँस्त्रायस्व । चक्रिंस्त्रायस्व । अप्रशान् किम् ? । प्रशान् तनोति । पदान्तस्येति किम् ? । हन्ति ॥

**नॄन् पे ८ । ३ । १० ॥**

नॄनित्यस्य रुः स्याद्वा पकारे परे[5] ॥

**कुप्वोः ≍क≍पौ च ८ । ३ । ३७ ॥**[6]

विधिप्रवृत्तिलब्धमर्थमाह–पदान्तस्येति । 'खर्परे शरि शरि वा विसर्गलोप.' इत्यस्य 'कुप्वोः≍क≍पौ च' इत्यस्य चापवादोऽयं विसर्गविधिः । 'मतुवसो'–इत्यतः 'रु' इत्यनुवर्त्याह–रुरिति ।

'पदस्य' इत्यविकृत, तच्च विशेष्यं, 'न' इति च विशेषणम् । विशेषणेन च तदन्तविधि. । 'रु' इति 'अम्परे' इति चानुवर्तते इत्याह–अम्परे इति ।

'खरवसानयोः–' इत्यतः 'खरी'त्यनुवर्त्याह–खरीति ।

'नॄ'निति' द्वितीयान्तानुकरणं लुप्तषष्ठ्यन्तम् । 'रु' इति, 'उभयथर्क्षु'इत्यत 'उभयथे'ति चानुवर्त्तते । 'पे' इत्यकारो न विवक्षितः । ते नॄँः प्रीणाति, नॄः पुनाति–इत्यादौ रुत्वं सिध्यतीत्यभिप्रेत्याह–नॄनित्यस्येति । 'शर्परे विसर्जनीय.' इत्यतो 'विसर्जनीय.' इति चकारेणानुकृष्यते । 'विसर्जनीयस्य स.'

१ सम् पुम् कान् इनके विसर्ग को स होय । २ अम्परक खय् परे रहते पुम् के म को रु होय । ३ अम्परक छव् परे रहते नान्तपद को रु होय, परन्तु प्रशान् शब्दावयव नकारको रु नहीं होय । ४ खर परे रहते विसर्ग को स आदेश हो

५ नॄन् के नकार को रु होता है विकल्प से, पकार परे रहते ।

६ कवर्ग पवर्ग परे रहते विसर्ग को जिह्वामूलीय उपध्मानीय ये क्रम से हों । ( चकार से विसर्ग भी हो ) ।

कवर्गे पवर्गे च परे विसर्गस्य ≍क≍पौ स्तः । चाद्विसर्गः ।
नॄँ≍ पाहि । नॄँः पाहि । नॄं≍ पाहि । नॄंः पाहि । नॄन् पाहि ॥

[1] तस्य परमाम्रेडितम् ८ । १ । २ ॥

द्विरुक्तस्य परं रूपमाम्रेडितं स्यात् ॥

[2] कानाम्रेडिते ८ । ३ । १२ ॥

कान्नकारस्य रुः स्यादाम्रेडिते परे । काँस्कान् । कांस्कान् ॥

[3] छे च ६ । १ । ७३ ॥

ह्रस्वस्य छे परे तुगागमः स्यात् । शिवच्छाया ॥

[4] पदान्ताद्वा ६ । १ । ७६ ॥

दीर्घात्पदान्ताच्छे परे तुग् वा स्यात् । लक्ष्मीच्छाया । लक्ष्मीछाया ॥

इति हल्सन्धिप्रकरणम् ।

इत्यतो 'विसर्जनीयस्य' इति चानुवर्त्तते । तदाह **विसर्गस्येति** । तेन 'गजो गच्छति' इत्यादौ रोरुत्वं सिध्यति । विसर्जनीयपदानुवृत्त्यभावे तु रोः-स्थानेऽपि तदादेशापत्तिः स्यादिति बोध्यम् ।

**तस्येति** । 'सर्वस्य द्वे' इत्यनुवर्तनादभ्यासद्वित्वविषये नास्य प्रवृत्तिः ॥

'कान्'इति द्वितीयान्तानुकरणं लुप्तषष्ठ्यन्तम्, तल्लब्धमर्थमाह-**कान्नकारस्येति** ।

'ह्रस्वस्य पिति कृति तुक्' इत्यतः 'तुक्' इति 'ह्रस्वस्य' इति चानुवर्तते । तदाह **ह्रस्वस्येति** ।

'ह्रस्वस्य पिति कृति' इत्यतः 'तुक्' इति 'छे च' इत्यतः 'छे' इति 'दीर्घात्' इति सूत्रं चानुवर्ततेऽत आह-**दीर्घादित्यादि** । दीर्घस्यैवायं तुक् न तु छस्य, 'सेनासुराच्छाया' इति निर्देशात् । तत्फलं लक्ष्मीच्छाया चेच्छिद्यते इत्यादौ छकारश्रवणम् ।

१ आष्टमिक द्वित्व जिनको हुआ हो उनके परस्य ( शब्द ) की आम्रेडित सज्ञा हो । २ कान् के नकार को रु हो आम्रेडित परे रहते ।

३ ह्रस्व को तुक् का आगम होय छकार परे रहते।

४ पदान्तदीर्घ को तुक् का आगम हो, छकार परे रहते, विकल्प करके ।

# अथ विसर्गसन्धिप्रकरणम् ।

**विसर्जनीयस्य सः[1] ८ । ३ । ३४ ॥**

खरि विसर्जनीयस्य सः स्यात् । विष्णुस्त्राता ॥

**वा शरि[2] ८ । ३ । ३६ ॥**

शरि विसर्गस्य विसर्गो वा स्यात् । हरिः शेते । हरिश्शेते ॥

**ससजुषो रुः[3] ८ । २ । ६६ ॥**

पदान्तस्य सस्य, सजुष्शब्दस्य च रुः स्यात् ॥

**अतो रोरप्लुतादप्लुते ६ । १ । ११३ ॥**

[4]अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । शिवोऽर्च्यः ।

**हशि[5] च ६ । १ । ११४ ॥**

अप्लुतादतः परस्य रोरुः स्याद्धशि । शिवो वन्द्यः ॥

**भोभगोअघोअपूर्वस्य योऽशि[6] ८ । ३ । १७ ॥**

एतत्पूर्वस्य रोर्यादेशः स्यादशि । देवा इह । देवायिह । भोस्

'खरवसानयो.' इत्यतः 'खरि' इत्यनुवर्त्तते, तदाह खरीति ।

'विसर्जनीयस्य स.' इत्यतः 'विसर्जनीयस्य' इति, 'शर्परे विसर्जनीयः' इत्यतो 'विसर्जनीय' इति चानुवर्त्त्योक्तं-विसर्गस्य विसर्ग इति । 'पदस्य' इत्यनुवर्त्तते । तदन्तविध्यलोन्त्यविधिभ्यां लब्धमर्थमाह-पदान्तस्येति । 'एङ पदान्ता'दित्यतः 'अतो'ति 'ऋत उत्' इत्यतः 'उत्' इति चानुवर्त्तते । तदाह अप्लुतादिति ।

'अतो रोरप्लुतात' इति, 'उत्'इति चानुवर्तते । 'रोः सुपि' इत्यतो 'रोः'

१ विसर्ग के स्थान में सकार हो खर् परे रहते । २ शर् परे रहते विसर्ग को विसर्ग ही हो, विकल्प से । ३ (सान्त जो पद और सजुष्शब्दान्त जो पद उनके अन्त्य के सकार को रु होय । अर्थात् )-पदान्त जो सकार और सजुष शब्दान्त जो सकार उसको रु होय । ४ अप्लुत अकार से परे जो रु उसको उकार हो अप्लुत अकार परे रहते । ५ अप्लुत अकार से परे जो रु उसको उकार हो हश् परे रहते । ६ भो भगो अघो और अपूर्वक जो रु उसको यकार आदेश होय अश् परे रहते ।

भगोस् अघोस् इति सान्ता निपाताः । तेषां रोर्यत्वे कृते

**हलि सर्वेषाम्[1] ८ । ३ । २२ ॥**

भो-भगो-अघो-अपूर्वस्य यस्य लोपः स्याद्धलि । भो देवाः । भगो नमस्ते । अघो याहि ॥

**रोऽसुपि[2] ८ । २ । ६९ ॥**

अह्नो रेफादेशः स्यान्न तु सुपि । अहरहः । अहर्गणः ॥

**रो रि[3] ८ । ३ । १४ ॥**

रेफस्य रेफे परे लोपः स्यात् ॥

**ढ्रलोपे पूर्वस्य दीर्घोऽणः[4] ६ । ३ । १११ ॥**

ढरेफयोर्लोपनिमित्तयोः पूर्वस्याऽणो दीर्घः स्यात् ।

इत्यनुवर्ततेऽत आह-**रोरित्यादि** । **तेषामिति** । भोसादिनिपातानामित्यर्थः । तेन 'विभाषा भवद्भगवदघवतामोच्चावस्ये'ति निष्पन्नानामपि ग्रहणं सिध्यतीति भावः । 'भोभगो' इत्यतः 'भोभगोअघोअपूर्वस्य' इति, 'व्योर्लघु-' इत्यतो 'व्यो.' इति, 'लोपः शाकल्यस्य' इत्यतो 'लोपः' इति चानुवर्त्तते । तत्र वस्यैतत्पूर्वस्याऽसम्भवाद्यकारस्येति लब्धन्तदाह-**भोभगोअघोअपूर्वस्य यस्येत्यादि** ।

'अह्नन्' इति सूत्रानुवृत्तेराह-**अह्न इति** । **अहरह इति** । वीप्सायां द्विर्वचनम् । अहन्-अहरित्यलौकिकं वाक्यम् । प्रतिदिनमिति तदर्थः । अहर्गणः-दिनसमूहः, ज्यौतिषशास्त्रप्रसिद्धदिनसमूहो वा । **रोरीति** । सूत्रे 'रः'-षष्ठ्यन्तं, 'रि'-सप्तम्यन्तम् । 'ढो ढे लोप.' इति सूत्रात् लोपपदानुवृत्तेराह-**लोप इति** ।

ढश्च रश्च द्रौ । द्रौ लोपयतीति द्रलोप; तस्मिन् द्रलोपे इति विग्रह. । फलितमाह-**ढरेफयोर्लोपनिमित्तयोरिति** । ढकारलोपनिमित्ते ढकारे, रेफलोपनिमित्ते रेफे च परे पूर्वस्याऽणो दीर्घ इति यावत् । उत्तरपदाधिकार-

१ भो भगो अघो अपूर्वक जो यकार उसका लोप हो हल् परे रहते ।

२ अहन् शब्द को रेफादेश हो, सुप् परे हो तो नहीं होय । ३ रेफ का लोप हो रेफ परे रहते । ४ ढ और रेफ के लोप में निमित्तभूत जो ढ और रेफ, वे परे रहते उनके पूर्व के अण् को दीर्घ हो ।

पुना रमते । हरी रम्यः । शम्भू राजते । अणः किम् ? । तृढः । वृढः ।

मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे कृते रो रीति लोपे च प्राप्ते ।

**विप्रतिषेधे परं कार्यम् १ । ४ । २ ॥**

तुल्यबलविरोधे परं कार्यं स्यात् । इति लोपे प्राप्ते । 'पूर्वत्राऽसिद्ध'मिति रो रीत्यस्याऽसिद्धत्वादुत्वमेव । मनोरथः ॥

**एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ६ । १ । १३२॥**

अककारयोरेतत्तदोर्यः सुस्तस्य लोपः स्याद्धलि न तु नञ्समासे । एष विष्णुः । स शम्भुः । अकोः किम् ? । एषको रुद्रः । अनञ्समासे किम् ? । असः शिवः । हलि किम् ? । एषोऽत्र ॥

**सोऽचि लोपे चेत्पादपूरणम् ६ । १ । १३४ ॥**

'स' इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत । सेमामविड्ढि प्रभृतिम् । सैष दाशरथी रामः ॥

इति विसर्गसन्धिः ॥ इति पञ्चसन्धिप्रकरणम् ॥

---

निवृत्त्यर्थमत्र पूर्वग्रहणं, तेन व्यस्तेऽपि पूर्वस्य दीर्घः सिध्यति । तदाह **पुना रमते इत्यादि** । **तुल्येति** । अन्यत्र अन्यत्र लब्धावकाशयोः शास्त्रयोरेकत्र ( लक्ष्ये ) समावेशस्तुल्यबलविरोधः ।

**सोऽचीति** । 'सस्' इति प्रथमान्तानुकरण लुप्तषष्ठ्यन्तम् । 'सुलोप' इति वर्ततेऽत आह-**स इत्यस्येति** । पादशब्देनाऽत्र सूत्रे ऋक्पादवत् श्लोकपादोऽपि ग्राह्य इत्याशयेन ऋक्पादमुदाहृत्य श्लोकपादमप्युदाहरति-**सैष दाशरथिरिति** । अत्र लोपाभावे सस्य रुत्वे यत्वे लोपे तस्यासिद्धत्वाद्वृद्ध्यादेरभावे नवाक्षरत्वापत्त्याऽष्टाक्षराऽनुष्टुप्पादभङ्गः स्पष्ट एव । **इति विसर्गसन्धिः** ।

---

१ तुल्यबलविरोध होने पर कार्य होता है । २ ककार रहित जो एतत् और तद् शब्द, तदर्थगतसङ्ख्याभिधायी जो सु, उसका लोप हो, हल् परे रहते, नञ् समास में न हो । ३ तद् शब्द के सु का लोप हो अच् परे रहते । यदि लोप होने पर पाद की पूर्ति होती हो तो । इति विसर्गसन्धिः ॥

# अथ षड्लिंगेषु अजन्तपुँल्लिङ्गप्रकरणम् ।

**[1]अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १ । २ । ४५ ॥**

धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ।

**[2]कृत्तद्धितसमासाश्च १ । २ । ४६ ॥**

कृत्तद्धितान्तौ समासाश्च प्रातिपदिकसंज्ञाः स्युः ॥

**[3]स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ४ । १ । २ ॥**

[ङ्याबन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः ] । सु औ जस् इति प्रथमा । अम् औट् शस् इति द्वितीया । टा भ्याम् भिस् इति तृतीया । ङे भ्याम् भ्यस् इति चतुर्थी । ङसि भ्याम् भ्यस् इति पञ्चमी । ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी ॥

**ङ्याप्प्रातिपदिकात् ४ । १ । १ ॥**

**[4]प्रत्ययः ३ । १ । १ ॥**

अर्थवदिति । लोके अर्थविषयकबोधजनकत्वम् अर्थवत्त्वम् । अत्र अर्थवद्ग्रहणं धनं वनमित्यादौ प्रतिवर्णं प्रातिपदिकसंज्ञावारणाय । अहन्नित्यादौ प्रातिपदिकसंज्ञावारणाय 'अधातु'रिति पर्युदासः । क्विबन्तविजन्तेषु धातुत्वानपायात्प्रातिपदिकत्वसिद्धयेऽत्र सूत्रे कृद्ग्रहणम् । दाशरथिरित्यादौ तद्धितान्ते प्रत्ययान्तत्वेन पूर्वेणाऽप्राप्तेः प्रातिपदिकत्वसिद्धये तद्धितग्रहणम् । समासपदं तु नियमार्थम् । 'यत्र सङ्घाते पूर्वो भागः पदमुत्तरस्तु प्रत्ययो न, तस्य चेद्भवति

१ धातुभिन्न, प्रत्ययभिन्न, प्रत्ययान्तभिन्न जो अर्थवान् शब्दस्वरूप उसकी प्रातिपदिकसंज्ञा होय ।

२ कृदन्त, तद्धितान्त और समास इनकी प्रातिपदिक संज्ञा होय ।

३ ङ्यन्त आबन्त और प्रातिपदिक से परे स्वादि प्रत्यय हों ।

४ पञ्चमाध्याय की समाप्ति पर्यन्त इन तीनों सूत्रों का अधिकार जानना ।

१ अयं पाठोऽस्माभिर्वर्द्धितः ।

परश्च ३ । १ । २ ॥

—इत्यधिकृत्य । ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः ।

सुपः[1] १ । ४ । १०३ ॥

सुपस्त्रीणि त्रीणि वचनान्येकश एकवचन-द्विवचन-बहुवचन-संज्ञानि स्युः ।

द्व्येकयोर्द्विवचनैकवचने[2] १ । ४ । २२ ॥

द्वित्वैकत्वयोरेते स्तः ॥

विरामोऽवसानम्[3] १ । ४ । ११० ॥

वर्णानामभावोऽवसानसंज्ञः स्यात् । रुत्वविसर्गौ । रामः ॥

सरूपाणामेकशेष एकविभक्तौ १ । २ । ६४ ॥

एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ।

---

तर्हि समासस्यैव'इति च नियमाकारः । तेन 'गामम्याज शुक्लां दण्डेने'त्यादौ वाक्यस्य प्रातिपदिकसञ्ज्ञा न भवति ।

ङ्यन्तादिति । इय वृत्तिः स्वौजसमौडित्यस्येति ध्येयम् ।

'तिङस्त्रीणि त्रीणि' इत्यतः 'त्रीणि त्रीणि' इति, 'तान्येकवचने'त्यतः 'एक-वचनद्विवचनबहुवचनान्येकशः'—इति चानुवर्त्याह—त्रीणि त्रीणीति ।

द्व्येकयोरिति । भाष्यकृता—तु 'एकवचनम्' इति सामान्यसूत्रं कृत्वा तस्य बाधकं 'द्विबह्वोर्द्विवचनबहुवचने' इति सूत्रं कृत्वा एकपदं प्रत्याख्यातम् । तथा चोच्चैरित्याद्यव्ययेभ्योऽप्येकवचनं सिध्यति । प्रातिपदिकार्थगते एकत्वे विवक्षिते एकवचन, द्वित्वे विवक्षिते द्विवचनमिति च सूत्रार्थः ।

शब्दानुशासनेऽभावो भावो वा वर्णानामेव सम्भवतीत्यत आह—वर्णानामिति । 'वृद्धो यूना'—इत्यत एवेत्यपकृष्यतेऽत आह—सरूपाण्येवेति । तेन जननीपरिच्छेतृवाचिनोर्मातृशब्दयोर्नैकशेषः, तयोर्भ्यामादिषु सारूप्ये-

१ सुप् के जो तीन २ वचन वे प्रत्येक नाम एक एक करके एकवचन द्विवचन बहुवचनसंज्ञक हों । २ द्वित्व की विवक्षा में द्विवचन हो और एकत्व की विवक्षा में एकवचन हो । ३ वर्णों का जो अभाव सो अवसानसंज्ञक हो ।

४ विभक्तित्वावच्छिन्न यावत् विभक्ति परे रहते जिनका समान रूपही देखा जाय उनका एक शेष रहे । ( अवशिष्ट का लोप होय ) ।

**प्रथमयोः पूर्वसवर्णः ६ । १ । १०२ ॥**

अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात् ।
इति प्राप्ते ॥

**नादिचि ६ । १ । १०४ ॥**

आदिच्चि [ परे ] न पूर्वसवर्णदीर्घः । वृद्धिरेचि । रामौ ॥

**बहुषु बहुवचनम् १ । ४ । २१ ॥**

बहुत्वविवक्षायां बहुवचनं स्यात् ॥

**चुटू १ । ३ । ७ ॥**

प्रत्ययाद्यौ चुटू इतौ स्तः ॥

**विभक्तिश्च १ । ४ । १०४ ॥**

सुप्तिङौ विभक्तिसञ्ज्ञौ स्तः ॥

ऽप्यौजसादौ वैरूप्यात् । 'अकः सवर्णे दीर्घः' इत्यतः 'अकः' इति 'दीर्घ' इति च 'इको यणचि' इत्यतः 'अचि' इति चानुवर्ततेऽत आह-अक इत्यादि । 'प्रथमयोः पूर्वसवर्ण' इत्यतो पूर्वसवर्णपदमनुवर्त्याह **पूर्वसवर्णेति** । 'वृद्धिरचि' इत्येतद्बाधोद्यतस्यैव 'प्रथमयोः' इति पूर्वसवर्णदीर्घस्य 'नादिचि' इत्यनेन बाधनात् 'वृद्धिरेचि' इति शास्त्रमबाधितमेवेति तच्छास्त्रं प्रवर्तते एवेति भावः ।

'उपदेशेऽज्' इत्यतः 'इत्' इति 'पः प्रत्ययस्य' इत्यतः 'प्रत्ययस्ये'ति 'आदिर्ञिटुडवः' इत्यतः 'आदि' इत्यनुवर्ततेऽत आह-**प्रत्ययाद्याविति** ।

'तिङस्त्रीणि त्रीणि' इत्यतः 'तिङ' इति 'सुपः' इति सूत्रं चानुवर्ततेऽत आह-**सुप्तिङाविति** ।

१ अक् से प्रथमा द्वितीया सम्बन्धी अच् परे रहते पूर्वपर के स्थान में पूर्वसवर्णदीर्घ एकादेश हो । २ अवर्ण से इच् परे, रहते पूर्वसवर्णदीर्घ नहीं हो । ३ बहुत्व की विवक्षा में बहुवचन हो । ४ प्रत्यय के आदि के चवर्ग और टवर्ग की इत्संज्ञा हो । ५ सुप् और तिङ् की विभक्तिसंज्ञा हो ।

न[1] विभक्तौ तुस्माः १ । ३ । ४ ॥

विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः । इति सस्य नेत्त्वम् । रामाः ॥

एकवचनं[2] सम्बुद्धिः २ । ३ । ४९ ॥

सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसंज्ञं स्यात् ॥

यस्मात्[3]प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १।४।१३ ॥

यः प्रत्ययो यस्मात् क्रियते तदादि शब्दस्वरूपं तस्मिन्प्रत्यये परेऽङ्गसञ्ज्ञं स्यात् ॥

एङ्ह्रस्वात्[4]सम्बुद्धेः ६ । १ । ६९ ॥

एङन्ताद्ध्रस्वान्ताच्चाऽङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत् । हे राम । हे रामौ । हे रामाः ॥

अमि[5] पूर्वः ६ । १ । १०७ ॥

अकोऽम्यचि पूर्वरूपमेकादेशः स्यात् । रामम् । रामौ ॥

---

'उपदेशेऽज्' इत्यतः 'इत्' इत्यनुवृत्तेराह-इत इति । इत्सञ्ज्ञका इत्यर्थः । 'सम्बोधने च' इत्यतः 'सम्बोधने' इति प्रातिपदिकार्थलिङ्ग-' इति सूत्रतः 'प्रथमा' इति चानुवर्त्योक्तं-**सम्बोधने इत्यादि** ।

**यस्मादिति** । अत्र तदादिग्रहणं च 'भवामि' 'भविष्यामि' इत्यादौ विकरणविशिष्टस्याङ्गसंज्ञार्थम् । लोपो व्योर्वलि' 'हल्ङ्याब्भ्यः' इत्याभ्यां लोपहल्पदयोरनुवृत्तिः । प्रत्ययग्रहणपरिभाषया तदाद्यंशस्योपस्थितौ तदन्तविधिस्तत्फलितमर्थमाह **एङन्तादित्यादि** । सम्बुद्धेरवयवश्चेदित्यर्थः ।

'इको यण्-' इत्यतोऽचीति 'एकः पूर्वपरयोः' इति चानुवर्ततेऽत आह-**अचीति** । 'उपदेशेऽज्-' 'षः प्रत्ययस्य' 'आदिर्ञिटुडवः'-इत्येतेभ्यः 'इत्' 'प्रत्य-

---

१ विभक्तिस्थ तवर्ग सकार मकार की इत्संज्ञा नहीं हो । २ सम्बोधन में प्रथमा का जो एकवचन ( सु ) उसकी सम्बुद्धिसंज्ञा हो । ३ जो प्रत्यय जिससे किया जाय तदादि जो शब्दस्वरूप वह उस प्रत्यय के परे रहते अङ्गसञ्ज्ञक होता है । ४ एङन्त ह्रस्वान्त जो अङ्ग उससे परे सम्बुद्ध्यवयव हल् का लोप हो । ५ अक् से अम् में जो अच् वह पर रहते पूर्वपर के स्थान में पूर्वरूप एकादेश हो ।

**[1] लशक्वतद्धिते १ । ३ । ८ ॥**

तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः ॥

**[2] तस्माच्छसो नः पुंसि ६ । १ । १०३ ॥**

पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि ।

**[3] अट्कुप्वाङ्नुम्व्यवायेऽपि ८ । ४ । २ ॥**

अट् कवर्गः पवर्ग आङ् नुम्—एतैर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात्समानपदे । इति प्राप्ते ।

**[4] पदान्तस्य ८ । ४ । ३७ ॥**

पदान्तस्य नस्य णत्वं न स्यात् । रामान् ॥

**[5] टाङसिङसामिनात्स्याः ७ । १ । १२ ॥**

अदन्ताट्टादीनामिनादयः स्युः । णत्वम् । रामेण ॥

यस्य' 'आदि' इति चानुवर्ततेऽत आह—तद्धितवर्जेति । तद्धितभिन्नप्रत्ययाद्या इति तदर्थः । प्रकृते रोमशः सिध्मलः नौका इत्यादौ शकारादेरित्सञ्ज्ञाया व्यावृत्तये अतद्धित इति । तच्छब्देन पूर्वसवर्णदीर्घं परामृशन् व्याचष्टे-पूर्वसवर्णदीर्घादिति । 'रषाभ्यां नो णः समानपदे' इति सूत्रमनुवर्ततेऽत आह-रषाभ्यामिति । निमित्तानधिकरणनिमित्तिमत्पदाऽघटितत्वं समानपदत्वम् । 'रषाभ्यां नो णः समानपदे' इत्यतो 'न' 'इत्यनुवर्त्याह—नस्येत्यादि । अतो भिस—' इत्यतः 'अतः' इत्यनुवर्तते, 'अङ्गस्य' इत्यधिक्रियते । विशेषणेन च तदन्तविधिरित्याह— अदन्तादिति ।

१ तद्धितवर्ज प्रत्यय का आदि जो लकार शकार और कवर्ग उनकी इत्सञ्ज्ञा हो । २ पूर्वसवर्णदीर्घ से परे जो शस् का सकार उसको नकार आदेश हो । ३ अट्, कवर्ग, पवर्ग, आङ्, नुम् इनका अलग २ या जितने का सम्भव हो उनका—व्यवधान होने पर भी रेफ षकार से परे जो नकार उसको णकार हो, समानपद में ।

४ पदान्त के नकार को णत्व नहीं हो । ५ अदन्त अङ्ग से परे जो 'टा' 'ङसि' 'ङस्' उनके स्थान में क्रमसे 'इन' 'आत्' 'स्य' ये आदेश हों ।

**सुपि च ७ । ३ । १०२ ॥**

यञादौ सुप्यतोऽङ्गस्य दीर्घः स्यात् । रामाभ्याम् ।

**अतो भिस ऐस् ७ । १ । ९ ॥**

[अकारान्तादङ्गाद्भिस ऐस् स्यात् ] अनेकाल्शित्सर्वस्य । रामैः ।

**ङेर्यः ७ । १ । १३ ॥**

अतोऽङ्गात्परस्य ङेर्यादेशः स्यात् ।

**स्थानिवदादेशोऽनल्विधौ १ । १ । ५६ ॥**

आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ । इति स्थानिवत्त्वात् 'सुपि चे'ति दीर्घः । रामाय । रामाभ्याम् ॥

**बहुवचने झल्येत् ७ । ३ । १०३ ॥**

झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः स्यात् । रामेभ्यः । सुपि किम् ? । पचध्वम् ॥

सुपि-सप्तम्यन्तं, च-अव्ययपदम् । 'अतो दीर्घो यञी'त्यतो यञी-त्यनुवर्त्तते । यञीत्यल्ग्रहणात्-'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषया तदादिविधिरित आह-**यञादाविति** । अतः-पञ्चम्यन्तं, भिसः-षष्ठ्यन्तम्, ऐस्-प्रथमान्तम् । 'एस्' इत्यत्र सौत्रत्वान्न रुत्वविसर्गौ । अत्र 'एस्' तु न कृतः, अतो गुणे इति पररूपापत्तेः । यदि तु एकारोच्चारणसामर्थ्यान्न पररूपम् , अन्यथा इसमेव विदध्यात् , गुणेनोक्तरूपसिद्धेरित्युच्यते तर्हि नद्यै-रित्यादौ वेदे तदावश्यकमिति गृहाण । ङे-षष्ठ्यन्तं, यः-प्रथमान्तम् । **स्थानिवत्**-अव्ययपदं (प्रथमान्तम्), **आदेशः**-प्रथमान्तम्, **अनल्विधौ**-सप्तम्यन्तम् । **बहुवचने**-सप्तम्यन्त, **झलि**-सप्तम्यन्तम्, **एत्**-प्रथमान्तम्।

१ यञादि सुप् परे रहते अदन्त अङ्ग को दीर्घ हो । २ अदन्त अङ्ग से परे जो भिस् उसके स्थान में ऐस् आदेश हो । ३ अदन्त अङ्ग से परे 'ङे'जो उसके स्थान मे 'य' आदेश हो । ४ आदेश स्थानिवत् ( स्थाननिवृत्तिधर्मवान् ) हो । परन्तु स्थानी सम्बन्धी जो अल् तदाश्रयविधि कर्त्तव्य हो तो स्थानिवद्भाव नहीं हो ।

५ झलादि बहुवचन सुप् परे रहते अदन्त अङ्ग को एकार आदेश हो ।

**वाऽवसाने ८।४।५६॥**[1]

अवसाने झलां चरो वा स्युः। रामात्। रामाद्। रामाभ्याम्। रामेभ्यः। रामस्य॥

**ओसि च ७।३।१०४॥**[2]

ओसि परेऽतोऽङ्गस्यैकारः स्यात्। रामयोः॥

**ह्रस्वनद्यापो नुट् ७।१।५४॥**[3]

ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः स्यात्॥

**नामि ६।४।३॥**[4]

नामि परेऽजन्ताङ्गस्य दीर्घः स्यात्। रामाणाम्। रामे। रामयोः। सुपि एत्वे कृते॥

**आदेशप्रत्यययोः ८।३।५९॥**[5]

इण्कवर्गाभ्यां परस्याऽपदान्तस्याऽऽदेशः प्रत्ययावयवश्च यः सकारस्तस्य मूर्धन्यादेशः स्यात्। ईषद्विवृतस्य सस्य तादृश एव षः। रामेषु। एवं कृष्णादयोऽप्यदन्ताः॥

---

**वावसाने।** वा-अव्ययपदम्, **अवसाने**-सप्तम्यन्तम्।

**ओसि**-सप्तम्यन्तं, **च**-अव्ययपदम्। ह्रस्वश्च नदी च आप् च-एषां समाहारः ह्रस्वनद्याप्, तस्मात्-**ह्रस्वनद्यापः**-पञ्चम्यन्तं, **नुट्**-प्रथमान्तम्।

**नामि**-सप्तम्यन्तम्। **आदेशप्रत्यययोः**-षष्ठ्यन्तम्। आदेशरूपो यः सकारः, प्रत्ययावयवश्च यः सकारस्तस्य मूर्धन्यादेश इत्यर्थः। तत्र ऋटुरषाणां मूर्धस्थानिकत्वात्सर्वेषां प्राप्तावाह-**ईषदिति**। 'ईषद्विवृतमूष्मणा'-मित्युक्तेरिति भावः। **एवं**-रामशब्दवत्। **अदन्ताः**-अदन्ताः पुँल्लिङ्गाः। 'बोन्यो' इति

१ अवसान में झलों के स्थान में चर् हों विकल्प करके। २ ओस् परे रहते अदन्त अङ्ग को एकार आदेश हो। ३ ह्रस्वान्त नद्यन्त और आबन्त जो अङ्ग उससे परे जो आम् उसको नुट् का आगम हो। ४ अजन्त अङ्ग को दीर्घ हो नाम् परे रहते। ५ इण् कवर्ग से परे जो अपदान्त आदेशरूप सकार और प्रत्ययावयव सकार उसको मूर्धन्य (षकार) आदेश हो।

सर्वादीनि सर्वनामानि १ । १ । २७ ॥

[सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः] सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम ।
पूर्वपराऽवरदक्षिणोत्तराऽपराऽधराणि व्यवस्थायामसञ्ज्ञायाम्।
स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः ।
त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥

जसः शी ७ । १ । १७ ॥

अदन्तात्सर्वनाम्नो जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः । सर्वे ॥

सर्वनाम्नः स्मै ७ । १ । १४ ॥

अतः सर्वनाम्नो ङे इत्यस्य स्मै स्यात् । सर्वस्मै ।

---

शेषः । सर्वादीनि-प्रथमान्तं, सर्वनामानि-प्रथमान्तम् । तद्गुणसंविज्ञानोऽयं बहुव्रीहिः, 'अदः सर्वेषा'मित्यादि निर्देशात् ।

पूर्वपरेति । पूर्वादीनि व्यवस्थायामसञ्ज्ञायां सर्वनामसञ्ज्ञानि स्युरिति गणसूत्रार्थः । स्वमिति । ज्ञातिधनान्यवाची ( आत्माऽऽत्मीयार्थवाची ) स्वशब्दः सर्वनामसञ्ज्ञः स्यात् । अन्तरमिति । बाह्ये परिधानीये चाऽर्थेऽन्तरशब्दः सर्वनामसञ्ज्ञो भवतीति गणसूत्रार्थः ।

'अतो भिस्'-इत्यतो 'अतः' इति, 'सर्वनाम्नः स्मै' इत्यतः 'सर्वनाम्नः' इति पदद्वयमनुवर्तते, विशेषणेन च तदन्तविधिरित्यत आह-अदन्तादित्यादि ।

'अतो भिस्' 'ङेर्यः' इत्याभ्यां अतः' 'ङेः' इति, चानुवर्त्याह-अतः

---

१ सर्वादि जो शब्दस्वरूप सो सर्वनामसंज्ञक हो । २ पूर्व पर अवर दक्षिण उत्तर अपर अधर इनकी व्यवस्था और असंज्ञा में सर्वनाम संज्ञा हो । ३ ज्ञाति धन से अन्य जो ( आत्मा आत्मीय ) अर्थ उसमें स्वशब्द की सर्वनामसंज्ञा हो । ४ बहिर्योग और उपसंव्यान ( पहिरना ) अर्थ में अन्तरशब्द की सर्वनाम संज्ञा हो । ५ अदन्त सर्वनाम से परे जो जस् उसके स्थान में शी आदेश हो । ६ अदन्त सर्वनाम से परे जो 'ङे' उसको 'स्मै' आदेश हो ।

**ङसिङ्योः स्मात्स्मिनौ । ७ । १ । १५ ॥**

अतः सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् ॥

**आमि सर्वनाम्नः सुट् । ७ । १ । ५२ ।**

अवर्णान्तात्परस्य सर्वनाम्नो विहितस्याऽऽमः सुडागमः स्यात् । एत्वषत्वे । सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् । एवं विश्वादयोऽप्यदन्ताः । **उभशब्दो नित्यं द्विवचनान्तः** । उभौ २ । उभाभ्याम् ३ । उभयोः २ । तस्येह पाठोऽकजर्थः । उभयशब्दस्य द्विवचनं नास्ति । उभयः । उभये । उभयम् । उभयान् । उभयेन । उभयैः । उभयस्मै । उभयेभ्यः । उभयस्मात् । उभयेभ्यः । उभयस्य । उभयेषाम् । उभयस्मिन् । उभयेषु । डतरडतमौ प्रत्ययौ । 'प्रत्यय-

**सर्वनाम्न** इति । **अवर्णान्तादिति** । अवर्णान्तादङ्गात्परस्येत्यर्थः, तेन येषां तेषामित्यादौ सुट् सिद्धिः । **एत्वषत्वे इति** । एत्वं-'बहुवचने झल्ये'-दित्यनेन, षत्वम्-'आदेशप्रत्यययो'रित्यनेनेति विवेकः ।

ननु सर्वनामसञ्ज्ञाकार्यमेकवचनबहुवचनयोरेवेति नित्यं द्विवचनान्तोभशब्दस्य सर्वादिषु पाठ इह व्यर्थोऽत आह-**तस्येति** । **तस्य**-नित्यद्विवचनान्तस्य उभशब्दस्य । **इह**-सर्वादिगणे । **अकजर्थः**-'अव्ययसर्वनाम्नामकच्प्राक्टे'रित्यनेनोभकावित्यादावकजर्थः । भाष्ये 'उभयो मणिः' 'उभये देवमनुष्याः' इति एकवचने बहुवचने च उभयशब्दप्रयोगो दृश्यते, न तु द्विवचने तत्प्रयोगोऽत उभयशब्दस्य द्विवचनं नास्तीत्यभिप्रायः । तदेवम्-उभयः, उभये-**प्रथमा** । उभयम्, उभयान्-**द्वितीया** । उभयेन, उभयैः-**तृतीया** । एवमग्रेऽपि । उभयशब्दस्य द्विवचनं नास्तीति **कैयटः** । अस्तीति **हरदत्तः** । **इति**=इत्यनया परिभाषया, **तदन्ताः**=डतर-डतम-प्रत्ययान्ताः कतर-

१ अदन्त सर्वनाम से परे जो 'ङसि' और 'ङि' उसको क्रम से 'स्मात्' 'स्मिन्' आदेश हो । २ अवर्णान्त अङ्ग से परे सर्वनाम से विहित जो आम् उसको सुट् का आगम हो ।

ग्रहणे तदन्तग्रहण'मिति तदन्ता ग्राह्याः । नेम इत्यर्धे । समः सर्वपर्यायः । तुल्यपर्यायस्तु न, 'यथासङ्ख्यमनुदेशः समाना'मिति ज्ञापकात्॥

**पूर्वपराऽवरदक्षिणोत्तराऽपराऽधराणि व्यवस्थाया-मसञ्ज्ञायाम् । १ । १ । ३४ ।**

एतेषां व्यवस्थायामसञ्ज्ञायां सर्वनामसञ्ज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे । पूर्वाः । असञ्ज्ञायां किम् ? । उत्तराः कुरवः । **स्वाभिधेयापेक्षावधिनियमो व्यवस्था** । व्यवस्थायां किम् ? । दक्षिणा गाथकाः । कुशला इत्यर्थः ॥

---

कतम-यतर-यतम-ततर-ततम-एकतर-एकतमशब्दाः सर्वादिगणे बोध्या इत्यर्थः ।

**सर्वपर्यायः**-सर्वार्थकः समशब्दोऽत्र गणे ग्राह्य इत्यर्थः । तुल्यार्थकस्य सर्वादिगणे पाठे तु 'समाना'मित्यत्र 'समेषा'मिति स्यादिति भावः ।

**एतेषां**=पूर्वादिशब्दानां, **गणसूत्रात्**='पूर्वपरावरे'त्यादिपूर्वोक्तगणसूत्रात्, **सर्वत्र**=सर्वासु विभक्तिषु, या सर्वनाम सञ्ज्ञा प्राप्ता सा जसि परतो विकल्पेन भवतीत्यर्थः । **उत्तराः कुरव इति** । देशविशेषस्य सञ्ज्ञेयम् । (रूसका यूक्रेन प्रदेश) । **स्वाभिधेयेति** । अपेक्ष्यते इति-**अपेक्षः** । कर्मणि घञ् । स्वस्य अभिधेय स्वाभिधेयः, स्वाभिधेयस्य-अपेक्षः-स्वाभिधेयापेक्षः, अवधेर्नियमः-अवधिनियमः, स्वाभिधेयापेक्षश्चासाववधिनियमश्च-स्वाभिधेयापेक्षावधिनियम इति विग्रहः । तथा च **स्वस्य**=पूर्वादिशब्दस्य, **अभिधेयः**=वाच्यो यो दिग्देशकालरूपोऽर्थः, तेन अपेक्ष्यमाणो यो अवधेर्नियमः-स एव व्यवस्थेत्यर्थः । यथा 'प्रयागात्काशी पूर्वे'त्यत्र पूर्वशब्दार्थेन 'कुतः पूर्वे'त्यवधेर्नियमस्य अपेक्षणाद्भवति तत्र व्यवस्थेत्यवधेयम् ।

---

१ पूर्व पर अवर दक्षिण उत्तर अपर अधर इन शब्दों की व्यवस्था में और असंज्ञा में सर्वत्र गणसूत्र करके नित्य पाई जो सर्वनाम संज्ञा सो जस् परे रहते विकल्प करके हो । २ स्व करके लेना पूर्वादि शब्द, उनका जो अभिधेय-अर्थ, उससे अपेक्ष्यमाण जो अवधि का नियम-सो व्यवस्था कहाता है ।

**स्वमज्ञातिधनाख्यायाम् । १ । १ । ३५ ।**

ज्ञातिधनान्यवाचिनः स्वशब्दस्य या प्राप्ता सञ्ज्ञा सा जसि वा स्यात् । स्वे । स्वाः । आत्मीया, आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः । ज्ञातयोऽर्था वा ॥

**अन्तरं बहिर्योगोपसंव्यानयोः । १ । १ । ३६ ॥**

बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य या प्राप्ता सञ्ज्ञा सा जसि वा स्यात् । अन्तरे अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ॥

**पूर्वादिभ्यो नवभ्यो वा । ७ । १ । १६ ॥**

एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । एवं परादीनाम् । शेषं सर्ववत् ॥

ज्ञातिधनान्येति । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रिया धने' इति कोशप्रामाण्यात्स्वशब्दस्य आत्मात्मीयज्ञातिधनानि अर्थाः, तत्र ज्ञातिधनातिरिक्ते आत्मात्मीयरूपार्थे स्वशब्दस्य सर्वासु विभक्तिषु 'स्वमज्ञातिधनाख्याया'मिति गणसूत्रेण नित्यं सर्वनामसञ्ज्ञा प्राप्ता सा जसि परतो विकल्पेन भवतीति सूत्रार्थः ।

ज्ञातीति । ज्ञातिधनवाचिनः स्वशब्दस्य तु जसि 'स्वाः' इत्येव रूपं भवतीत्यर्थः । प्राप्ता='अन्तरं बहिर्योगोपे'ति पूर्वोक्तेन गणसूत्रेण सर्वत्र नित्यं प्राप्ता । सेयं सर्वनामसञ्ज्ञा जसि परतो विकल्पेन भवतीत्यर्थः ।

एभ्यः=पूर्वोक्तेभ्यो नवभ्यः पूर्वपराऽवरदक्षिणोत्तराऽपराऽधरस्वाऽन्तरशब्देभ्य । परादीनां 'शब्दानां रूपाणि बोध्यानी'ति शेष । उक्तसञ्ज्ञाः=सर्वनामसञ्ज्ञा ।

१ ज्ञातिधन से अन्य जो (आत्मा आत्मीय) अर्थ उसमें स्वशब्द की गणसूत्र से सर्वत्र नित्य पाई जो सवनामसंज्ञा सो जस् परे रहते विकल्प से हो ।

२ बाह्य और परिधानीय अर्थ में अन्तरशब्द की गणसूत्र से सर्वत्र नित्य पाई जो सर्वनामसञ्ज्ञा वह जस् परे रहते विकल्प से हो । ३ पूर्वादि नौ शब्दों से परे जो ङसि और ङि उनको स्मात् स्मिन् आदेश विकल्प से हो ।

**प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ।१।१।३३।**

एते जसि उक्तसञ्ज्ञा वा स्युः । प्रथमे । प्रथमाः । तयः प्रत्ययः । द्वितये । द्वितयाः । शेषं रामवत् । नेमे । नेमाः । शेषं सर्ववत् । *तीयस्य ङित्सु वा । द्वितीयस्मै । द्वितीयायेत्यादि । एवं तृतीयः । निर्जरः ॥

**जराया जरसन्यतरस्याम् ।७।२।१०१।**

जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ । *पदाङ्गाधिकारे तस्य (च) तदन्तस्य च । निर्दिश्यमानस्यादेशा भवन्ति ।

**तय इति ।** प्रत्ययः=सङ्ख्याया अवयवे तयप्' इति शास्त्रेण विहितः । एवञ्च 'प्रत्ययग्रहणे तदन्तग्रहण'मिति तयप्प्रत्ययान्तानां द्वितय-द्वय-त्रितय-त्रय-चतुष्टय-पञ्चतय-षट्तय-सप्ततयादीनां ग्रहणं बोध्यम् । **तीयस्येति ।** तीयप्रत्ययान्तस्य ङिद्वचने परतः सर्वनामसञ्ज्ञा वा स्यादित्यर्थः ।

**निर्जरः**=देवः । ननु 'जराया जर' सित्यनेन जराशब्दस्य जरस् विधीयते, निर्जरशब्दे तु न जराशब्दः किन्तु जरशब्दस्तत्रेत्यत आह-**पदाङ्गाधिकारे इति ।** **तस्य**=तत्सूत्रोच्चरितस्य, **तदन्तस्य**=तत्सूत्रोच्चरितान्तस्य । 'जराया जरस्'-इति चाङ्गाधिकारपठितं शास्त्रमतो जरान्तस्याऽपि निर्जरशब्दस्य जरसादेशः सुलभ इत्याशयः । नन्वेवमनेकाल्त्वान्निर्जरशब्दस्य स्थाने जरसादेशः प्राप्नोति, तस्य जराशब्दान्तत्वादत आह **निर्दिश्येति ।** सूत्रे उच्चार्यमाणस्य जराशब्दस्यैवादेश इत्यर्थः । षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयत्वञ्च निर्दिश्यमानत्वम् । प्रकृते च 'जराया' इति षष्ठी । नन्वेवमपि-निर्दिश्यमानत्वं प्रकृते जराशब्दस्य न तु जरशब्दस्य, निर्जरशब्दे तु न

---

१ प्रथम, चरम, तयप्रत्ययान्तशब्द और अल्प, अर्द्ध, कतिपय, नेम इनकी जस् परे रहते सर्वनामसञ्ज्ञा विकल्प से हो ।

२ तीयप्रत्ययान्त की ङिद्वचन परे रहते सर्वनामसञ्ज्ञा विकल्प से हो ।

३ जराशब्द को जरस् आदेश हो विकल्प करके अजादिविभक्ति परे रहते ।

४ पदाधिकार में और अङ्गाधिकार में जो कार्य कहे हैं वे जिसको कहे हैं उसको हों और वह अन्त में जिसके है उसको भी हों ।

५ षष्ठीप्रकृतिजन्य प्राथमिक उपस्थिति विषय जो शब्द उसको आदेश होता है ।

एकदेशविकृतमनन्यवदिति जरशब्दस्य जरस् । निर्जरसौ । निर्जरस इत्यादि । पक्षे हलादौ च रामवत् ।

विश्वपाः ।

**दीर्घाज्जसि च । ६ । १ । १०५ ।**

दीर्घाज्जसि इचि च परे प्रथमयोः पूर्वसवर्णदीर्घो न स्यात् । विश्वपौ । विश्वपाः । हे विश्वपाः । विश्वपाम् । विश्वपौ ।

**सुडनपुंसकस्य । १ । १ । ४३ ।**

स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ॥

**स्वादिष्वसर्वनामस्थाने । १ । ४ । १७ ।**

कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदं स्यात् ॥

**यचि भम् । १ । ४ । १८ ।**

यकारादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात् ।

---

जराशब्दः किन्तु जरशब्दोऽत आह-**एकदेशेति** । एकदेशेन विकृतं=विकारमापन्नमन्यवन्न भवतीत्यर्थः । अत एव च्छिन्नपुच्छेऽपि शुनि श्वत्वव्यवहारो भवत्येव । प्रकृते च गोस्त्रियोरिति ह्रस्वेन विकृतमपि जरेति जराशब्दतया गृह्यते इति जरशब्दस्य जरसादेशो भवतीत्याशयः । **पक्षे**=जरसादेशाभावपक्षे । **हलादौ**=भ्यामादौ च । विश्वं पातीति-**विश्वपाः**=विष्णुः शिवश्च । **सुडिति** । प्रथमैकवचनमारभ्य औटष्कारपर्यन्तं सुट् प्रत्या-

---

१ दीर्घ से जस् और इच् परे रहते पूर्वसवर्णदीर्घ नहीं हो ।

२ स्वादि पाँच वचनों की सर्वनामस्थान संज्ञा हो । नपुंसकलिङ्ग को छोड़कर । ३ 'सु' को आदि लेकर 'कप्' प्रत्यय पर्यन्त जो सर्वनामस्थानभिन्न प्रत्यय, वे परे रहते पूर्व की पदसंज्ञा हो । ४ 'सु' को आदि लेकर कप्प्रत्यय पर्यन्त जो सर्वनामस्थानभिन्न यकारादि और अजादि प्रत्यय, वे परे रहते पूर्वकी भसंज्ञा हो ।

**आ कडारादेका सञ्ज्ञा । १ । ४ । १ ।**[1]

इत ऊर्ध्वं 'कडाराः कर्मधारये' इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया । या पराऽनवकाशा च ॥

**आतो धातोः । ६ । ४ । १४० ।**[2]

आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यात् । अलोऽन्त्यस्य । विश्वपः । विश्वपा । विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः किम् ? । हाहान् ।

हरिः । हरी ।

**जसि च । ७ । ३ । १०९ ॥**[3]

ह्रस्वान्तस्याऽङ्गस्य गुणः स्याज्जसि । हरयः ॥

**ह्रस्वस्य गुणः । ७ । ३ । १०८ ॥**[4]

ह्रस्वस्य गुणः स्यात्सम्बुद्धौ । हे हरे । हरिम् । हरी । हरीन् ।

**शेषो घ्यसखि । १ । ४ । ७ ।**[5]

'शेष' इति स्पष्टार्थम् । अनदीसंज्ञौ ह्रस्वौ याविदुतौ तदन्तं

---

हारः, ननु सुडागमस्याऽत्र ग्रहणम्, 'सर्वनामस्थाने चाऽसम्बुद्धा'वित्यादावसम्बुद्धाविति पर्युदाससामर्थ्यात् । शङ्खध्माः=शङ्खवादकः । हाहाः । गन्धर्वविशेषः । 'हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसा'मित्यमरः ।

'ह्रस्वस्य गुण' इत्यनुवर्तते, अङ्गस्येति चाधिकृतं, विशेषणेन तदन्तविधिस्तदाह—ह्रस्वान्तस्येति । 'सम्बुद्धौ च'त्यतः सम्बुद्धाविति वर्तते । तदाह—सम्बुद्धाविति । स्पष्टार्थमिति । 'आ कडारादेका सञ्ज्ञे'त्येकसञ्ज्ञाऽ-

---

१ प्रथमाध्याय के चतुर्थ पाद के प्रारम्भ से लेकर 'कडाराः कर्मधारये' ( २-२-३८ ) इस सूत्र तक एक की एक ही सञ्ज्ञा हो ।

२ आकारान्त जो धातु तदन्त जो भसञ्ज्ञक अङ्ग उसका लोप हो ।

३ ह्रस्वान्त अङ्ग को गुण हो जस् परे रहते । ४ ह्रस्वान्त अङ्ग को गुण हो सम्बुद्धि परे रहते । ५ ह्रस्व जो इकार उकार तदन्त जो सखिभिन्न अङ्ग उसकी घिसञ्ज्ञा हो ।

सखिवर्जं घिसञ्ज्ञं स्यात् ॥

**आङो नाऽस्त्रियाम्**[1] । ७ । ३ । १२० ॥

घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टासञ्ज्ञा । हरिणा । हरिभ्याम् । हरिभिः ।

**घेर्ङिति**[2] । ७ । ३ । १११ ॥

घिसंज्ञकस्य ङिति सुपि गुणः स्यात् । हरये । हरिभ्याम् । हरिभ्यः ।

**ङसिङसोश्च**[3] । ६ । १ । ११० ॥

एङो ङसिङसोरति परे पूर्वरूपमेकादेशः स्यात् । हरेः २ । हर्योः २ । हरीणाम् ॥

**अच्च घेः**[4] । ७ । ३ । ११९ ॥

इदुद्भ्यामुत्तरस्य ङेरौत् स्यात्, घेरन्तादेशश्चाऽकारः । हरौ । हरिषु । एवं कव्यादयः ॥

**अनङ् सौ** । ७ । १ । ९३ ॥

सख्युरङ्गस्याऽनङादेशः स्यादसम्बुद्धौ सौ ॥

---

घिकारादेवैकसञ्ज्ञायाः (ह्रस्वे एव घिसञ्ज्ञायाः) सिद्धया शेषग्रहणं स्पष्टार्थमित्यर्थः । 'अच्च घे'रित्यतो'घे'रित्यनुवर्त्तते, तदाह-**घेः परस्येति** ।

'सुपि च' त्यतः 'सुपी'ति, 'ह्रस्वस्य गुण' इत्यतो 'गुण' इति चानुवर्त्ततेऽत आह-**सुपि गुण इति** । **अच्च घेः** । अत्-प्रथमान्तं, घे.-षष्ठ्यन्तम् । 'इदुद्भ्या'मिति, 'ङेरा'मित्यतो 'ङे'रिति, 'औ'दिति चानुवर्त्तते तदाह-**इदुद्भ्यामिति** । 'सख्युरसम्बुद्धा'विति वर्त्तते, अङ्गस्येति चाधि-

---

१ घिसञ्ज्ञक से परे जो आङ् अर्थात् टाविभक्ति उसको 'ना' आदेश हो ।

२ एङ् से ङसिङस्सम्बन्धी अकार परे रहते पूर्वपर के स्थान में पूर्वरूप एकादेश हो । ३ इकार उकार से परे जो ङि उसको औत् आदेश हो, और घिसञ्ज्ञक के अन्त मे अकार आदेश हो । ४ सखिरूप जो अङ्ग उसको अनङ् आदेश हो सम्बुद्धिभिन्न सु परे रहते ।

**अलोऽन्त्यात्पूर्व उपधा । १ । १ । ६५ ॥**

अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात् ॥

**सर्वनामस्थाने चासम्बुद्धौ । ६ । ४ । ८ ॥**

नान्तस्योपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने ॥

**अपृक्त एकाल् प्रत्ययः । १ । २ । ४१ ॥**

एकाल्प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् ॥

**हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् । ६ । १ । ६८ ॥**

हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल्लुप्यते ॥

**न लोपः प्रातिपदिकान्तस्य । ८ । २ । ७ ॥**

प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपः स्यात् । राजा ॥

**सख्युरसम्बुद्धौ । ७ । १ । ९२ ॥**

सख्युरङ्गात्परं सम्बुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् ॥

**अचो ञ्णिति ७ । २ । ११५ ॥**

---

कृतन्तदाह- सख्युरिति । अन्त्यालः पूर्वोऽपि साजात्याद्वर्ण एव ग्राह्य इत्याह वर्ण इति । 'ढ्रलोपे' इत्यतो 'दीर्घ' इति, 'नोपधायाः' इति च वर्तते, 'अङ्गस्ये'त्यधिकृतं, विशेषणेन तदन्तविधिस्तदाह - नान्तस्येति ।

नेति लुप्तषष्ठ्यन्तं, लोपः प्रथमान्तं, प्रातिपदिकेति लुप्तषष्ठ्यन्तम् ।

---

१ अन्त्य अल् से जो पूर्व वर्ण उसकी उपधा संज्ञा हो । २ नान्त की उपधा को दीर्घ हो, सम्बुद्धिभिन्न सर्वनामस्थान परे रहते । ३ एक अल् रूप जो प्रत्यय उसकी अपृक्तसंज्ञा हो । ४ हलन्त से परे जो सु ति सि का अपृक्त हल् उसका लोप होय । और दीर्घ जो ङी आप् उनसे परे जो सु का अपृक्त हल् उसका लोप होय । ५ प्रातिपदिकसञ्ज्ञक जो पद उसके अन्त का जो नकार उसका लोप होय । ६ सखिरूप अङ्ग से परे जो सम्बुद्धिभिन्न सर्वनामस्थान सो णिद्वत् होय ।

[1]अजन्ताङ्गस्य वृद्धिः स्याञ्ञिति णिति च परे । सखायौ । सखायः । हे सखे । सखायम् । सखायौ । सखीन् । सख्या । सख्ये ।

[2]ख्यत्यात्परस्य । ६ । १ । ११२ ॥

खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उत्स्यात् । सख्युः । सख्युः ॥

[3]औत् । ७ । ३ । ११८ ॥

इतः परस्य ङेरौत्स्यात् । सख्यौ । शेषं हरिवत् ॥

[4]पतिः समास एव । १ । ४ । ८ ॥

पतिशब्दः समास एव घिसञ्ज्ञः स्यात् । पत्ये । पत्युः २ । पत्यौ । शेषं हरिवत् । समासे तु भूपतये । कतिशब्दो नित्यं बहुवचनान्तः ॥

[5]बहुगणवतुडति संख्या । १ । १ । २३ ॥

[ एते संख्यासञ्ज्ञाः स्युः । ]

[6]डति च । १ । १ । २५ ॥

डत्यन्ता संख्या षट्सञ्ज्ञा स्यात् ॥

---

अन्तस्य षष्ठ्यन्तम् । 'मृजेर्वृद्धि'रित्यतो 'वृद्धि'रिति वर्त्तते, 'अङ्गस्ये'त्यधिकृत विशेष्यं, विशेषणेन तदन्तविधिरत आह **अजन्ताङ्गस्येति** । 'ख्ये'तिकृत-यणादेशयोः खि-खी-शब्दयोरनुकरणम्, एवं 'त्ये'त्यपि कृतयणादेशयोः ति-ती-शब्दयोर्ग्रहणम्, अकारस्तूच्चारणार्थस्तदाह **कृतयणेति** ।

'शेषो घ्यसखी'त्यतो 'घी'त्यनुवर्त्ततेऽत आह **घिसञ्ज्ञ इति** । 'ष्णान्ता षडि'त्यतः 'षडि'ति, 'बहुगणे'त्यतः 'सङ्ख्ये'ति चानुवर्त्तते, विशेषणेन तदन्तविधिस्तदाह–**डत्यन्ता इति** ।

---

१ अजन्त अङ्ग को वृद्धि हो, ञित् णित्प्रत्यय परे रहते ।

२ कृतयणादेश जो ह्रस्व खि शब्द और ह्रस्व ति शब्द, एव कृतयणादेश जो दीर्घ खीशब्द और तीशब्द उनसे परे जो ङसि ङस का अकार उसको उकार आदेश हो । ३ इकार से परे जो ङि उसको औत् आदेश हो । ४ पति शब्द की समास में ही घिसञ्ज्ञा होय । ५ बहु शब्द और गण शब्द तथा वतुप्रत्ययान्त और डतिप्रत्ययान्त इनकी सख्या सञ्ज्ञा हो । ६ डतिप्रत्ययान्त जो संख्या वाचकशब्द सो षट्सञ्ज्ञक हो ।

**त्यदादीनामः । ७ । २ । १०२ ॥** [1]

एषामकारोऽन्तादेशः स्याद्विभक्तौ । द्विपर्यन्तानामेवेष्टिः [2] ।
द्वौ । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः ॥
पाति लोकमिति पपीः-सूर्यः ॥

**दीर्घाज्जसि च । ६ । १ । १०५ ॥** [3]

दीर्घाज्जसि इचि च परे न पूर्वसवर्णदीर्घः । पप्यौ २ । पप्यः ।
हे पपीः । पपीम् । पपीन् । पप्या । पपीभ्याम् ३ । पपीभिः । पप्ये ।
पपीभ्यः २ । पप्यः २ । पप्योः । दीर्घत्वान्न नुट् । पप्याम् । ङौ
तु सवर्णदीर्घः । पपी । पप्योः । पपीषु । एवं वातप्रम्यादयः ।

बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी ॥

**यू स्त्र्याख्यौ नदी । १ । ४ । ३ ॥** [4]

ईदूदन्तौ नित्यस्त्रीलिङ्गौ नदीसंज्ञौ स्तः । *प्रथमलिङ्गग्रहणं
च । पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः ॥ [5]

**गौणत्वेऽपीति** । 'आमि सर्वनाम्नः' इत्यतः 'आमी'त्यनुवर्त्तते, तदाह **आमीति** । गौणमुख्यन्यायस्तु पदकार्ये एव प्रवर्त्तते, न प्रातिपदिककार्ये इति भावः । **द्विपर्यन्तानामेव**—त्यच्छब्दमारभ्य द्विशब्दान्तानां शब्दानामेव, **इष्टिः**=भाष्यकृता त्यदादित्वमिष्यते इत्यर्थः । **दीर्घत्वात्**=ह्रस्वान्तत्वाऽभावान्नद्यन्तत्वाऽभावाच्च—न नुडित्यर्थः ।

**वातप्रमीः**=मृगविशेषः । 'वातप्रमीर्वातमृगः' इत्यमरः ।

**यू स्त्र्येति** । यू-प्रथमान्तं, स्त्र्याख्यौ-प्रथमान्तं, नदी-प्रथमान्तम् ।

**पूर्वमिति** । वृत्तेः प्राक् नित्यस्त्रीलिङ्गोऽपि यः शब्दो वृत्तावुपसर्जनतया-

१ त्यदादि को अकार अन्तादेश हो विभक्ति परे रहते । २ त्यद् से लेकर द्विशब्द पर्यन्त जो आठ शब्द हैं वे ही त्यदादिपद से भाष्यकार को अभीष्ट हैं ।

३ दीर्घ से जस् और इच् परे रहते पूर्वसवर्णदीर्घ नहीं होय । ४ ईदन्त ऊदन्त जो नित्य स्त्रीलिङ्ग उनकी नदी संज्ञा हो । ५ जो शब्द पहिले नित्य-स्त्रीलिङ्ग हो परन्तु उपसर्जन होने से कदाचित् अन्यलिङ्ग हो जाए तो भी वह नदीसंज्ञक हो ।

## [1] अचि श्नुधातुभ्रुवां य्वोरियङुवङौ । ६ । ४ । ७७ ॥

श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाऽङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । इति प्राप्ते ॥

## [2] एरनेकाचोऽसंयोगपूर्वस्य । ६ । ४ । ८२ ॥

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण्स्यादजादौ प्रत्यये । प्रध्यौ । प्रध्यः । प्रध्यम् । प्रध्यौ । प्रध्यः । प्रध्यि । शेषं पपीवत् । एवं ग्रामणीः । ङौ तु ग्रामण्याम् । अनेकाचः किम् ? । नीः । नियौ । नियः । अमि शसि च परत्वादियङ् । नियम् । ङेराम् । नियाम् । असंयोगपूर्वस्य किम् ? । सुश्रियौ । यवक्रियौ ॥

## [3] गतिश्च । १ । ४ । ६० ॥

प्रादयः क्रियायोगे गतिसञ्ज्ञाः स्युः । *[4]गतिकारकेतरपूर्वपदस्य यण् नेष्यते । शुद्धधियौ ॥

**अचीति । अचि**—सप्तम्यन्तं, **श्नुधातुभ्रुवां**—षष्ठ्यन्तम् , **य्वोः**—षष्ठ्यन्तम् , इयङुवङौ प्रथमान्तम् । **एरिति** । एः षष्ठ्यन्तम् , असंयोगपूर्वस्य—षष्ठ्यन्तम् । **ग्रामणीः**=ग्रामाधिप , नापितोऽपि । ( ठाकुर व नाई ) । **नीः**=नेता ।

शुद्धा धीर्यस्यासौ शुद्धधीरित्यत्र शुद्धशब्दो गतिकारकेतर इति 'एरनेकाच' इति यण्न भवति, तेन अचिश्नुधात्विति इयङि—शुद्धधियौ शुद्धधियः इत्यादि रूपाणि भवन्ति ।

१ श्नुप्रत्ययान्त जो धातु, इवर्ण और उवर्णान्त जो धातु और भ्रू यह जो अङ्ग इनको इयङ् आदेश हो अजादि प्रत्यय परे रहते । २ धातु का अवयव संयोग पूर्व में नहीं है जिसके ऐसा जो इवर्ण, तदन्त जो धातु, तदन्त जो अनेकाच् अङ्ग, उसको यण् हो अजादि प्रत्यय परे रहते । ३ प्रादि की क्रिया के योग में गतिसंज्ञा हो । ४ गति कारक से इतर है पूर्वपद में जिसके उसको यण् नहीं होय ।

## न भूसुधियोः ६ । ४ । ८५ ॥

एतयोरचि सुपि यण्न । सुधियौ । सुधिय इत्यादि । सुखमिच्छतीति सुखीः । सुतीः । सुख्यौ २ । सुत्यौ २ । सुख्युः २ । सुत्युः २ । शेषं प्रधीवत् ॥ शम्भुर्हरिवत् । एवं भान्वादयः ॥

## तृज्वत्क्रोष्टुः । ७ । १ । ९५ ॥

क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते असम्बुद्धौ सर्वनामस्थाने परे । क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः ।

## ऋतो ङिसर्वनामस्थानयोः । ७ । ३ । ११० ॥

ऋतोऽङ्गस्य गुणः स्यान्ङौ सर्वनामस्थाने च परे । इति प्राप्ते ।

## ऋदुशनस्पुरुदंसोऽनेहसां च । ७ । १ । ९४ ॥

ऋदन्तानामुशनसादीनां चानङ् स्यादसम्बुद्धौ सौ ॥

## अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् । ६ । ४ । ११ ॥

---

सुतमिच्छतीति-सुतीः । अत्र दीर्घ-खी-ती-शब्दतया कृतयणादेशतया च ङसिङसोरत 'ख्यत्यात्परस्ये'ति उत्वे-सुख्युरिति, सुत्युरिति च रूपम् ।

तृज्वत्--अव्ययपदम् । क्रोष्टुः प्रथमान्तम् । 'इतो'रित्यतः 'सर्वनामस्थाने' इति, 'सख्युरसम्बुद्धा'वित्यतः 'असम्बुद्धावि'ति चानुवर्त्तते, तदाह असम्बुद्धाविति । 'ह्रस्वस्य गुण' इत्यतो गुणपदमनुव-

१ भू और सुधी को यण् नहीं हो अजादि सुप्प्रत्यय परे रहते ।

२ क्रोष्टु शब्द को तृज्वद्भाव हो । अर्थात् क्रोष्टु शब्द के स्थान में क्रोष्टृ शब्द आदेश हो सम्बुद्धिभिन्न सर्वनामस्थान परे रहते ।

३ ऋदन्त अङ्ग को गुण हो ङि और सर्वनामस्थान परे रहते ।

४ ऋदन्त और उशनसादि इनको अनङ् आदेश हो सबुद्धिभिन्न सु परे रहते ।

अत्रादीनामुपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने[1]। क्रोष्टा। क्रोष्टारौ। क्रोष्टारः। [क्रोष्टारम्। क्रोष्टारौ]। क्रोष्टून्।

**विभाषा तृतीयादिष्वचि[2]। ७। १। ९७॥**

अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा। क्रोष्ट्रे।

**ऋत उत्[3]। ६। १। १११॥**

ऋतो ङसिङसोरति उकार एकादेशः स्यात्। रपरः।

**रात्सस्य[4]। ८। २। २४॥**

रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य। रस्य विसर्गः। क्रोष्टुः२। क्रोष्ट्रोः२। [5]*नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन। क्रोष्टूनाम्। क्रोष्टरि। पक्षे हलादौ च शम्भुवत्॥ हूहूः। हूह्वौ। हूह्वः। हूहूम्-इत्यादि। अतिचमूशब्दे तु नदीकार्यं विशेषः। हे अतिचमु। अतिचम्वै। अतिचम्वाः २। अतिचमूनाम्॥ खलपूः॥

त्र्योऽर्थमाह **गुण इति**।

**विभाषा** अव्ययपदं, **तृतीयादिषु**--सप्तम्यन्तम्। अचि--सप्तम्यन्तम्।

'एङः पदान्ता'दित्यतः--'अती'ति 'ङसिङसोश्चे'त्यतो 'ङसिङसो'रिति 'एकः पूर्वपरयो'रिति चानुवर्त्याह--**ऋत इति**। **रपरः**='उरण्रपर'इत्यनेन रपरत्वमिति भावः। **विसर्गः**='खरवसानयो'रित्यनेनेति भावः। **हूहूः** गन्धर्वविशेष। **चमूं**=सेनाम्--अतिक्रान्तः--**अतिचमूः**--हस्ती शूरो वा।

**नदीकार्यमिति**। 'प्रथमलिङ्गग्रहणञ्चे'त्युक्त्याऽतिचमूशब्दे नदीसञ्ज्ञायाः प्रवृत्त्या हे अतिचमु इत्यत्राम्बार्थनद्योरिति ह्रस्व। 'अतिचम्व'

१ अत्रादि की उपधा को दीर्घ हो सम्बुद्धिभिन्न सर्वनामस्थान परे रहते। २ क्रोष्टु शब्द को तृज्वद्भाव होय विकल्प करके अजादि तृतीयादि विभक्ति परे रहते। ३ ऋदन्त अङ्ग से ङसि ङस् सम्बन्धी अकार परे रहते पूर्व पर के स्थान में उकार रूप एकादेश हो। ४ रेफ से परे यदि संयोगान्त लोप हो तो सकार का ही हो अन्य का नहीं हो। ५ नुम्, और अच् परे रहते रभाव, एवं तृज्वद्भाव--इनकी अपेक्षा पूर्वविप्रतिषेध से नुट् ही होता है।

## ओः सुपि । ६ । ४ । ८३ ॥

धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्याऽनेकाचोऽङ्गस्य यण् स्यादचि सुपि । खलप्वौ । खलप्वः ॥ एवं सुल्वादयः । स्वभूः । स्वभुवौ । स्वभुवः ॥ वर्षाभूः ।

## वर्षाभ्वश्च । ६ । ४ । ८४ ॥

अस्योवर्णस्य यण् स्यादचि सुपि । वर्षाभ्वावित्यादि ॥ दृन्भूः । *दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः । दृन्भ्वौ । एवं करभूः ।

धाता । हे धातः । धातारौ । धातारः । *ऋवर्णान्नस्य णत्वं वाच्यम् । धातॄणाम् ॥ एवं नप्त्रादयः । नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम् । तेनेह न । पिता । पितरौ । पितरः । पितरम् । शेषं धातृवत् । एवं जामात्रादयः ॥ ना । नरौ ॥

'अतिचम्वा' इत्यादौ 'आण्नद्याः' इत्याडागमः, 'अतिचमूना'मित्यत्र 'ह्रस्वनद्यापः' इति नुट् च सिद्ध्यतीत्यर्थः । खलं पुनातीति खलपूः=धान्यशोधकः ।

ओः सुपीति । अचिश्नुधात्वित्यतोऽचीति, धात्विति चानुवर्त्तते, 'एरनेकाचः'इत्यतोऽसंयोगपूर्वस्येति 'अनेकाचः' इति चानुवर्त्तते । ओः षष्ठ्यन्तं, सुपि--सप्तम्यन्तम् । सुष्ठु लुनातीति सुलूः=शोभनलवनकर्त्ता नापितः, कृपीवलश्च । स्वभूः=ब्रह्मा ।

वर्षाभूः=दर्दुरः । 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमानि'ति यादवकृतो वैजयन्तीकोशः ।

नियमार्थमिति । 'उणादिनिष्पन्नानां तृन्तृच्प्रत्ययान्तानां सञ्ज्ञाशब्दानां चेदुपधादीर्घस्तर्हि नप्त्रादीनामेव नान्येषा'मिति च नियमाकारः। एवञ्च पित्रा-

१ धातु का अवयव संयोग पूर्व में नहीं है जिसके ऐसा जो उवर्ण, तदन्त जो धातु, तदन्त जो अनेकाच् अङ्ग, उसको यण् हो अजादि सुप् परे रहते ।

२ वर्षाभूशब्दावयव उवर्ण के स्थान में यण् हो अजादि सुप् परे रहते ।

३ दृन्करपुनःपूर्वक भूधातु के उवर्ण को यण् हो अजादि सुप्परे रहते ।

४ ऋवर्ण से परे भी नकार को णत्व (णकार) होय ।

**नृ[1] च । ६ । ४ । ६ ॥**

'नृ' इत्येतस्य नामि वा दीर्घः स्यात् । नृणाम् । नृणाम् ॥

**गोतो णित्[2] । ७ । १ । ९० ॥**

ओकाराद्विहितं सर्वनामस्थानं णिद्वत्स्यात् । गौः । गावौ । गावः ॥

**औतोऽम्[3]शसोः । ६ । १ । ९३ ॥**

औकारादम्शसोरचि परे आकार एकादेशः स्यात् । गाम् । गावौ । गाः । गवा । गवे । गोः–इत्यादि ॥

**रायो[4] हलि । ७ । २ । ८५ ॥**

रैशब्दस्याकारोऽन्तादेशः स्याद्धलि विभक्तौ । राः । रायौ । रायः । राभ्यामित्यादि । ग्लौः । ग्लावौ । ग्लावः । ग्लौभ्यामित्यादि ॥

इत्यजन्ताः पुँल्लिङ्गाः ॥

---

दिशब्दानां नप्त्रादिभिन्नतया नानेन दीर्घ इत्याशयः । **नृ च** । नृ लुप्तष- ष्ठ्यन्तं, च–अव्ययपदम् । इत्येतस्य=नृशब्दस्य । 'गोत' इति सूत्रे गकारो- ऽविवक्षित इत्याशयेनाह **ओकारादिति** । **गोतः** पञ्चम्यन्तं, णित्– प्रथमान्तम् । 'इतोऽत्सर्वनामस्थाने' इत्यतः 'सर्वनामस्थाने' इत्यनुवर्त्तते । **रायः** । **रायः**–षष्ठ्यन्तं, हलि सप्तम्यन्तम् । राः–धनम् । ग्लौः–चन्द्रः ।

१ 'नृ' इसको दीर्घ होय विकल्प करके, नाम् परे रहते ।

२ ओकार से विहित जो सर्वनामस्थान सो णिद्वत् होय ।

३ ओकार से अम् शस् सम्बन्धी अच् परे रहते पूर्व पर के स्थान में आकार एकादेश होय ।

४ 'रै' शब्द को आकार अन्तादेश होय हलादि विभक्ति परे रहते ।

# अथाजन्तस्त्रीलिंगप्रकरणम् ।

रमा ॥

## औङ आपः । ७ । १ । १८ ॥

आबन्तादङ्गात्परस्यौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे । रमाः ॥

## सम्बुद्धौ च । ७ । ३ । १०६ ॥

आप एकारः स्यात्सम्बुद्धौ । एङ्ह्रस्वादिति सम्बुद्धिलोपः । हे रमे । हे रमे । हे रमाः । रमाम् । रमे । रमाः ॥

## आङि चाऽऽपः । ७ । ३ । १०५ ॥

आङि ओसि च परे आबन्तस्याऽङ्गस्य एकारः स्यात् । रमया । रमाभ्याम् । रमाभिः ।

रमेति । 'रमते विष्णुना सह इति रमा=लक्ष्मीः । रमतेः पचाद्यचि टाप् । केचित्तु-रमयतीति रमा । ण्यन्ताद्रमधातोः पचाद्यच् । अमन्तत्वेन मित्त्वान्मितां ह्रस्व इति ह्रस्वः । णिलोपः । अजाद्यतष्टाबिति टाबित्याहुः । आबन्तत्वेन,लिङ्गविशिष्टपरिभाषाया वा स्वादयः । हल्ङ्यादिलोपः । 'बहुवचने झल्ये'-दित्यत 'ए'दिति, 'आङि चाप' इत्यत 'आप'इति चानुवर्त्तते तदाह—आप एकार इति । आबन्तस्येत्यर्थः । अलोन्त्यपरिभाषया चाऽन्त्याकारस्यैकारः । एङ्ह्रस्वादितीति । हल्ङ्यादिलोपस्तु न, परत्वात्प्रतिपदोक्तत्वाच्च 'सम्बुद्धौ चे'त्येत्वे कृत आरूपस्य आपोऽभावेन तदप्राप्तेः, एवञ्च एङ्ह्रस्वादिति सम्बुद्धिलोप इति भावः ।

१ आबन्त अङ्ग से परे जो औङ् (औकार विभक्ति) उसको शी आदेश होय ।
२ आप् को ( आबन्त अङ्ग को ) एकार हो सम्बुद्धि परे रहते ।
३ आङ् ओस् परे रहते आबन्त अङ्ग को एकार होय ।

याडापः । ७ । ३ । ११३ ॥

आपः परस्य ङिद्वचनस्य याडागमः स्यात् । वृद्धिः । रमायै । रमाभ्याम् । रमाभ्यः । रमायाः २ । रमयोः २ । रमाणाम् । रमायाम् । रमासु । एवं दुर्गाऽम्बिकादयः ॥

सर्वनाम्नः स्याड्ढ्रस्वश्च । ७ । ३ । ११४ ॥

आबन्तात्सर्वनाम्नः परस्य ङितः स्याट् स्यादापश्च ह्रस्वः । सर्वस्यै । सर्वस्याः २ । सर्वासाम् । सर्वस्याम् । शेषं रमावत् । एवं विश्वाऽऽदय आबन्ताः ॥

विभाषा दिक्समासे बहुव्रीहौ । १ । १ । २८ ॥

अत्र सर्वनामता वा स्यात् । उत्तरपूर्वस्यै । उत्तरपूर्वायै । 'तीयस्ये'ति वा सर्वनामसंज्ञा । द्वितीयस्यै । द्वितीयायै ॥ एवं तृतीया । अम्बार्थेति ह्रस्वः । हे अम्ब । हे अक्क । हे अल्ल ।

रमायै इति । रमाया+ए इति स्थिते 'वृद्धिरेची'त्यनेन वृद्धिरित्यर्थः । आटश्चेति वृद्धिस्तु न, याटष्टकारस्य समुदायानुबन्धतया-प्रकृते आटोऽभावात् । एवं 'सर्वस्यै' इत्यादावपि वृद्धिरेचीत्येव वृद्धिर्न तु आटश्चेतीत्यवधेयम् । एवञ्च 'रमायाः' इत्यादिष्वपि 'अकः सवर्णे' इति दीर्घः। सर्वासामिति । आबन्तस्य सर्वादिगणे पाठाऽभावेऽपि एकादेशस्य पूर्वान्तवत्त्वेन ग्रहणात्सर्वासामित्यत्र 'आमि सर्वनाम्न' इति सुट् । अत्र=दिक्समासे । उत्तरस्याः पूर्वस्याश्च दिशोऽन्तरालं दिक्-उत्तरपूर्वा । दिङ्नामान्यन्तराले' इति बहुव्रीहिः ।

ह्रस्व इति । अम्बाऽक्काऽल्लादीना मातृवाचितयाऽम्बार्थेति ह्रस्व इत्यर्थं ।

१ आप् (आबन्त अङ्ग) से परे जो ङिद्वचन उसको याट् का आगम होय ।

२ आबन्त सर्वनाम से परे जो ङिद्वचन उसको स्याट् का आगम होय, और आप् को ह्रस्व होय ।

३ बहुव्रीहि जो दिक्समास उसकी सर्वनामसंज्ञा विकल्प करके होय ।

जरा । जरसौ । जरे इत्यादि । पक्षे रमावत् । गोपा विश्वपावत् ।

मतीः । मत्या ॥

## ङिति ह्रस्वश्च । १ । ४ । ६ ॥

[1]इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ च इवर्णोवर्णौ स्त्रियां वा नदीसंज्ञौ स्तो ङिति । मत्यै । मतये । मत्याः । मत्याः । मतेः । मतेः ॥

## इदुद्भ्याम् । ७ । ३ । ११७ ॥

जरा, जरसौ-जरे, जरसः-जराः-**प्रथमा** । जरसं-जरां, जरसौ-जरे, जरसः-जराः-**द्वितीया** । जरसा-जरया, जराभ्यां, जराभिः **तृतीया** । जरसे-जरायै, जराभ्यां, जराभ्यः-**चतुर्थी** । जरसः-जरायाः, जराभ्यां, जराभ्यः-**पञ्चमी** । जरसः-जरायाः, जरसोः-जरयोः, जरसां-जराणां-**षष्ठी** । जरसि-जरायां, जरसोः-जरयोः, जरासु **सप्तमी** । इति जराशब्दस्य रूपाणि ।

गाः-पातीति गोपा-गोपालिका-गोपी । गोपाः, गोपौ, गोपाः । गोपां, गोपौ, गोपः । गोपा, गोपाभ्यां, गोपाभिः । गोपे, गोपाभ्यां, गोपाभ्यः । गोपः, गोपाभ्यां, गोपाभ्यः । गोपः, गोपोः, गोपाम् । गोपि, गोपोः, गोपासु । हे गोपाः, गोपौ, गोपाः । इति रूपाणि । **मतीरिति** । 'तस्माच्छसो न' इत्यत्र 'पुंसी'त्युक्तेः स्त्रीत्वान्नत्वाऽभावः । एवम्-'आङो नाऽस्त्रिया'मित्यत्र 'अस्त्रिया'-मित्युक्तेरत्र नाभावो नेत्यवधेयम् । **इदुद्भ्यामिति** । नदीसंज्ञापक्षे-मति+ङि इत्यत्र 'ङेराम्नद्याम्नीभ्यः' इत्यपेक्षया परत्वात् 'औ'दिति ङेरौत्त्वे प्राप्ते तत्प्रबाध्य आम्विधायकं सूत्रमुपन्यस्यति-**इदुद्भ्यामिति**। निरवकाशतया औदिति सूत्र-मिदं प्रबाधते इत्याशयः । एतदभावे तु दीर्घेकारान्ते नदीगौर्यादौ चरितार्थ-

१ इयङ् उवङ् का स्थानी, स्त्रीशब्दावयव ईकार से भिन्न, नित्यस्त्रीलिङ्ग जो दीर्घ ईकार ऊकार, उनकी नदीसञ्ज्ञा विकल्प से होय ङिद्वचन परे रहते । और-स्त्रीवाची जो ह्रस्व इकार उकार उनकी भी नदी संज्ञा होय विकल्प करके ङिद्वचन परे रहते । २ नदीसञ्ज्ञक जो इकार उकार उनसे परे जो ङि उसको आम् आदेश होय ।

नदीसंज्ञकाभ्यामिदुद्भ्यां परस्य ङेराम् स्यात्। मत्याम्। मतौ। शेषं हरिवत्। एवं बुद्ध्यादयः॥

त्रि[1]चतुरोः स्त्रियां तिसृचतसृ। ७। २। ९९॥

स्त्रीलिङ्गयोरेतयोरेतावादेशौ स्तो विभक्तौ॥

अ[2]चि र ऋतः। ७। २। १००॥

'तिसृ' 'चतसृ' एतयोर्ऋकारस्य रेफादेशः स्यादचि। गुणदीर्घोत्वानामपवादः। तिस्रः। तिस्रः। तिसृभिः। तिसृभ्यः। तिसृभ्यः। आमि नुट्।

न[3] तिसृचतसृ। ६। ४। ४॥

एतयोर्नामि दीर्घो न स्यात्। तिसृणाम्। तिसृषु।

स्य ङेरामित्यस्य, 'सख्यौ' 'पत्यौ' इत्यादौ चरितार्थस्य औदित्यस्य च मति ङि इत्यत्र युगपत्प्राप्तौ तुल्यबलविरोधेन परत्वादौदिति औदादेश एव प्रवर्तेत। एवञ्च आम्विधायकमिदं सूत्रमिहोपन्यस्तमिति भावः। एवञ्च-ङेरामित्येव सिद्धे इदुद्भ्यामिति किमर्थमिति नाशङ्कनीयम्। औदित्यस्य बाधनार्थं तत्सत्त्वात्।

त्रिचतुरोः-षष्ठ्यन्तं, स्त्रियां-सप्तम्यन्तं, तिसृचतसृ-लुप्तप्रथमान्तम्। अचि सप्तम्यन्तं, रः-प्रथमान्तम्, ऋतः-षष्ठ्यन्तम्। 'त्रिचतुरो'रित्यतः-'तिसृचतसृ' इत्यनुवर्तते; तच्च षष्ठ्या विपरिणम्यते, तदाह-एतयोरिति।

गुणेति। 'तिस्रस्तिष्ठन्ती'त्यत्र प्रथमान्ते 'ऋतो ङि-'इतिप्राप्तस्य गुणस्य रत्वमपवाद। 'तिस्रः पश्ये'त्यत्र द्वितीयान्ते 'प्रथमयोः-'इति पूर्वसवर्णदीर्घस्य रत्वमपवादः। 'प्रियतिस्र आगत' इत्यत्र पञ्चम्यां, 'प्रियतिस्र स्व'मित्यत्र षष्ठ्यां च 'ऋत उ'दिति-उत्त्वस्यायं रेफादेशविधिरपवादो 'मद्विषये प्राप्तं सर्वं बाध्यते'

१ स्त्रीलिङ्ग जो त्रि और चतुर् शब्द उनको क्रमसे तिसृ चतसृ आदेश होय विभक्ति परे रहते। २ 'तिसृ' 'चतसृ' के ऋकार को रेफादेश होय अच्परे रहते।
३ तिसृ चतसृ शब्द को दीर्घ नहीं होय नाम्परे रहते।

द्वे । द्वे । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः ॥

गौरी । गौर्यौ । गौर्यः । हे गौरि । गौर्यै-इत्यादि । एवं नद्यादयः ।

लक्ष्मीः । शेषं गौरीवत् । एवं तरीतन्त्र्यादयः ।

स्त्री । हे स्त्रि ॥

स्त्रियाः[1] । ६ । ४ । ७९ ॥

स्त्रीशब्दस्येयङ् स्यादजादौ प्रत्यये परे । स्त्रियौ । स्त्रियः ॥

वाऽम्शसोः[2] । ६ । ४ । ८० ॥

अमि शसि च स्त्रिया इयङ् वा स्यात् । स्त्रियम् । स्त्रीम् । स्त्रियः । स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः २ । परत्वान्नुट् । स्त्रीणाम् । स्त्रियाम् । स्त्रीषु ॥ श्रीः । श्रियौ । श्रियः ॥

नेयङुवङ्स्थानावस्त्री[3] । १ । ४ । ४ ॥

इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसंज्ञौ न स्तो न तु स्त्री । हे श्रीः । श्रियै--श्रिये । श्रियाः--श्रियः ॥

इति वाच्यसामान्यचिन्ताश्रयणादिति विवेकः। द्वे इति। द्वि+औ इत्यवस्थायां त्यदाद्यत्वे, टापि, औङः शयादेशे गुणे च 'द्वे' इति सिद्धम्। अत्र विभक्तिसन्निपातकृतमपि त्यदाद्यत्वं टापो निमित्तं, 'न यासयो'रिति निर्देशेन टापि सन्निपातपरिभाषाया अनित्यत्वादप्रवृत्तेः। तरी-नौका । तन्त्री=वीणा । आदिपदेन अवीः (=मेषी) स्तरीः (=धूमः)। अत्र हि 'अवितॄस्तृतन्त्रिभ्य ईः' इत्युणादि-

१ स्त्रीशब्द को इयङ् आदेश होय अजादि प्रत्यय परे रहते। २ स्त्रीशब्द को इयङ् आदेश होय विकल्प करके अम् शस् परे रहते। ३ इयङ् उवङ् का स्थानी, नित्यस्त्रीलिङ्ग जो दीर्घ ईकार ऊकार, उनकी नदी संज्ञा नहीं होय, स्त्रीशब्द को छोड कर ( अर्थात् स्त्रीशब्द के ईकार की तो नदी सञ्ज्ञा होवे ) ।

वाऽऽमि[1] । १ । ४ । ५ ॥

इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो न तु स्त्री ॥ श्रीणाम्--श्रियाम् । श्रियि--श्रियाम् ॥ धेनुर्मतिवत् ॥

स्त्रियां च[2] । ७ । १ । ९६ ॥

स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते ॥

ऋन्नेभ्यो ङीप्[3] । ४ । १ । ५ ॥

ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् स्यात् । क्रोष्ट्री । गौरीवत् । भ्रूः--श्रीवत् । स्वयंभूः--पुंवत् ॥

न[4] षट्स्वस्रादिभ्यः । ४ । १ । १० ॥

षट्सञ्ज्ञकेभ्यः स्वस्रादिभ्यश्च ङीप्टापौ न स्तः ।

स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ।
याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥

स्वसा । स्वसारौ । माता पितृवत् । शसि मातॄः । द्यौर्गोवत् । राः पुंवत् । नौर्ग्लौवत् ॥

इत्यजन्ताः स्त्रीलिङ्गाः ॥

पठितेकारप्रत्ययान्ततयाऽङ्यन्तत्वान्न सुलोप इत्याशयः । क्रोष्ट्री जम्बुकी । भ्रू =नेत्रलोमपङ्क्तिः । स्वयम्भू =मूला प्रकृतिर्माया ।

स्वसा=भगिनी । ननान्दा-पत्युःस्वसा । ( ननन्द ) । 'ननान्दा तु स्वसा पत्यु'रित्यमरः । दुहिता=पुत्री । याता=देवरभार्या, पतिज्येष्ठभार्या च ।

१ इयङ् उवङ् का स्थानी नित्य स्त्रीलिङ्ग जो दीर्घ ईकार ऊकार उसकी नदी संज्ञा होय विकल्प करके आम् परे रहते । स्त्रीशब्द को छोडकर । २ स्त्रीवाची जो क्रोष्टु शब्द सो तृजन्त की तरह रूप को प्राप्त होय । ३ ऋदन्त और नान्त से स्त्रीलिङ्ग में ङीप् प्रत्यय होय । ४ षट् संज्ञक और स्वस्रादि से ङीप् और टाप् नहीं होय ।

# अथाजन्तनपुंसकलिङ्गप्रकरणम् ।

## अतोऽम् । ७ । १ । २४ ।

अतोऽङ्गात् क्लीबात्स्वमोरम् स्यात् । अमि पूर्वः । ज्ञानम् । एङ्ह्रस्वादिति हल्लोपः । हे ज्ञान ॥

## नपुंसकाच्च । ७ । १ । १९ ।

क्लीबात्परस्यौङः शी स्यात् । भसंज्ञायाम् ॥

## [3]यस्येति च । ६ । ४ । १४८ ।

---

(देवरानी, जिठानी) 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्पर' मित्यमरः। द्यौः=आकाशः । राः=धनम् । पुंल्लिङ्गस्यापि रैशब्दस्य स्त्रीत्वं क्षीरस्वाम्यादिभिरभ्युपेतमिति ध्येयम् ।

* इत्यजन्ताः स्त्रीलिङ्गाः *

**अतोऽमिति।** 'अत' इति पञ्चमी, अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते, तस्य अत इति विशेषणं, ततस्तदन्तविधिः । एवञ्च अदन्तादङ्गादित्यर्थः । अमोऽम्विधान 'स्वमोर्नपुंसका'दिति प्राप्तस्य लुको बाधनार्थम् । **हे ज्ञानेति।** हे ज्ञान सु इति स्थिते सम्बुद्धिलोपात्परत्वादमादेशे कृते 'अमि पूर्वः' इति पूर्वरूपे च तस्यान्तवद्भावाज्ज्ञानेत्यस्य ह्रस्वान्ततया तत्परस्य सम्बुद्ध्यवयवस्य हल्मात्रस्य मकारस्य एङ्ह्रस्वादिति लोप इत्यर्थः । एङ्ह्रस्वादित्यस्य हि अङ्गात्परा या सम्बुद्धिरिति नार्थं, किन्तु एङन्ताद्ध्रस्वान्ताच्चाङ्गात्परो यः सम्बुद्ध्यवयवो हल्स लुप्यते इत्येवार्थ इत्याशयः ।

**भसञ्ज्ञायामिति।** 'सुडनपुंसकस्ये'त्युक्तेर्नपुंसके औङः सर्वनामस्थानसञ्ज्ञाया अभावेन तस्मिन्परतो ज्ञानेत्यस्य 'यचि भ'मिति भसञ्ज्ञायामित्यर्थः।

---

१ अदन्त क्लीब अङ्ग से परे जो 'सु' और 'अम्' उनको 'अम्' आदेश होय।

२ क्लीब अङ्ग से परे जो 'औङ्' उसको 'शी' आदेश होय ।

३ भसञ्ज्ञक जो इवर्ण अवर्ण उनका लोप होय ईकार और तद्धित परे रहते।

ईकारे तद्धिते च परे भस्येवर्णाऽवर्णयोर्लोपः स्यात् । इत्यल्लोपे प्राप्ते । *औङः श्यां प्रतिषेधो वाच्यः । ज्ञाने ॥

[२] **जश्शसोः शिः । ७ । १ । २० ॥**

क्लीबादनयोः शिः स्यात् ॥

[३] **शि सर्वनामस्थानम् । १ । १ । ४२ ॥**

'शि' इत्येतदुक्तसंज्ञं स्यात् ॥

[४] **नपुंसकस्य झलचः । ७ । १ । ७२ ॥**

झलन्तस्याऽजन्तस्य च क्लीबस्य नुम् स्यात् सर्वनामस्थाने ॥

[५] **मिदचोऽन्त्यात्परः । १ । १ । ४७ ॥**

अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् । उपधादीर्घः । ज्ञानानि । पुनस्तद्वत् । शेषं पुंवत् । एवं धनवनफलादयः ॥

अल्लोपे प्राप्ते=ज्ञानेत्यकारस्य लोपे प्राप्ते । **औङ** इति । औङ्स्थानिकशीविभक्तौ परतो यस्येति चेति लोपस्य प्रतिषेधो वक्तव्य इत्यर्थः । श्यामिति च विभक्त्यपेक्षया स्त्रीलिङ्गनिर्देशः । **जश्शसोः शिः** । जसा साहचर्यात्सुवेव शस् गृह्यते,तेन 'कुण्डशो ददाती'त्यत्र तद्धिते शसि न श्यादेशः । **उपधादीर्घ इति** । 'सर्वनामस्थाने चाऽसम्बुद्धा'विति दीर्घ इत्यर्थः । तद्वत्=प्रथमावद्द्वितीयायां रूपाणि । पुंवत्=रामशब्दवदित्यर्थः ।

१ औङ्स्थानिक शी परे रहते 'यस्येति च' इस सूत्र करके लोप नहीं होय।

२ क्लीब अङ्ग से परे जो जस् शस् उसको शि आदेश होय ।

३ 'शि' इसकी सर्वनामस्थान संज्ञा होय ।

४ झलन्त अजन्त जो क्लीब अङ्ग उसको नुम् का आगम होय सर्वनामस्थान परे रहते ।

५ अचों के मध्य में जो अन्त्य अच्, उससे परे और उसी (अन्त्य अच्) अन्तावयव मित् होय ।

**[1]अद्ड्डतरादिभ्यः पञ्चभ्यः । ७ । १ । २५ ॥**

एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात् ॥

**[2]टेः । ६ । ४ । १४३ ॥**

डिति भस्य टेर्लोपः स्यात् । कतरत् । कतरद् । कतरे । कतराणि । हे कतरत् । शेषं पुंवत् । एवं कतमत् । इतरत् । अन्यत् । अन्यतरत् । अन्यतमस्य त्वन्यतममित्येव । *[3]एकतरात्प्रतिषेधो वक्तव्यः* । एकतरम् ॥

**[4]ह्रस्वो नपुंसके प्रातिपदिकस्य । १ । २ । ४७ ॥**

अजन्तस्येत्येव [क्लीबे प्रातिपदिकस्याऽजन्तस्य ह्रस्वः स्यात्]। श्रीपं-ज्ञानवत् ॥

अद्ड्डिति। अत्र जिघृक्षितादेशस्वरूपप्रतिपादनाय दस्य पृथक्त्वं न कृतम्। अत्रकतरत्-कतरद्, कतरे, कतराणि । पुनरपि-कतरत्-द्, कतरे, कतराणि। कतरेण, कतराभ्यां, कतरैः। कतरस्मै, कतराभ्यां, कतरेभ्यः। कतरस्मात्-द्, कतराभ्यां, कतरेभ्यः। कतरस्य, कतरयोः, कतरेषाम्। कतरस्मिन्, कतरयोः, कतरेषु। हे कतरत्-द्, हे कतरे, हे कतराणि-इति रूपाणि। इत्येवेति। अन्यतमशब्दस्याऽव्युत्पन्नप्रातिपदिकया डतमप्रत्ययान्तत्वाऽभावान्नाऽद्डादेश इति अतोऽमित्यमादेश एवेत्यर्थः। यद्यपि-अन्यतरशब्दोऽपि अव्युत्पन्न एव, तथापि तस्य डतरादिगणे पाठादेव ततः स्वमोरद्डादेशः, अन्यतमशब्दस्य तु न गणे पाठ इति न तत्रादेश इत्यवधेयम्। अतएव अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद्बहुविषये निर्धारणे वर्त्तेते इत्यभियुक्ताः।

एकतरशब्दस्य डतरप्रत्ययान्ततयाऽद्डादेशस्य प्रवृत्त्यापत्तिरत आह-एकतरादिति। भो सूत्रकार! भवता-एकतरशब्दात्परयोः स्वमोरद्डादेशो न भवतीति वक्तव्यमित्यर्थः।

---

१ नपुंसकलिङ्ग में वर्तमान जो डतरादि पाच उनसे परे जो सु अम् उनको अद्ड् आदेश होय। २ डित्प्रत्यय परे रहते भसंज्ञक की टि का लोप होय।
३ एकतरशब्द से परे सु अम् को अद्ड् आदेश नहीं होय।
४ क्लीवलिङ्ग में अजन्त प्रातिपदिक को ह्रस्व होय।

**स्वमोर्नपुंसकात् । ७ । १ । २३ ॥**

क्लीबादङ्गात्परयोः स्वमोर्लुक् स्यात् । वारि ॥

**इकोऽचि विभक्तौ । ७ । १ । ७३ ॥**

इगन्तस्य क्लीबस्य नुम् स्यादचि विभक्तौ । वारिणि । वारीणि । 'न लुमते'त्यस्याऽनित्यत्वात्पक्षे सम्बुद्धिनिमित्तो गुणः । हे वारे–हे वारि । 'घेर्ङिती'ति गुणे प्राप्ते–*वृद्ध्यौत्वतृज्वद्भाव-

गुण इति । 'ह्रस्वस्य गुण' इति गुणोऽपि पक्षे भवतीत्यर्थः । अतएव 'इकोऽची'ति सूत्रे 'हे त्रपो' इति, 'एङ्ह्रस्वा'दित्यत्र 'हे त्रपु' इति च भाष्ये रूपद्वयमुपन्यस्तम् । ननु सम्बुद्धेर्लुका लुप्तत्वान्न लुमतेति प्रत्ययलक्षणनिषेधाच्च कथं गुण इति चेन्न; 'इकोऽचि विभक्ता' वित्यत्राऽज्ग्रहणाज्ज्ञापकान्नलुमते-त्यस्याऽनित्यत्वात् । तथाहि–अज्ग्रहणाऽभावे हलादिषु भ्यामादिषु सत्यपि नुमि 'नलोपः प्रातिपदिकान्तस्ये'ति नलोपसम्भवाद्दोषाऽभावेन अचीति व्यर्थं, न च सम्बुद्धौ नुम्व्यावृत्त्यर्थमज्ग्रहणं, तत्र नुमि सति 'न ङिसम्बुद्ध्यो'रिति निषेधान्नलोपाऽप्रवृत्तेरिति वाच्यं, सम्बुद्धेर्लुका लुप्तत्वेन 'न लुमते'ति निषेधा-त्प्रत्ययलक्षणाऽप्रवृत्त्या विभक्तिपरत्वाऽभावेन तत्र नुमः प्राप्तेरेवाऽभावात् । एवञ्चाऽज्ग्रहण व्यर्थं सन्न लुमतेति निषेधोऽनित्य इति ज्ञापयति । तथा च लुका लुप्तेऽपि प्रत्ययलक्षणप्रवृत्त्या सम्बुद्धिपरतया प्राप्त नुम वारयितुमज्ग्रहणं सफ-लमिति भावः । तदेवमनित्यत्वपक्षे सम्बुद्धिनिमित्तो गुणः, अनित्यत्वाऽभावे तु सम्बुद्धिपरत्वाऽभावान्न गुण इति हे वारे हे वारीति रूपद्वय भवतीत्यवधेयम् ।

वृद्ध्यौत्वेति । वृद्ध्यादीनां क्रमेण––गावौ, हरौ, क्रोष्टा, हरये इत्यत्रावकाशः । नुमः–'वारीणि' इत्यत्रावकाशः, 'अतिसखीनि'–इत्यत्र पर-त्वान्नुमं बाधित्वा–'सख्युरसम्बुद्धा'विति णित्वाद्वृद्धिः प्राप्ता, 'वारिणि'इत्यत्र ङेः–'अच्च घे'रित्यौत्त्व परत्वात्प्राप्तम् , 'प्रियक्रोष्टूनि' इत्यत्र जश्शसोः पर-

१ क्लीब अङ्ग से परे जो सु और अम् उनका लुक् होय ।

२ इगन्त जो क्लीव अङ्ग उसको नुम् होय अजादिविभक्ति परे रहते ।

३ वृद्धि, औत्व, तृज्वद्भाव और गुण–इनकी अपेक्षा नुम् होय पूर्वविप्रतिषेध से ।

गुणेभ्यो नुम् पूर्वविप्रतिषेधेन । वारिणे । वारिणः२ । वारिणोः२ । नुमचिरेति नुट् । वारीणाम् । वारिणि । हलादौ हरिवत् ।

**अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः । ७ । १ । ७५ ॥**[1]

एषामनङ् स्याट्टादावचि [ स चोदात्तः ] ॥

**अल्लोपोऽनः । ६ । ४ । १३४ ॥**[2]

अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याऽकारस्य लोपः स्यात् । दध्ना । दध्ने । दध्नः २ । दध्नोः२ । दध्नाम् ॥

**विभाषा ङिश्योः । ६ । ४ । १३६ ॥**[3]

अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याऽकारस्य लोपो वा स्यान्ङिश्योः परयोः । दध्नि–दधनि । शेषं वारिवत् ॥ एवमस्थिसक्थ्यक्षि ॥ सुधि । सुधिनी । सुधीनि । हे सुधे–हे सुधि ॥

त्वान्नुमं बाधित्वा वृद्ध्यादय प्राप्तं, 'वारिणे' इत्यत्र परत्वान्नुमं बाधित्वा 'घेर्ङिती'ति गुणः प्राप्तः । तत्र पूर्वविप्रतिषेधान्नुमेव भवति न परा अपि वृद्ध्यादय इत्यर्थः ।

सक्थि=ऊरुः । 'सक्थि क्लीबे पुमानूरु' इत्यमरः । सुधीति । सुष्ठु ध्यायतीति, शोभना धीर्यस्येति वा सुधि । सुधिनी इत्यत्र नुमा परत्वादियङ् बाध्यते । शोभनज्ञानवत्त्वं, शोभनध्यानवत्त्वं वा प्रवृत्तिनिमित्तं पुंसि क्लीबे च तुल्यमिति तुल्ये प्रवृत्तिनिमित्ते भाषितपुंस्कतयाऽत्र पुंवद्भावप्रवृत्तिः । एवं-सुलुशब्देऽपि शोभनलवनकर्तृत्वं प्रवृत्तिनिमित्तं, तच्च सर्वत्र समानमिति तुल्ये प्रवृत्तिनिमित्ते भाषितपुंस्कत्वात्पुंवद्भावस्तत्र प्रवर्त्तते । एवं धातृशब्देऽपि

१ अस्थ्यादि को [ उदात्त ] अनङ् आदेश हो टादि अच् परे रहते ।

२ अङ्ग का अवयव, सर्वनामस्थानभिन्नयजादिस्वादिपरक जो अन्, उसके अकार का लोप होय । ३ अङ्ग का अवयव, सर्वनामस्थानभिन्न यजादि स्वादि-परक जो अन् उसके अकार का लोप होय, विकल्प करके, ङि शी परे रहते ।

**तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य । ७ । १ । ७४ ।**[1]

प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा स्याट्टादावचि । सुधिया–सुधिनेत्यादि ॥ मधु । मधुनी । मधूनि । हे मधो–हे मधु ॥ सुलु । सुलुनी । सुलूनि । सुल्वा–सुलुनेत्यादि ॥

धातृ । धातृणी । धातॄणि । हे धातः–हे धातृ । धात्रा–धातृणा । धातॄणाम् । एवं ज्ञात्रादयः ।

**एच इग्घ्रस्वादेशे । १ । १ । ४८ ।**[2]

आदिश्यमानेषु ह्रस्वेषु एच इगेव स्यात् । प्रद्यु । प्रद्युनी ।

धारणकर्तृत्वस्य प्रवृत्तिनिमित्तस्य सर्वत्र तुल्यतया पुंवद्भावः । **सुधिनेत्यादीति** । सुधि, सुधिनी, सुधीनि । पुनरपि–सुधि, सुधिनी, सुधीनि । सुधिया–सुधिना, सुधीभ्यां, सुधीभिः । सुधिये–सुधिने, सुधीभ्यां, सुधीभ्यः । सुधियः–सुधिनः, सुधीभ्या, सुधीभ्यः । सुधियः–सुधिनः, सुधियो.–सुधिनो , सुधियां–सुधीनाम् । सुधियि–सुधिनि, सुधियोः–सुधिनोः, सुधिषु । हे सुधे–हे सुधि, हे सुधिनी हे सुधीनि । इति रूपाणि । एवं **सुलुशब्दे**–सुलु, सुलुनी, सुलूनि । पुनरपि–सुलु, सुलुनी सुलूनि । सुल्वा–सुलुना । सुल्वे–सुलुने । सुल्वः–सुलुनः २ । सुल्वो.–सुलुनोः २ । सुल्वां–सुलूनाम् । सुल्वि–सुलुनि । हे सुलो–हे सुलु । इत्यादि रूपाणि । **धातृशब्दे**–धात्रा–धातृणा । धात्रे–धातृणे । धातु:–धातृणः २ । धात्रोः–धातृणो: २ । धातॄणाम् । धातरि–धातृणि । हे धातः–हे धातृ–इत्यादि रूपाणि । **द्यु इति** । प्रद्युशब्दे तु न पुंवद्भावः, प्रकृष्टाऽऽकाशवरवरूपस्य प्रवृत्तिनिमित्तस्यैक्ये यदिगन्तं प्रद्यु, तस्य भाषितपुंस्कत्वाऽभावात्, यच्च भाषितपुंस्कं–प्रद्यो इति, तस्येगन्तत्वाऽभावात् । एव प्ररिशब्दादावपि ।

१ प्रवृत्तिनिमित्त एक होते हुए जो भाषितपुंस्क इगन्त क्लीब शब्दस्वरूप उसको पुंवद्भाव होय विकल्प करके टादि अच्परे रहते ।

२ आदिश्यमान ह्रस्वों के मध्य में–एच् के स्थान इक् ही ह्रस्व हो । ( अर्थात्–एच् के स्थान में जहाँ ह्रस्व करना हो वहाँ इक् ही ह्रस्व होता है ) ।

प्रद्यूनि । प्रद्युनेत्यादि ॥ प्ररि । प्ररिणी । प्ररीणि । प्ररिणा । एक-देशविकृतमनन्यवत् । प्रराभ्याम् । प्ररीणाम् ।

सुनु । सुनुनी । सुनूनि । सुनुनेत्यादि ॥

॥ इत्यजन्तनपुंसकलिङ्गप्रकरणम् ॥

# अथ हलन्तपुँल्लिङ्गप्रकरणम् ।

## हो ढः । ८ । २ । ३१ ॥

हस्य ढः स्याज्झलि पदान्ते च । लिट्-लिड् । लिहौ । लिहः । लिहा । लिड्भ्याम् । लिट्त्सु-लिट्सु ॥

## दादेर्धातोर्घः । ८ । २ । ३२ ॥

मधुशब्दस्याऽपि न पुंवत्त्वं, तस्य भाषितपुंस्कत्वेऽपि प्रवृत्तिनिमित्तभेदात् । पुंसि चैत्रत्वं, क्लीबे पुष्परसादित्वञ्च प्रवृत्तिनिमित्तमिति विवेकः । 'मधुर्वसन्ते चैत्रे च' 'मधु मद्ये पुष्परसे' इत्यभिधानात् । प्ररीति । प्रकृष्टो रा यस्मिन् कुले तत्प्ररि कुलम् । सुष्ठु नौर्यस्मिन् कुले जले वा तत्-सुनु । अत्रापि न पुंवद्भावः । * इत्यजन्ता नपुंसकलिङ्गाः *

लिडिति । लेढीति लिह । लिह् आस्वादने । क्विप् । हल्ङ्यादिलोपे पदान्तत्वाड्ढत्व, वावसाने इति चर्त्त्वविकल्पः । लिट्त्स्विति । ढस्य जश्त्वेन डः, तस्य खरि चेति चर्त्वेन टः । तस्याऽसिद्धत्वाच्चयो द्वितीया इति टस्य ठो न । सस्य ष्टुत्वन्तु न, 'न पदान्ताट्टोरनाम्'मिति तन्निषेधात् ।

लिट्त्स्विति । ढस्य जश्त्वेन डकारे चर्त्त्वस्याऽसिद्धत्वात्पूर्वं 'डः सि' इति धुटि चर्त्त्वेन धस्य तकारः, डस्य टकारश्च ।

धातोरित्यावर्त्तते, तत्रैकमतिरिच्यमानमुपदेशकालिकं दादिं लक्षणया बोध-

१ हकार के स्थान में ढकार होय, झल्परे रहते और पदान्त में ।

२ उपदेश में जो दादि धातु, तदवयव जो हकार उसको घकार आदेश होय झल्परे रहते और पदान्त में ।

उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च ॥

**[1] एकाचो बशो भष् झषन्तस्य स्ध्वोः । ८ । २ । ३७ ॥**

धात्ववयवस्यैकाचो झषन्तस्य बशो भष् स्यात् से ध्वे पदान्ते च ।

धुक्-धुग् । दुहौ । दुहः । धुग्भ्याम् । धुक्षु ।

**[2] वा द्रुहमुहष्णुहष्णिहाम् । ८ । २ । ३३ ॥**

एषां हस्य वा घः स्याज्झलि पदान्ते च । ध्रुक्, ध्रुग्, ध्रुट्, ध्रुड् । द्रुहौ । द्रुहः । ध्रुग्भ्याम्-ध्रुड्भ्याम् । ध्रुक्षु, ध्रुट्सु, ध्रुट्त्सु । एवं मुक् मुग्-मुट्-मुड् इत्यादि ।

**[3] धात्वादेः षः सः । ६ । १ । ६४ ॥**

धातोरादेः षस्य सः स्यात् । स्नुक्, स्नुग्, स्नुट्, स्नुड् । एवं-स्निक्-स्निग्, स्निट्-स्निड् ॥ विश्ववाट् । विश्ववाड् । विश्ववाहौ । विश्ववाहः । विश्ववाहम् । विश्ववाहौ ॥

**[4] इग्यणः सम्प्रसारणम् । १ । १ । ४५ ॥**

यति, तदाह-उपदेशे इति । स्ध्वोर्ग्रहणसामर्थ्याज्झलीति नेह सम्बध्यते, तेन दुग्धे दोग्धेत्यादौ न भष्भाव । धुगिति । दुह प्रपूरणे, क्विप् । दोग्धीति धुक्=गोपालः । ध्रुगिति । 'द्रुह जिघांसायां' 'मुह वैचित्ये' 'ष्णुह उद्गिरणे' ष्णिह प्रीतौ' । एभ्यः क्विप् । द्रुहेर्दादित्वान्नित्य घत्वे प्राप्ते, अन्यत्र चाऽप्राप्ते उभयत्र विभाषेयम् ।

विश्ववाडिति । विश्वं वहतीति-विश्ववाट्-विश्वम्भरः । एवं रथ-

१ 'धातु का अवयव जो एकाच् झषन्त, तदवयव जो बश्, उसको भष्भाव होय, सकार और ध्व परे रहते, और पदान्त में ।

२ द्रुह मुह ष्णुह् ष्णिह् इनके हकार को घकार होय विकल्प करके झल्परे रहते और पदान्त में ।

३ धातु के आदि का जो षकार उसको सकार आदेश होय । ४ यण् के स्थान में प्रयुज्यमान ( विधीयमान ) जो इक् सो सम्प्रसारणसञ्ज्ञक होय ।

यणः स्थाने प्रयुज्यमानो य इक् स सम्प्रसारणसंज्ञः स्यात् ।

¹वाह ऊठ् । ६ । ४ । १३२ ॥

भस्य वाहः सम्प्रसारणमूठ् स्यात् ॥

²सम्प्रसारणाच्च । ६ । १ । १०८ ॥

सम्प्रसारणादचि परे पूर्वरूपमेकादेशः स्यात् । एत्येधत्यूठ्स्विति वृद्धिः । विश्वौहः । इत्यादि ॥

³चतुरनडुहोराम्उदात्तः । ७ । १ । ९८ ॥

अनयोराम् स्यात्सर्वनामस्थाने परे [ स चोदात्तः ] ।

⁴सावनडुहः । ७ । १ । ८२ ॥

अस्य नुम् स्यात् सौ परे । अनड्वान् ॥

⁵अम् सम्बुद्धौ । । ७ । १ । ९९ ॥

चतुरनडुहोरम् स्यात् सम्बुद्धौ । हे अनड्वन् । हे अनड्वाहौ । हे अनड्वाहः । अनडुहः । अनडुहा ।

⁶वसुस्रंसुध्वंस्वनडुहां दः । ८ । २ । ७२ ॥

सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । अनडुद्भ्यामित्यादि ।

---

वाट् । शकटवाट् । अनः=शकट-वहतीति-अनड्वान् । 'अनसि वहेः क्विप्, अनसो डश्च' । संयोगान्तलोपस्याऽसिद्धत्वान्नलोपः प्रातिपदिकान्तेति नलोपो न ।

'ससजुषो रुः' इति सूत्रात्सेत्यनुवर्त्तते, तच्च वसोरेव विशेषणं, न स्रंसुध्वंसोरव्यभिचारात्, नाप्यनडुहः, असम्भवादत आह—सान्तेति ।

१ भसञ्ज्ञक जो वाह् उसको सम्प्रसारणसञ्ज्ञक ऊठ् होय ।

२ सम्प्रसारण से अच् परे रहते पूर्व पर के स्थान में पूर्वरूप एकादेश होय ।

३ चतुर् और अनडुह् शब्द को आम् होय सर्वनामस्थान परे रहते ।

४ अनडुह् शब्द को नुम् का आगम होय सुप्रत्यय परे रहते ।

५ चतुर् और अनडुह् शब्द को अम् का आगम होय सम्बुद्धि परे रहते ।

६ सान्त जो वस्वन्त और स्रसादि, उनको दकार अन्तादेश होय पदान्त में ।

सान्तेति किम् ?। विद्वान् । पदान्तेति किम् ? स्रस्तम् । ध्वस्तम् ।

[1] सहेः साडः सः । ८ । ३ । ५६ ॥

साड्रूपस्य सहेः सस्य मूर्धन्यादेशः स्यात् । तुराषाट् । तुराषाड् । तुरासाहौ । तुरासाहः । तुराषाड्भ्यामित्यादि ।

[2] दिव औत् । ७ । १ । ८४ ॥

दिविति प्रातिपदिकस्यौत्स्यात्सौ परे । सुद्यौः । सुदिवौ ॥

[3] दिव उत् । ६ । १ । १३१ ॥

दिवोऽन्तादेश उकारः स्यात् पदान्ते । सुद्युभ्यामित्यादि ॥ चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः २ ॥

[4] षट्चतुर्भ्यश्च । ७ । १ । ५५ ॥

षट्संज्ञकेभ्यश्चतुरश्च परस्याऽऽमो नुडागमः स्यात् ॥

[5] रषाभ्यां नो णः समानपदे । ८ । ४ । १ ॥

[ एकपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णः स्यात् ] ।

[6] अचो रहाभ्यां द्वे । ८ । ४ । ४६ ।

अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । चतुर्ण्णाम् । चतुर्णाम् ॥

तुराषाट् इन्द्र । 'तुराषाण्मेघवाहन.' इत्यमरः ।

१ साड्रूप जो सह् उसको मूर्धन्य ( षकार ) आदेश होय ।

२ 'दिव्' यह जो प्रातिपदिक उसको औकार आदेश हो सु परे रहते ।

३ दिव् शब्दको उकार अन्तादेश होय पदान्त में ।

४ षट्सञ्ज्ञक और चतुर् शब्दसे परे जो आम् उसको नुट् का आगम होय।

५ एकपदस्थ रेफ षकार से पर जो नकार उसको णकार होय । ६ अच् से परे जो रेफ हकार उससे परे जो यर् उसको द्वित्व होय विकल्प करके ।

**रोः[1] सुपि । ८ । ३ । १६ ॥**

सप्तमीबहुवचने रोरेव विसर्जनीयो नान्यरेफस्य । पत्नम् । पस्य द्वित्वे प्राप्ते ॥

**शरोऽचि[2] । ८ । ४ । ४९ ।**

अचि परे शरो न द्वे स्तः । चतुर्षु ॥

**मो[3] नो धातोः । ८ । २ । ६४ ॥**

धातोर्मस्य नः स्यात् पदान्ते । प्रशान् ॥

**किमः[4] कः । ७ । २ । १०३ ॥**

किमः कः स्याद्विभक्तौ । कः । कौ । के । [ कम् । कौ । कान् ] । इत्यादि । शेषं सर्ववत् ॥

**इदमो[5] मः । ७ । २ । १०८ ॥**

इदमो मस्य मः स्यात् सौ परे । त्यदाद्यत्वापवादः ॥

**इदो[6]ऽय् पुंसि । ७ । २ । १११ ॥**

इदम इदोऽय् स्यात् सौ पुंसि । [सोर्लोपः] । अयम् । त्यदाद्यत्वे॥

'खरवसानयो'रित्येव सिद्धे नियमार्थमिदमत आह-रोरेवेति । 'रोः सुप्येव विसर्ग' इति विपरीतनियमस्तु न, 'हलोऽनन्तराः संयोगः' इत्यादि-निर्देशात् । 'इदमो म' इत्यत 'इदम' इत्यनुवर्त्तते, तदाह इदम इति । 'तदो. सः सावनन्त्ययो' रित्यतः सावित्यनुवर्त्तते ।

१ सप्तमी बहुवचन सुप् परे रहते रु के रेफ को ही विसर्ग हो अन्य रेफ को नहीं होय । २ अच् पर रहते शर् को द्वित्व नहीं होय ।

३ धातु के मकार को नकार होय पदान्त में । ४ किम्शब्द को क आदेश होय विभक्ति परे रहते । ५ इदम् शब्द के मकार को मकार ही आदेश हो सु परे रहते (पुंलिङ्ग में) । ६ इदम् शब्द के इद्भाग को अय् आदेश हो सु परे रहते पुलिङ्ग में ।

**[१]अतो गुणे । ६ । १ । ९७ ॥**

अपदान्तादतो गुणे परतः पररूपमेकादेशः स्यात् ॥

**[२]दश्च । ७ । २ । १०९ ॥**

इदमो दस्य मः स्याद्विभक्तौ । इमौ । इमे । त्यदादेः सम्बोधनं नास्तीत्युत्सर्गः ॥

**[३]अनाप्यकः । ७ । २ । ११२ ॥**

अककारस्येदम इदोऽन् स्यादापि विभक्तौ । आबिति प्रत्याहारः । अनेन ॥

**[४]हलि लोपः । ७ । २ । ११३ ॥**

अककारस्येदम इदो लोपः स्यादापि हलादौ । [५]नाऽनर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥

**अनाप्यक इति** । अन्–प्रथमान्तम्, आपि–सप्तम्यन्तम् । अकः–षष्ठ्यन्तम् । **आबितीति** । आबिति टा इत्यारभ्य सुपः पकारेण प्रत्याहारः, न तु टापो ग्रहणं, विभक्ताविति विशेषणात् । **नानर्थक इति** । अनर्थके अलोऽन्त्यस्येति विधिर्न प्रवर्त्तते, अभ्यासविकारं वर्जयित्वा । अभ्यासविकारे तु अनर्थकेऽप्यलोन्त्यस्येति प्रवर्त्तते एवेत्यर्थः । तेन बिभर्ति पिपर्त्तीत्यादौ भृञामिदिति, अर्त्तिपिपर्त्योरिति चेत्त्वमभ्यासावयवस्यान्त्यस्य अलो भवति, न सर्वस्याभ्यासस्येत्याहुः ।

१ अपदान्त अकार से गुण परे रहते पूर्व पर के स्थान में पररूप एकादेश होय । २ इदम् शब्द के दकार को मकार होय विभक्ति परे रहते ।

३ ककाररहित जो इदम् शब्द उसके इद् भाग को अन् आदेश होय, आप् (तृतीयादि ) विभक्ति परे रहते । ४ ककाररहित जो इदम् शब्द उसके इद् भाग का लोप होय, हलादि आप् (तृतीयादि ) विभक्ति परे रहते ।

५ अनर्थक में अलोन्त्यविधि (अलोन्त्यस्य' यह सूत्र ) प्रवृत्त नहीं होय, अभ्यासविकार को छोडकर । अर्थात् अभ्यासविकार में तो अनर्थक में भी अलोन्त्यविधि प्रवृत्त होता ही है ।

आद्यन्तवदेकस्मिन् । १ । १ । २१ ॥

एकस्मिन्क्रियमाणं कार्यमादाविवाऽन्त इव स्यात् । सुपि चेति दीर्घः । आभ्याम् ॥

नेदमदसोरकोः । ७ । १ । ११ ॥

अककारयोरिदमदसोर्भिस ऐस् न स्यात् । एभिः । अस्मै । [ आभ्याम् ] । एभ्यः । अस्मात् । [ आभ्याम् । एभ्यः ] । अस्य । अनयोः । एषाम् । अस्मिन् । अनयोः । एषु ॥

द्वितीयाटौस्स्वेनः । २ । ४ । ३४ ॥

द्वितीयायां टौसोश्च परत इदमेतदोरेनादेशः स्यादन्वादेशे । किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातु पुनरुपादानमन्वादेशः । यथा अनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति । अनयोः पवित्रं कुलमेनयोः प्रभूतं स्वमिति । एनम् । एनौ । एनान् । एनेन । एनयोः । एनयोः ॥ राजा ॥

द्वितीयाटौस्सु-सप्तम्यन्तम् , एनः-प्रथमान्तम् । विधातुम्=अपूर्वं बोधयितुम् । अनु=पश्चात् , आदेशः=उपादानमित्यर्थः । यथेति । अत्र अधीतव्याकरणोऽयं बाल इति बोधयितुमुपात्तस्येदम्शब्दस्य छन्दोऽध्यापनानुज्ञाप्रदानरूपं कार्यान्तरं बोधयितुं पुनरुपादानाद्भवत्यत्राऽन्वादेशः । एवमेव-पवित्रसत्कुलप्रसूताविमाविति बोधयितुमुपात्तस्य प्रभूतधनशालिनावपीमा-

१ एक (असहाय) में क्रियमाण जो कार्य वह आदि और अन्त की तरह होय।

२ ककाररहित जो इदम् और अदस् शब्द, उनसे परे जो भिस् उसको ऐस् आदेश नहीं होय ।

३ द्वितीया विभक्ति और टा ओस् परे रहते इदम् और एतद् के स्थान में एन आदेश हो अन्वादेश में ।

४ किसी कार्य को विधान करने के लिए जिसका पहिले उपादान किया गया हो फिर उसीका कार्यान्तर विधान करने को पुनः उपादान (ग्रहण) करना अन्वादेश कहाता है ।

**[१] न ङिसम्बुद्ध्योः । ८ । २ । ८ ॥**

नस्य लोपो न स्यान्ङौ सम्बुद्धौ च ॥ हे राजन् । *[२]ङावुत्तरपदे प्रतिषेधो वक्तव्यः । ब्रह्मनिष्ठः । राजानौ । राजानः । राज्ञः ॥

**[३] नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति । ८ । २ । २ ॥**

सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो, नान्यत्र--राजाश्व इत्यादौ । इत्यसिद्धत्वादात्वमेत्वमैस्त्वञ्च न । राजभ्याम् । राजभिः । राजभ्यः । राज्ञि-राजनि । राजसु ॥ यज्वा । यज्वानौ । यज्वानः ॥

**[४] न संयोगाद्वमन्तात् । ६ । ४ । १३७ ॥**

वकारमकाराऽन्तसंयोगात्परस्याऽनोऽकारस्य लोपो न स्यात् ॥ यज्वनः । यज्वना । यज्वभ्याम् ॥ ब्रह्मणः । ब्रह्मणा ।

**[५] इन्हन्पूषार्यम्णां शौ । ६ । ४ । १२ ॥**

विति बोधयितु पुनरुपादानाद्भवत्यन्वादेशः । ङावित्ति । उत्तरपदपरके ङौ परतो न ङिसम्बुद्ध्योरिति नलोपप्रतिषेधो न प्रवर्त्तते, किन्तु 'नलोपः प्रातिपदिके'ति नलोपो भवत्येवेति वार्त्तिकार्थः ।

इत्यसिद्धत्वात्=इत्यनेन शास्त्रेण सुब्विधित्वेन नलोपस्याऽसिद्धतया, राजभ्यामित्यत्र 'सुपि चे'ति दीर्घः, 'राजभ्य' इत्यत्र 'बहुवचने झल्ये'त्येत्वम्, राजभिरित्यत्र 'अतो भिस ऐस्' इत्यैस्त्वञ्च नेत्यर्थः । इष्टवान्--यज्वा=सविधिकृतयागः । सुयजोर्ङ्वनिप् । 'यज्वा तु विधिनेष्टवा'नित्यमरः । ब्रह्मा=

१ ङि और सम्बुद्धि परे रहते नलोप नहीं हो ।

२ उत्तरपदपरक ङि परे रहते 'न ङिसम्बुद्ध्योः' यह निषेध प्रवृत्त नहीं होय । अर्थात् नलोप होता ही है । ३ सुब्विधि स्वरविधि संज्ञाविधि और कृत्परक तुग् विधि में ही नलोप असिद्ध होता है—अन्यत्र नहीं ।

४ वकारान्त मकारान्त सयोग से परे जो अन् का अकार उसका लोप नहीं होय । ५ इन् हन् पूषन् और अर्यमन्, इनकी उपधा को दीर्घ हो तो शि परे रहते ही होय अन्यत्र नहीं होय ।

एवं शावेवोपधाया दीर्घो नाऽन्यत्र । इति निषेधे प्राप्ते ॥

**सौ च । ६ । ४ । १३ ॥**

इन्नादीनामुपधाया दीर्घः स्यादसम्बुद्धौ सौ परे । वृत्रहा । हे वृत्रहन् ॥

**एकाजुत्तरपदे णः । ८ । ४ । १२ ॥**

एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णः स्यात् । वृत्रहणौ ॥

**हो हन्तेर्ञ्णिन्नेषु । ७ । ३ । ५४ ॥**

ञिति णिति च प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वं स्यात् । वृत्रघ्नः—इत्यादि ॥ एवं शार्ङ्गिन् । यशस्विन् । अर्यमन् । पूषन् ॥

**मघवा बहुलम् । ६ । ४ । १२८ ॥**

मघवन्शब्दस्य वा 'तृ' इत्यन्तादेशः स्यात् । ऋ इत् ।

**उगिदचां सर्वनामस्थानेऽधातोः । ७ । १ । ७० ॥**

प्रजापतिर्ब्राह्मणश्च । 'सर्वनामस्थाने चाऽसम्बुद्धौ'इत्येव सिद्धे नियमार्थमिदमत आह—**शावेवेति** । शावेवेति नियमात्सौ दीर्घस्याऽप्राप्तिराह—**सौ च** । वृत्रं हतवान्—वृत्रहा=इन्द्रः ।

शार्ङ्ग—शृङ्गनिर्मितं धनुः—अस्त्यस्य—शार्ङ्गी=विष्णुः ।

अर्यमा=आदित्यः । पूषा—सूर्यः । मघवा=इन्द्रः ।

१ इन्नादि की उपधा को दीर्घ होय सम्बुद्धि भिन्न सु परे रहते ।

२ एक अच् है उत्तरपद में जिसके ऐसा जो समास, उस समास मे पूर्वपद में स्थित निमित्त [ रेफ षकार ] से परे जो प्रातिपदिकान्त, नुम् और विभक्तिस्थ नकार, उसको णकार हो समानपद में । ३ ञित् णित् प्रत्यय परे रहते और नकार परे रहते हन् धातु के हकार को कुत्व होय ।

४ मघवन् शब्द को तृ अन्तादेश होय विकल्प करके । ५ धातुभिन्न जो उगित् और नलोपी जो अञ्चति, उनको नुम् का आगम होय, सर्वनामस्थान परे रहते ।

अधातोरुगितो नलोपिनोऽञ्चतेश्च नुमागमः स्यात्सर्वनामस्थाने परे । मघवान् । मघवन्तौ । मघवन्तः । हे मघवन् । मघवद्भ्याम् । तृत्वाऽभावे—मघवा । सुटि—राजवत् ॥

**श्वयुवमघोनामतद्धिते[1] । ६ । ४ । १३३ ॥**

अन्नन्तानां भसंज्ञकानामेषामतद्धिते परे सम्प्रसारणं स्यात् । मघोनः । मघवभ्याम् । एवं श्वन् । युवन् ॥

**न सम्प्रसारणे सम्प्रसारणम्[2] । ६ । १ । ३७ ॥**

सम्प्रसारणे परतः पूर्वस्य यणः सम्प्रसारणं न स्यात् । इति यकारस्य नेत्वम् । अतएव ज्ञापकादन्त्यस्य यणः पूर्वं सम्प्रसारणम् । यूनः । यूना । युवभ्याम्—इत्यादि ॥ अर्वा । हे अर्वन् ।

**अर्वणस्त्रसावनञः[3] । ६ । ४ । १२७ ॥**

नञा रहितस्याऽर्वन्नित्यस्याऽङ्गस्य 'तृ' इत्यन्तादेशः स्यान्न तु सौ । अर्वन्तौ । अर्वन्तः । अर्वद्भ्यामित्यादि ॥

सुटि=सर्वनामस्थाने । राजवत्=राजञ्छब्दवद्रूपाणि बोध्यानीत्यर्थः । श्वेति । श्वा, श्वानौ, श्वानः । श्वान, श्वानौ, शुनः । शुना, श्वभ्या, श्वभि । शुने, श्वभ्या, श्वभ्य. । शुन , श्वभ्या, श्वभ्य. । शुनः, शुनो, शुनाम् । शुनि, शुनोः श्वसु । हे श्वन् । एवं—युवा, युवानौ, युवानः । युवानं, युवानौ, यून । यूना, युवभ्यामित्यादि । अर्वा=घोटकः ।

१ अन्नन्त भसंज्ञक जो श्वन् युवन् मघवन् शब्द इनका तद्धितभिन्नप्रत्यय परे रहते 'तृ' अन्तादेश होय ।

२ सम्प्रसारण परे रहते पूर्व यण् को सम्प्रसारण नहीं होय ।

३ नञ्रहित जो अर्वन् यह अङ्ग उसको 'तृ' अन्तादेश हो, सु परे रहते नहीं होय ।

**पथिमथ्यृभुक्षामात्[1] । ७ । १ । ८५ ॥**

एषामाकारोऽन्तादेशः स्यात् सौ परे ॥

**इतोऽत्सर्वनामस्थाने[2] । ७ । १ । ८६ ॥**

पथ्यादेरिकारस्याऽकारः स्यात्सर्वनामस्थाने परे ॥

**थो न्थः[3] । ७ । १ । ८७ ॥**

पथिमथोस्थस्य न्थादेशः स्यात् सर्वनामस्थाने परे । पन्थाः । पन्थानौ । पन्थानः ॥

**भस्य टेर्लोपः[4] । ७ । १ । ८८ ॥**

भसञ्ज्ञकस्य पथ्यादेष्टेर्लोपः स्यात् । पथः । पथा । पथिभ्याम् ॥ एवं मथिन् । ऋभुक्षिन् ॥

**ष्णान्ता षट्[5] । १ । १ । २४ ॥**

पान्ता नान्ता च सङ्ख्या षट्संज्ञा स्यात् । पञ्चन्शब्दो नित्यं बहुवचनान्तः । पञ्च २ । पञ्चभिः । पञ्चभ्यः २ । नुट् ॥

---

**पथिमथि** । आ आदिति प्रश्लेषेण शुद्धाया एव व्यक्तेर्विधानाभाऽनुनासिकः ।

**इतोऽत्** । इत इत्यत्र अदित्यत्र च तपरकरणं स्पष्टार्थम् ।

**थो न्थः** । थ.—षष्ठ्यन्तं, न्थः—प्रथमान्तम् । पथिमथिग्रहणमनुवर्त्तते, ऋभुक्षिग्रहणं निवृत्तं, तत्र थकाराऽभावात् । मन्था.—मन्थनदण्डः। ऋभुक्षा इन्द्रः । **पञ्चेति** । पञ्चेत्यत्र जश्शसोः 'षड्भ्यो लु'गिति लुक् । नलोपः । **नुडिति** । 'षट्चतुर्भ्यश्चे'त्यनेन पञ्चानामित्यत्र नुडित्यर्थः ।

---

१ पथिन् मथिन् ऋभुक्षिन् इनको आकार अन्तादेश हो सु परे रहते ।

२ पथ्यादिक का जो इकार, उसको अकार अन्तादेश हो सर्वनामस्थान परे रहते । ३ पथिन् मथिन् के थकार को 'न्थ' आदेश होय, सर्वनामस्थान परे रहते । ४ भसंज्ञक जो पथ्यादि, उनकी टि का लोप होय ।

५ पान्त नान्त जो संख्या उसकी षट्संज्ञा होय ।

**नोपधायाः[1] । ६ । ४ । ७ ॥**

नान्तस्योपधायाः दीर्घः स्यान्नामि परे । पञ्चानाम् । पञ्चसु ॥

**अष्टन आ विभक्तौ[2] । ७ । २ । ८४ ॥**

अष्टन आत्वं वा स्याद्धलादौ विभक्तौ ॥

**अष्टाभ्य औश्[3] । ७ । १ । २१ ॥**

कृताऽऽकारादष्टनः परयोर्जश्शसोरौश् स्यात् । 'अष्टभ्य' इति वक्तव्ये कृताऽऽत्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति । अष्टौ २ । अष्टाभिः । अष्टाभ्यः २ । अष्टानाम् । अष्टासु । आत्वाऽभावे–अष्ट, अष्ट इत्यादि पञ्चवत् ॥

**नोपधायाः।** नेति लुप्तषष्ठ्यन्तम्, उपधायाः–षष्ठ्यन्तम् । पञ्चन्शब्दादामि 'षट्चतुर्भ्य'इति नुटि नलोपस्याऽसिद्धत्वात् पूर्वं 'नोपधाया'इति दीर्घः ततः स्वादिष्विति सूत्रेण पञ्चनित्यस्य पदत्वान्नलोपः प्रातिपदिकेति नलोपे 'पञ्चाना'मिति सिद्धम् । **अष्टभ्य इति** । ननु आत्वविधायके 'अष्टन आ विभक्ता'वित्यत्र हलीत्यस्यापकर्षेण जश्शसोर्हलादित्वाऽभावादात्वाऽप्रवृत्त्या जश्शसो. परतोऽष्टञ्छब्दस्य कृताऽऽकारता कथमत आह–**अष्टभ्य इतीति** । 'अष्टाभ्य औशि'त्यत्र कृतात्त्वस्याऽष्टाशब्दस्यानुकरणं कृत्वा ततो भ्यसि अष्टाभ्य इति रूपं, न तु अष्टन्शब्दस्य लक्षणवशसम्पन्नाऽऽकारस्य, रूपं, तथा सति मात्रालाघवेन 'अष्टभ्य' इत्येव वक्तव्यं स्यात् । 'दीर्घान्तादष्टनः परा असर्वनामस्थानविभक्तिरुदात्ता' इत्यर्थके 'अष्टनो दीर्घा'दिति सूत्रे दीर्घग्रहणादात्वस्य वैकल्पिकत्वात् । एवञ्च 'अष्टाभ्य' इति कृतात्त्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयतीति युक्तमेवोक्तम् । **अष्टानामिति** । अष्टन्–आमित्यत्र 'षट्चतुर्भ्यश्चे'ति नुटि सन्निपातपरिभाषाया अनित्यत्वादष्टन आ विभक्तावित्या-

१ नान्त की उपधा को दीर्घ होय नाम् परे रहते । २ अष्टन् शब्द को आत्व होय विकल्प करके हलादि विभक्ति परे रहते । ३ कृताऽऽकार जो अष्टन् शब्द, उससे परे जो जस् शस्–उनको औश् आदेश होय ।

ऋत्विग्दधृक्[1]स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च । ३ । २ । ५९

एभ्यः क्विन् स्यात् । अञ्चेः सुप्युपपदे । युजिक्रुञ्चोः केवलयोः क्रुञ्चेर्नलोपाऽभावश्च निपात्यते । कनावितौ ॥

कृदतिङ्[2] । ३ । १ । ९३ ॥

अत्र=सन्निहिते धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ॥

वेरपृक्तस्य[3] । ६ । १ । ६७ ॥

अपृक्तस्य वस्य लोपः स्यात् ॥

क्विन्प्रत्ययस्य कुः । ८ । २ । ६२ ॥

---

त्वमिति केचित् । परंतु लुटि 'नोपधायाः' इति दीर्घे नलोपे च अध्वानामिति रूपमित्याहुः ।

'स्पृशोऽनुदके' इत्यतः क्विनित्यनुवर्त्तते, तदाह क्विनिति । ऋता-वुपपदे यजेः क्विन् । धृष्णोतेर्द्वित्वमन्तोदात्तत्वञ्च निपात्यते । सृजेः कर्मणि क्विन्, अमागमश्च निपात्यते । दिशेः कर्मणि क्विन् । उत्पूर्वात्स्निहेः क्विन्, तकारलोपः, षत्वञ्च । अञ्चेः सुप्युपपदे क्विन् । युजिक्रुञ्चोः केवलयोः क्विन्नि-त्याद्यलाक्षणिकमपि किञ्चित्कार्यं निपातनाल्लभ्यते ।

कनाविताविति । कस्य-'लशक्वतद्धिते' इत्यनेन, नस्य 'हलन्त्य'मित्यनेन इत्सञ्ज्ञा, ततश्च 'तस्य लोप' इति लोप इत्यर्थः, इकारस्तूच्चारणार्थ इत्यवधेयम् ।

कृदतिङ् । कृत् प्रथमान्तम्, अतिङ्-प्रथमान्तम् । सन्निहिते=धातोरित्य-धिकारे । तेन 'धातोः कर्मण' इत्यधिकारविहितणिजादीना न कृत्सञ्ज्ञा । 'लोपो व्यो'रित्यतो 'लोप' इत्यनुवर्त्तते । 'वे'रिति उत्सृष्टानुबन्धनिर्देशात् क्विन्क्विबादीना

१ ऋत्विग् आदि शब्द क्विन्नन्त निपातित हों । अञ्चु धातु से सुप् उपपद रहते क्विन् होय । युजि क्रुञ्च से केवल से क्विन् होय । क्रुञ्च धातु के नकार का लोप नहीं हो ।

२ सन्निहित धात्वधिकार में पठित जो तिङ्भिन्न प्रत्यय उनकी कृत् संज्ञा होय । ३ अपृक्त वकार का लोप हो । ४ क्विन् प्रत्यय जिससे किया जाय उसको कवर्ग अन्तादेश होय पदान्तमें ।

क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः स्यात् पदान्ते । अस्याऽसिद्धत्वाच्चोः कुरिति कुत्वम् । ऋत्विक्-ऋत्विग् । ऋत्विजौ । [ ऋत्विजः ] । ऋत्विग्भ्याम् ॥

युजेरसमासे[1] । ७ । १ । ७१ ॥

युजेः सर्वनामस्थाने नुम् स्यादसमासे । सुलोपः । संयोगान्तलोपः । कुत्वेन नस्य ङः । युङ् । अनुस्वारपरसवर्णौ । युञ्जौ । युञ्जः । युग्भ्याम् ॥

चोः कुः[2] । ८ । २ । ३० ॥

चवर्गस्य कवर्गः स्याज्झलि पदान्ते च । सुयुक्-सुयुग् । सुयुजौ । सुयुग्भ्याम् ॥ खन् । खञ्जौ । खन्भ्याम् ॥

व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः[3] ।८।२।३६॥

व्रश्चादीनां सप्तानां छशान्तयोश्च षकारोऽन्तादेशः स्यात्

ग्रहणम् । नुमिति । 'उगिदचा'मित्यतः 'सर्वनामस्थाने' इति 'इदितो नुम्धातो'रित्यतो नुमिति चानुवर्त्तते ।

नस्येति । 'क्विन्प्रत्ययस्य कु'रित्यनेनेत्यर्थः । युनक्तीति युङ् ।

युञ्जिति । 'नश्चापदान्तस्ये'ति नुमो नस्यानुस्वारः, 'अनुस्वारस्य ययी'ति परसवर्णेन ञकारः, परसवर्णस्यासिद्धत्वाच्च कुरिति कुत्वं नेत्यवधेयम् ।

सुष्ठु युनक्तीति सुयुक् । सुपूर्वाद्युजेः 'सत्सूद्विषे'ति क्विपि 'उपपदमति'ङिति समासः । असमासे इत्युक्तेरत्र 'युजेरसमासे' इति नुम्नेत्याशयः ।

खन्निति । अत्र सकारस्य हल्ङ्यादिलोपः, जकारस्य संयोगान्तलोपः । ततो निमित्तस्य जकारस्यापायादनुस्वारपरसवर्णयोर्निवृत्त्या नकार एव श्रूयते ।

१ युज् (धातु) को नुम् हो सर्वनामस्थान परे रहते, समास में न हो ।

२ चवर्ग को कवर्ग आदेश होता है झल् परे रहते और पदान्त में ।

३ व्रश्चादि सात और छान्त शान्त इनको षकार अन्तादेश होय झल् परे रहते और पदान्त में ।

झलि पदान्ते च । जश्त्वचर्त्वे । राट्-राड् । राजौ । राजः । राड्भ्याम् । एवं विभ्राट् । देवेट् । विश्वसृट् । [1]परौ व्रजे षः पदान्ते । परावुपपदे व्रजेः क्विप् स्याद्दीर्घश्च पदान्ते षत्वमपि । परिव्राट् । परिव्राजौ ।

[2]विश्वस्य वसुराटोः । ६ । ३ । १२८ ॥

विश्वशब्दस्य दीर्घोऽन्तादेशः स्याद्वसौ राट्शब्दे च परे । विश्वाराट्, विश्वाराड् । विश्वराजौ । विश्वाराड्भ्याम् ॥

[3]स्कोः संयोगाद्योरन्ते च । ८ । २ । २९ ॥

पदान्ते झलि च परे यः संयोगस्तदाद्योः सकारककारयोर्लोपः स्यात् । भृट् । सस्य श्चुत्वेन शः । 'झलां जश् झशी'ति शस्य जः । भृज्जौ । भृड्भ्याम् ॥ त्यदाद्यत्वं पररूपत्वं च ।

[4]तदोः सः सावनन्त्ययोः । ७ । २ । १०६ ॥

राजते इति राट् । विशेषेण भ्राजते इति विभ्राट् । देवान् यजतीति देवेट्=देवपूजकः । विश्वं सृजतीति विश्वसृट्=ब्रह्मा ।

सूत्रे राडिति पदान्तोपलक्षणार्थं, चर्त्वमविवक्षितं, व्याख्यानादतो जशन्तेऽपि दीर्घस्तदाह-विश्वाराडिति । विश्वस्मिन् राजते इति विश्वाराट्=सूर्यः । परित्यज्य सर्वं व्रजतीति परिव्राट्=भिक्षुः । 'भिक्षु परिव्राट् कर्मन्दी'त्यमरः । पदस्येत्यधिकृतं, 'झलो झलि'त्यतो झलीत्यनुवर्तते । पदस्येति झलीति अन्ते इति च संयोगस्यस्य लुप्तषष्ठ्यन्तस्य विशेषणम् । तदाह पदान्ते इति । भृज्जतीति भृट्=भर्जनकर्ता ।

१ परि उपपद रहते व्रजधातु से क्विप् होय, (और व्रज को) दीर्घ होय, और षकार हो पदान्त में । २ विश्व शब्द को दीर्घ अन्तादेश होय वसु और राट शब्द परे रहते । ३ संयोग के आदि का जो सकार और ककार उसका लोप होय पदान्त में और झल परे रहते ।

४ त्यदादियों का जो अनन्त्य तकार दकार उसको सकार आदेश हो सु परे रहते ।

त्यदादीनां तकारदकारयोरनन्त्ययोः सः स्यात्सौ। स्यः। त्यौ। त्ये। सः। तौ। ते। यः। यौ। ये। एषः। एतौ। एते॥

ङे प्रथमयोरम्[1]। ७। १। २८॥

युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चाऽमादेशः स्यात्॥

त्वाहौ सौ[2]। ७। २। ९४॥

अनयोर्मपर्यन्तस्य त्वाहावादेशौ स्तः सौ परे॥

शेषे लोपः[3]। ७। २। ९०॥

आत्वयत्वनिमित्तेतरविभक्तौ परतो युष्मदस्मदोरन्त्यस्य लोपः स्यात्। त्वम्। अहम्।

युवावौ द्विवचने[4]। ७। २। ९२॥

द्वयोरुक्तौ युष्मदस्मदोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ।

---

'युष्मदस्मद्भ्यां ङसोऽश्'इत्यतो 'युष्मदस्मद्भ्या'मिति वर्त्तते। 'ङे' इति लुप्तषष्ठीकं पृथक्पदम्। प्रथमा च प्रथमा च प्रथमे, तयोः प्रथमयोः। एकः प्रथमाशब्दः प्रथमाविभक्त्यर्थकः, अपरो द्वितीयाविभक्त्यर्थकस्तदाह प्रथमेत्यादि।

उक्तादन्यः शेषः, आत्वं यत्वं च प्रागुक्तम्। एवञ्च आत्वयत्वनिमित्तेतर-विभक्तावित्यर्थलाभः स्पष्टः। तदाह-आत्वेति।

उक्तिर्वचनं, द्वयोर्वचनं द्विवचनमिति योगार्थमभिप्रेत्याह-द्वयोरुक्ता-

---

१ युष्मद् अस्मद् से परे जो ङे और प्रथमा द्वितीया विभक्ति उनको अम् आदेश होय।

२ युष्मद् अस्मद् के मपर्यन्त भाग को 'त्व' 'अह' आदेश होय सु परे रहते।

३ आत्वयत्वनिमित्त से इतर विभक्ति परे रहते युष्मद् अस्मद् के अन्त का लोप होय।

४ युष्मद् अस्मद् के मपर्यन्त भाग को 'युव' 'आव' आदेश होय द्वित्व की उक्ति में, विभक्ति परे रहते।

**प्रथमायाश्च द्विवचने भाषायाम्** [1] । ७ । २ । ८८ ॥

औङ्येतयोरात्वं लोके । युवाम् । आवाम् ॥

**यूयवयौ जसि** [2] । ७ । २ । ९३ ॥

अनयोर्मपर्यन्तस्य यूयवयौ स्तो जसि । यूयम् । वयम् ॥

**त्वमावेकवचने** [3] । ७ । २ । ९७ ॥

एकस्योक्तौ युष्मदस्मदोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ ।

**द्वितीयायां च** [4] । ७ । २ । ८७ ॥

अनयोरात्स्यात् [ द्वितीयायाम् ] । त्वाम् । माम् ॥

**शसो न** [5] । ७ । १ । २९ ॥

आभ्यां परस्य शसो नः स्यात् । अमोऽपवादः आदेः परस्य । संयोगान्तलोपः । युष्मान् । अस्मान् ॥

**योऽचि** [6] । ७ । २ । ८९ ॥

अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः । त्वया । मया ॥

---

विति । इदगार्थं वचनग्रहणमेव मानम्, अन्यथा 'द्वित्वे' इत्येव ब्रूयाम्, 'अष्टन आ विभक्ता वित्यतो विभक्तावित्यस्याधिकृततया द्वित्वे या विभक्तिस्तस्या परत इत्यर्थस्य सम्भवात् । 'एकवचने'इत्यत्र उक्तिर्वचनम्, एकस्य वचनमिति योगार्थाभिप्रायेणाह—एकस्योक्ताविति ।

शसो नेति । नेत्यविभक्तिकम् ।

---

१ युष्मद् अस्मद् को आकार होय प्रथमा द्विवचन परे रहते भाषा नाम लोक में । २ युष्मद् अस्मद् के मपर्यन्त भाग को 'यूय' 'वय' आदेश होय जस् परे रहते । ३ एक की उक्ति में (एकत्व की विवक्षा में) युष्मद् अस्मद् के मपर्यन्त भाग को 'त्व' 'म' आदेश होय विभक्ति परे रहते ।

४ युष्मद् अस्मद् को आकार अन्तादेश होय द्वितीया विभक्ति परे रहते ।

५ युष्मद् अस्मद् से परे जो शस् उसको न आदेश होय । ६ युष्मद् अस्मद् को यकार आदेश होय, अनादेश अजादि विभक्ति परे रहते ।

युष्मदस्मदोरनादेशे[1] । ७ । २ । ८६ ॥

अनयोरात्स्यादनादेशे हलादौ विभक्तौ । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः ॥

तुभ्यमह्यौ ङयि[2] । ७ । २ । ९५ ॥

अनयोर्मपर्यन्तस्य तुभ्यमह्यौ स्तो ङयि । टिलोपः । तुभ्यम् । मह्यम् ॥

भ्यसोऽभ्यम्[3] ७ । १ । ३० ॥

आभ्यां परस्य भ्यसोऽभ्यम् इत्यादेशः स्यात् । युष्मभ्यम् । अस्मभ्यम् ॥

एकवचनस्य च[4] । ७ । १ । ३२ ॥

आभ्यां पञ्चम्येकवचनस्य ङसेत् स्यात् । त्वत् । मत् ॥

पञ्चम्या अत्[5] । ७ । १ । ३१ ॥

आभ्यां पञ्चम्या भ्यसोऽत्स्यात् । युष्मत् । अस्मत् ॥

तवममौ ङसि[6] । ७ । २ । ९६ ॥

अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि ॥

युष्मदस्मद्भ्यां ङसोऽश्[7] । ७ । १ । २७ ॥

[ युष्मदस्मद्भ्यां परस्य ङसोऽशादेशः स्यात् ] ।

तुभ्यमह्यौ-प्रथमान्तं, ङयि-सप्तम्यन्तम् ।

१ युष्मद् अस्मद् को आकार आदेश होय अनादेश हलादि विभक्ति परे रहते ।

२ युष्मद् अस्मद् के मपर्यन्त भागको 'तुभ्य' 'मह्य' आदेश हो ङे परे रहते ।

३ युष्मद् अस्मद् से परे जो भ्यस् उसको अभ्यम् आदेश होय ।

४ युष्मद् अस्मद् से परे जो पञ्चमी का एकवचन ङसि उसको 'अत्' आदेश होय ।

५ युष्मद् अस्मद् से परे जो पञ्चमी का भ्यस् उसको 'अत्' आदेश हो ।

६ युष्मद् अस्मद् के मपर्यन्त भाग को तव मम आदेश होय ङस् परे रहते ।

७ युष्मद् अस्मद् से परे जो ङस् उसको अश् आदेश होय ।

तव । मम । युवयोः । आवयोः ॥

**साम आकम् । ७ । १ । ३३ ॥**[1]

आभ्यां परस्य साम आकम् स्यात । युष्माकम् । अस्माकम् । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु ॥

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ । ८ । १ । २० ॥**[2]

पदात्परयोरपादादौ स्थितयोरनयोः षष्ठ्यादिविशिष्टयोर्वाम् नौ इत्यादेशौ स्तः ॥

**बहुवचनस्य वस्नसौ । ८ । १ । २१ ॥**[3]

उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः ॥

---

**साम** इति । सकारेण सहित आम्-साम्, तस्य-साम. । ननु युष्मद् आमित्यादौ आकमादेशात्पूर्वमनादेशत्वात् 'चो ची'ति यत्वेन भाव्यं, ततश्च 'शेषे लोप' इत्यस्याऽप्राप्त्या दलोपाभावेनाऽवर्णान्तत्वाभावादामि सर्वनाम्न इति सुटोऽप्राप्त्या ससुट्कनिर्देशो व्यर्थ इति चेन्न; आम आकमित्युच्यमाने कृते आकमि दस्य शेषे लोपे सति अवर्णान्तत्वात्प्राप्तस्य भाविनः सुटो निवृत्त्यर्थं ससुट्कनिर्देशस्यावश्यकत्वादित्यन्यत्र विस्तरः । एवञ्च-युष्मद्-आम्, अस्मद्-आमित्यत्र आम्येव साम्त्वस्याहार्यारोपेण तस्याकमादेशे शेषे लोपे च 'युष्माकम्' 'अस्माक'मिति सिद्धम् ।

**उक्तविधयोः**=पदात्परयोरपादादौ च स्थितयोः ।

१ युष्मद् अस्मद् से परे जो साम् ( सुट् सहित आम् ) उसको आकम् आदेश होय ।

२ पद से परे और अपादके आदिमें स्थित जो षष्ठी चतुर्थी द्वितीयाविशिष्ट युष्मद् अस्मद् शब्द उनको क्रम से 'वाम्' 'नौ' आदेश होय ।

३ पद से परे अपाद के आदिमें स्थित जो—षष्ठी चतुर्थी द्वितीया बहुवचनान्तविशिष्ट-युष्मद् अस्मद् शब्द उनको क्रम से 'वस्' 'नस्' आदेश होय ।

तेमयावेकवचनस्य । ८ । १ । २२ ॥

उक्तविधयोरनयोः षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः ॥

त्वामौ द्वितीयायाः । ८ । १ । २३ ॥

द्वितीयैकवचनान्तयोस्त्वा मा इत्यादेशौ स्तः ।

श्रीशस्त्वाऽवतु मापीह दत्तात्ते मेऽपि शर्म सः ।
स्वामी ते मेऽपि स हरिः, पातु वामपि नौ विभुः ॥१॥
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः ।
सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योऽत्र वः स नः ॥२॥

तेमयौ-प्रथमान्तम्, एकवचनस्य-षष्ठ्यन्तम् । श्रीश इति । श्रिया ईशः-श्रीशः=विष्णुः, त्वा=त्वाम्, इह=संसारे, अवतु=रक्षतु । मा=माम्, अपि-इह-संसारे अवतु । अत्र द्वितीयैकवचनान्तयोर्युष्मदस्मदोस्त्वामौ द्वितीयाया इति त्वामाऽऽदेशौ । सः=श्रीशो विष्णुः-ते=तुभ्य, मे=मह्यम्-अपि शर्म=सुखं दत्तात्=ददातु । अत्र तुभ्यमित्यस्य मह्यमित्यस्य च चतुर्थ्यन्तस्य स्थाने 'तेमयावेकवचनस्ये'ति ते मे आदेशौ । सः=जगत्प्रसिद्धो हरिः-ते=तव, मे=मम अपि-स्वामी=प्रभुः । अत्र षष्ठ्येकवचनान्तयोः तव ममेत्यनयोः स्थाने ते मे आदेशौ ।

द्विवचनान्तानुदाहरति-पात्विति । विभुः=व्यापको हरिः-वां=युवां नौ=आवाम्-अपि पातु=रक्षतु । ईशः=प्रभुर्हरिः-वां=युवाभ्यां, नौ=आवाभ्यां सुखं=शर्म-ददातु=प्रयच्छतु । हरिः-वां=युवयोः, नौ=आवयोः-अपि-पतिः=स्वामी, रक्षक इति यावत् । अत्र षष्ठीचतुर्थीद्वितीयाद्विवचनान्तयोर्युष्मदस्मदोर्वांनावादेशौ । बहुवचनान्तानुदाहरति स इति ।

सः=हरिः-वः=युष्मान्, नः=अस्मान्-अव्यात्=रक्षतु । वः=युष्म-

१ पद से परे अपाद के आदि में स्थित जो षष्ठीचतुर्थ्येकवचनान्त युष्मद् अस्मद् शब्द उनको 'ते' 'मे' आदेश होय ।

२ पद से परे अपाद के आदि में स्थित जो द्वितीयैकवचनान्त युष्मद् अस्मद् शब्द उसको 'त्वा' 'मा' आदेश होय ।

*समानवाक्ये युष्मदस्मदादेशा वक्तव्याः । *एकतिङ् वाक्यम्* । तेनेह न । ओदनं पच तव भविष्यति । इह तु स्यादेव । शालीनां ते ओदनं दास्यामि । *एते वान्नावादय आदेशा अनन्वादेशे वा वक्तव्याः । अन्वादेशे तु नित्यं स्युः । धाता ते भक्तोऽस्ति. धाता तव भक्तोऽस्ति वा । तस्मै ते नम इत्येव ॥ सुपात्-सुपाद् । सुपादौ ॥

पादः पत् । ६ । ४ । १३० ॥

पाच्छब्दान्तं यदङ्गं भं तदवयवस्य पाच्छब्दस्य पदादेशः । स्यात् । सुपदः । सुपदा । सुपाद्भ्याम् ॥ अग्निमत्-अग्निमद् । अग्निमथौ । अग्निमथः ॥

---

भ्यं, नः=अस्मभ्यं, शिवं=कल्याणं दधात=प्रयच्छतु । अत्र=संसारे, सः= हरिः वः=युष्माकं, नः=अस्माकं-सेव्यः=पूजनीयः । शरणमिति यावत् । अत्र षष्ठीचतुर्थीद्वितीयाबहुवचनान्तयोर्युष्मदस्मदोर्वस्नसावादेशाविति श्लोकद्वयेन युष्मदस्मदादेशसङ्ग्रहः ।

एकतिङिति । एकतिङन्तघटितमित्यर्थः । एकतिङन्तार्थनिष्ठमुख्यविशेष्यतानिरूपितप्रकारताप्रयोजकत्वमेकवाक्यत्वमिति यावत् । एवञ्च ओदनं पचेत्यस्य तिङन्तद्वयघटितत्वेनैकवाक्यत्वाऽभावान्न तवेत्यस्य 'ते' आदेशः ।

अनन्वादेशे उदाहरति-धातेति । अन्वादेशे उदाहरति-तस्मै ते इति । सुष्ठु पादावस्य सुपात् । अग्निं मथ्नातीति-अग्निमत्=अरण्यादिना यज्ञेऽग्नेरुत्पापकः ।

---

१ समान वाक्यमें युष्मद् अस्मद् को उक्त आदेश हों । २ जो एकतिङन्तार्थमुख्यविशेष्यकबोधजनक हो वह वाक्य कहलाता है । ३ पूर्वोक्त जो वान् नौ आदि आदेश हैं वे अनन्वादेश में विकल्प से होंय । अन्वादेशमें तो नित्य ही हों ।

४ पाद्शब्दान्त जो भसंज्ञक अङ्ग, तदवयव जो पाद् शब्द उसको 'पद्' आदेश होय ।

१ 'एकवाक्ये' इति पाठान्तरम् ।

**अनिदितां हल उपधायाः क्ङिति । ६ । ४ । २४ ॥**[1]

हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः स्यात् किति ङिति च । नुम् । संयोगान्तस्य लोपः । नस्य कुत्वेन ङः । प्राङ् । प्राञ्चौ । प्राञ्चः ॥

**अचः । ६ । ४ । १३८ ॥**[2]

लुप्तनकारस्याऽञ्चतेर्भस्याऽकारस्य लोपः स्यात् ।

**चौ । ६ । ३ । १३८ ॥**[3]

लुप्ताऽकारनकारेऽञ्चतौ परे पूर्वस्याऽणो दीर्घः स्यात् । प्राचः । प्राचा । प्राग्भ्याम् ॥ प्रत्यङ् । प्रत्यञ्चौ । प्रतीचः । प्रत्यग्भ्याम् ॥ उदङ् । उदञ्चौ ॥

**उद ईत् । ६ । ४ । १३९ ॥**[4]

उच्छब्दात्परस्य लुप्तनकारस्याऽञ्चतेर्भस्याऽकारस्य ईत् स्यात् । उदीचः । उदीचा । उदग्भ्याम् ॥

**समः समि । ६ । ३ । ९३ ॥**[5]

**नुमिति ।** **नुम्**='उगिदचां सर्वनामस्थानेऽधातो'रित्यनेन नुम् । **लोपः**=चकारस्य संयोगान्तलोपः । **नस्य**=नुमो नकारस्य । **कुत्वेन**=क्विन्प्रत्ययस्येत्यनेन विहितेन कुत्वेन । प्रकर्षेण अञ्चतीति **प्राङ्**=प्राचीनः ।

**चौ**-सप्तम्यन्तम् । **उद ईति** । उदः पञ्चम्यन्तम् , ईत्-प्रथमान्तम् । 'अच' इत्यनुवर्तते, 'अल्लोपोऽन' इत्यत -अल्लोप इति च, 'भस्ये'त्यधिकृतं, तदाह-**भस्येति** । 'अच' इत्यस्यापवादः । उदञ्चतीत्युदङ् । **समः**-

१ हलन्त जो अनिदित् अङ्ग उसकी उपधा के नकार का लोप होय कित् ङित् परे रहते । २ लुप्त नकार जो अञ्चति उसके भसंज्ञक अकार का लोप हो ।

३ लुप्त हुआ है नकार व अकार जिसका ऐसा जो अञ्चति, वह परे रहते पूर्व अण् को दीर्घ हो । ४ उच्छब्द से परे जो लुप्तनकारक अञ्चति उसके भसंज्ञक अकार को ईकार हो । ५ वप्रत्ययान्त अञ्चति परे रहते सम् को समि आदेश हो ।

वप्रत्ययान्तेऽञ्चतौ परे [ समः सम्यादेशः स्यात् ] सम्यङ्। सम्यञ्चौ। समीचः। सम्यग्भ्याम्॥

**सहस्य सध्रिः । ६ । ३ । ९५ ॥**

तथा। [वप्रत्ययान्तेऽञ्चतौ परे सहस्य सध्र्यादेशः स्यात् ]। सध्र्यङ्॥

**तिरसस्तिर्यलोपे । ६ । ३ । ९४ ॥**

अलुप्ताकारेऽञ्चतौ वप्रत्ययान्ते परे तिरसस्तिर्यादेशः स्यात्। तिर्यङ्। तिर्यञ्चौ। तिरश्चः। तिर्यग्भ्याम्॥

**नाऽञ्चेः पूजायाम् । ६ । ४ । ३० ॥**

पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न स्यात्। प्राङ्। प्राञ्चौ। नलोपाऽभावादल्लोपो न। प्राञ्चः। प्राङ्भ्याम्। प्राङ्क्षु॥ एवं पूजार्थे प्रत्यङ्ङादयः। क्रुङ्। क्रुञ्चौ। क्रुङ्भ्याम्॥

षष्ठ्यन्तं, सध्रि-लुप्तप्रथमान्तम्। 'विष्वग्देवयो'रित्यत:-'अञ्चतावप्रत्यये'इत्यनुवर्त्तते। सहतमञ्चतीति सध्र्यङ्। सहाञ्चतीति सध्र्यङ्=मिश्रम्। **तिरस**-षष्ठ्यन्तं, तिरि-लुप्तप्रथमान्तम्, **अलोपे**-सप्तम्यन्तम्। न विद्यते लोपो यस्यासौ-अलोपः, तस्मिन्-अलोपे इति बहुव्रीहिः। अञ्चतिरन्यपदार्थः। अवयवद्वारको लोपः समुदाये उपचर्यते, इत्यत आह-अलुप्ताकारे इति।

'अनिदिता'मित्यत 'उपधाया' इति वर्त्ततेऽत आह-उपधाया इति। **अल्लोपो न**='अच' इति सूत्रेणाऽकारलोपो न। तत्र 'अच' इत्यनेन लुप्तनकारस्याञ्चतेरेव ग्रहणात्पूजायामञ्चतेर्नकारलोपाऽभावेनाऽच इत्यकारलोपविधेरप्राप्तेः।

**क्रुङिति**। क्रुञ्चे केवलात् ऋत्विगित्यादिना क्विन्। क्रुञ्चेर्नलोपाऽभावश्च

१ अप्रत्ययान्त अञ्चति परे रहते 'सह' को 'सध्रि' आदेश होता है।

२ लुप्त नहीं हुवा है अकार जिसका ऐसी वप्रत्ययान्त अञ्चति परे रहते तिरस् को तिरि आदेश हो।

३ पूजार्थक अञ्चति के उपधाभूत नकार का लोप नहीं हो।

पयोमुक्-पयोमुग्। पयोमुचौ । पयोमुग्भ्याम् । उगित्वान्नुमि-

**सान्तमहतः संयोगस्य ६ । ४ । १० ।**

सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्याद-सम्बुद्धौ सर्वनामस्थाने । महान् । महान्तौ । महान्तः । हे महन् । महद्भ्याम् ॥

**अत्वसन्तस्य चाऽधातोः ६ । ४ । १४ ॥**

अत्वन्तस्योपधाया दीर्घो धातुभिन्नाऽसन्तस्य चाऽसम्बुद्धौ सौ परे। उगित्वान्नुम् । धीमान् । धीमन्तौ । धीमन्तः । हे धीमन् । शसादौ

निपातनात् । क्रुङ्=क्रौञ्चपक्षी । अत्र चकारस्य संयोगान्तलोपः, नकारस्य क्विन्प्रत्ययस्येति कुत्वेन ङकार इति ध्येयम् ।

पयो मुञ्चतीति **पयोमुक्=मेघ** । **नुमि**='उगिदचां सर्वनामस्थानेऽधातो'रित्यनेन नुमि । **सान्तेति** लुप्तषष्ठीकं, **महतः** षष्ठ्यन्तं, **संयोगस्य**-षष्ठ्यन्तम् । सान्तेति संयोगस्य विशेषणं, तदाह **सान्तसंयोगस्येति** ।

**महानिति** । मह्यते पूज्यते इति महान् । 'वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्चे'त्युणादिसूत्रेण पूजार्थकान्महधातोः कर्मण्यतिप्रत्ययो निपात्यते, शतृवद्-तिदेशश्च । तेन उगित्वान्नुमि सान्तमहत इति दीर्घे हल्ङ्यादिलोपे संयोगान्तलोपे च महानिति सिद्धम् । **अत्वेति** । अतु इति लुप्तषष्ठ्यन्तम्, **अस-न्तस्य**-षष्ठ्यन्तम्, **च**-अव्ययपदम्, **अधातोः**-षष्ठ्यन्तम् । अत्वित्यस्याङ्गविशेषणतया तदन्तविधिः, अधातोरिति चाऽसन्तविशेषणम् । नोपधाया इत्यत उपधाया इति, सर्वनामस्थाने चाऽसम्बुद्धाविन्यतोऽसम्बुद्धाविति, ढ्रलोपे इत्यतो दीर्घ इति, सौ चेत्यतः साविति चानुवर्त्तते, तदाह-**अत्वसन्तस्येति** । प्रशस्ता धीरस्त्यस्य **धीमान्** । धीमत्-स इत्यत्र परं, कृताकृत-

१ सान्त जो सयोग और महत्शब्द का जो नकार उसकी उपधा को दीर्घ होय सम्बुद्धिभिन्न सर्वनामस्थान परे रहते ।

२ अत्वन्त की उपधा को दीर्घ होय, और धातु भिन्न जो असन्त उसकी उपधा को भी दीर्घ होय सम्बुद्धिभिन्न सु परे रहते ।

महद्वत् ॥ भातेर्डवतुः । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । भवान् । भवन्तौ । भवन्तः । शत्रन्तस्य—भवन् ॥

## [1]उभे अभ्यस्तम् ६ । १ । ५ ।

षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते उभे समुदिते अभ्यस्तसंज्ञे स्तः ॥

## [2]नाभ्यस्ताच्छतुः ७ । १ । ७८ ॥

अभ्यस्तात्परस्य शतुर्नुम् न स्यात् । ददत्, ददद् । ददतौ । ददतः ॥

## [3]जक्षित्यादयः षट् ६ । १ । ६ ॥

षड् धातवोऽन्ये जक्षितिश्च सप्तम एते अभ्यस्तसञ्ज्ञाः स्युः । जक्षत्—जक्षद् । जक्षतौ । जक्षतः । एवं जाग्रत् । दरिद्रत् । शासत्।

प्रसङ्गितया नित्यञ्च 'उगिदचा'मिति नुमं बाधित्वा वचनसामर्थ्यात्पूर्वमत्व-सन्तस्येति दीर्घः, अन्यथा पूर्वं नुमि अत्वन्तत्वाऽभावाद्दीर्घविधानं व्यर्थं स्यात् । ततश्च नुमि हल्ङ्यादिलोपे संयोगान्तलोपे च धीमानिति सिद्धम् ।

**भवानिति** । डवतुप्रत्ययस्योणादितया कृत्प्रत्ययावधित्वादिप्रत्ययबहिर्भू-तत्वेन तस्मिन्परतः पूर्वस्य भत्वाऽभावेन टेरिति टिलोपस्याऽप्राप्तावपि डित्त्व-सामर्थ्यादेव अभस्यापि टेर्लोपेन भवच्छब्दस्य निष्पत्तावुगित्वान्नुमि अत्व-सन्तस्येति दीर्घे हल्ङ्यादिलोपे संयोगादिलोपे च भवानिति सिद्धम् । भव-तीति **भवन्** । अत्र शतृप्रत्ययान्तस्य भवच्छब्दस्यात्वन्तत्वाभावादत्वसन्त-स्येति दीर्घाऽभावेन भवन् भवन्तौ भवन्त इत्येवमेव रूपाणीत्याशयः ।

ददातीति ददत्=दानं कुर्वन् । षड्धातवः=जागृ—दरिद्रा—शासु-चकासृ—दीधीङ्—वेवीङ् षड् धातवः । गोपायतीति गुप्=रक्षकः ।

१ षाष्ठद्वित्वप्रकरण में जो दो विधान किए हैं वे दोनों समुदित अभ्यस्त संज्ञक होंय ।

२ अभ्यस्त से परे जो शतृ उसको नुम् नहीं होय ।

३ जागृ आदि छ धातु और जक्षिति, इन सात की अभ्यस्त संज्ञा होय ।

चकासत् ॥ गुप्-गुब् । गुपौ । गुपः । गुब्भ्याम् ॥

**त्यदादिषु दृशोऽनालोचने कञ्च । ३ । २ । ६० ॥**

त्यदादिषूपपदेष्वज्ञानार्थाद् दृशेः कञ् स्याच्चात् क्विन् ॥[1]

**आ सर्वनाम्नः । ६ । ३ । ९१ ॥**

सर्वनाम्न आकारोऽन्तादेशः स्याद् दृग्दृशवतुषु । तादृक्-तादृग् । तादृशौ । तादृशः । तादृग्भ्याम् । व्रश्चेति षः । जश्त्वचर्त्वे । विट्-विड् । विशौ । विशः । विड्भ्याम् ॥[2]

**नशेर्वा । ८ । २ । ६३ ॥**

नशेः कवर्गोऽन्तादेशो वा स्यात् पदान्ते । नक्-नग्, नट्-नड् । नशौ । नशः । नग्भ्याम्, नड्भ्याम् ॥[3]

**स्पृशोऽनुदके क्विन् । ३ । २ । ५८ ॥**

अनुदके सुप्युपपदे स्पृशेः क्विन् स्यात् । घृतस्पृक्-घृतस्पृग् ।[4]

'गुपू रक्षणे'-क्विप् । वैकल्पिकत्वादायप्रत्ययाऽभावः ।

**आ सर्वेति** । 'आ'-इति लुप्तप्रथमान्त, सर्वनाम्नः षष्ठ्यन्तम् । **तादृगिति** । तदुपपदात्-दृश्-धातोः क्विनि तल्लोपे'आ सर्वनाम्न' इति तदो दकारस्याकारे दीर्घे कृदन्तत्वात्प्रातिपदिकत्वेन सुविभक्तौ हल्ङ्यादिलोपे कुत्वस्याऽसिद्धत्वात् व्रश्चेति षत्वे जश्त्वेन डकारे क्विन्प्रत्ययस्येति कुत्वे वावसाने इति चर्त्वविकल्पे च तादृक् तादृगिति रूपम् । स इव दृश्यते, तमिव च य पश्यन्ति जनाः स-तादृक् । **विडिति** । व्रश्चेति षत्वे, जश्त्वे चर्वे हल्ङ्यादिलोपे च विडिति सिद्धम् ।

नश्यतीति-नक् । **अनुदके**=उदकशब्दभिन्ने सुबन्ते । घृत स्पृशतीति

१ त्यदादि उपपद रहते अज्ञानार्थक दृश धातु से कञ् प्रत्यय होय, चकार से क्विन् भी होय । २ सर्वनाम को आकार अन्तादेश होय दृग् दृश् वतु परे रहते।

३ नश् को कवर्ग अन्तादेश होय विकल्प करके पदान्त में ।

४ उदकभिन्न सुबन्त उपपद रहते स्पृश् धातु से क्विन् प्रत्यय होय ।

घृतस्पृशौ । घृतस्पृशः ॥ दधृक्-दधृग् । दधृषौ । दधृषः । दधृग्भ्याम् । रत्नमुट्--रत्नमुड् । रत्नमुषौ । रत्नमुड्भ्याम् ॥ षट्, षड् । षड्भिः । षड्भ्यः २ । षण्णाम् । षट्सु ॥ रुत्वं प्रति षत्वस्याऽसिद्धत्वात्ससजुषोरिति रुत्वम् ॥

**र्वोरुपधाया दीर्घ इकः । ८ । २ । ७६ ॥**

रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात् पदान्ते । पिपठीः । पिपठिषौ । पिपठीर्भ्याम् ॥

**नुम्विसर्जनीयशर्व्यवायेऽपि । ८ । ३ । ५८ ॥**

एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः स्यात् । ष्टुत्वेन पूर्वस्य षः । पिपठीष्षु-पिपठीःषु ॥ चिकीः । चिकीर्षौ ।

घृतस्पृक् । **दधृगिति** । 'ञिधृषा प्रागल्भ्ये' इत्यस्मात् ऋत्विगित्यादिना क्विन् । द्वित्वञ्च निपातनात् । अभ्यासकार्यम् । प्रातिपदिकत्वात्स्वाद्युत्पत्तिः । दधृष्-स्-इत्यत्र जश्त्वं प्रति क्विन्प्रत्ययस्येति कुत्वस्याऽसिद्धत्वात्पूर्वं झलां जशोऽन्ते इति जश्त्वेन डः, तस्य क्विन्प्रत्ययस्येति कुत्वेन ग, तस्य चर्त्वेन क इति प्रक्रिया । **दधृक्**=धृष्ट प्रगल्भश्च । रत्नानि मुष्णाति=चोरयतीति **रत्नमुट्** । **षडिति**-षट्शब्दो नित्यं बहुवचनान्तः । जश्शसोः षड्भ्यो लुगिति लुक् । जश्त्वचर्त्वे । षष्-आमित्यत्र षट्चतुर्भ्यश्चेति नुट् । अनामिति पर्युदासात्ष्टुत्वनिषेधाऽभावे ष्टुना ष्टुरिति ष्टुत्वेन णत्वे स्वादिष्विति पूर्वस्य पदसंज्ञायां पदान्तत्वाज्जश्त्वेन डकारे प्रत्यये भाषायामिति नित्यमनुनासिके-षण्णामिति सिद्धम् । **पिपठीरिति** । पठितुमिच्छति-पिपठिषति, पिपठिषति-**पिपठीः**=पठनाभिलाषी ।

**पिपठीष्षु इति** । 'वा शरी'ति वा विसर्गः ।

कर्तुमिच्छति चिकीर्षति, चिकीर्षतीति-**चिकीः** । चिकीर्ष्-स् इत्यत्र

१ रेफ वान्त जो धातु उसकी उपधाभूत जो इक् उसको दीर्घ होय पदान्त में ।

२ नुम् विसर्जनीय शर् इनके प्रत्येक के व्यवधान में भी इण् कवर्ग से परे सकार को मूर्धन्य आदेश हो ।

चिकीर्भ्याम् । चिकीर्षु ॥ विद्वान् । विद्वांसौ । हे विद्वन् ॥

**वसोः सम्प्रसारणम् । ६ । ४ । १३१ ॥**[1]

वस्वन्तस्य भस्य सम्प्रसारणं स्यात् । विदुषः । वसुस्रंस्विति दः। विद्वद्भ्याम् ॥

**पुंसोऽसुङ् । ७ । १ । ८९ ॥**[2]

सर्वनामस्थाने विवक्षिते पुंसोऽसुङ् स्यात् । पुमान् । हे पुमन् । पुमांसौ । पुंसः । पुम्भ्याम् । पुंसु ॥ ऋदुशनेत्यनङ् । उशना । उशनसौ । * **अस्य सम्बुद्धौ वाऽनङ् नलोपश्च वा वाच्यः ।**[3] हे उशन, हे उशनन्, हे उशनः । हे उशनसौ । उशनोभ्याम् । उशनस्सु ॥ अनेहाः । अनेहसौ । हे अनेहः ॥ वेधाः । वेधसौ । हे वेधः । वेधोभ्याम् ॥

---

हल्ङ्यादिलोपे संयोगान्तलोपं प्रति षत्वस्यासिद्धतया सकारबुद्ध्या 'रात्सस्ये'ति सकारस्य सयोगान्तलोपे रेफस्य विसर्गे च 'चिकीः'इति सिद्धम् । **चिकीर्भ्यामिति** । अत्र भ्यामि परतः पूर्वस्य स्वादिष्विति पदत्वात्सकारस्य संयोगान्तलोपे चिकीर्भ्यामिति सिद्धम् । **चिकीर्षु इति** । चिकीष्-सु इत्यत्र सकारस्य'रात्सस्ये'ति नियमात्संयोगान्तलोपे 'चिकीर्षु' इति सिद्धम् । रेफस्य विसर्गस्तु न भवति, रोः सुपीति सूत्रेण सप्तमीबहुवचने रोरेव रेफस्य विसर्गो नान्यरेफस्येति नियमात् । **उशना**=शुक्र. । 'उशना भार्गवः कवि'रित्यमरः ।

**अस्येति** । **अस्य**=उशनस् शब्दस्य ।

**अनेहा**=कालः । 'कालो दिष्टोऽप्यनेहाऽपी'त्यमरः । अत्वसन्तस्येति

१ वस्वन्त जो भसञ्ज्ञक अङ्ग उसको सम्प्रसारण हो ।

२ सर्वनामस्थान की विवक्षा में पुम्स् शब्द को असुङ् आदेश हो ।

३ उशनस् शब्द को सम्बोधन में विकल्प से अनङ् आदे होय और नलोप भी होय विकल्प करके ।

[1]अदस औ सुलोपश्च । ७ । २ । १०७ ॥

अदस औत्स्यात्सौ परे सुलोपश्च । तदोरिति सः । असौ । त्यदाद्यत्वम् । पररूपत्वम् । वृद्धिः ॥

[2]अदसोऽसेर्दादु दो मः । ८ । २ । ८० ॥

अदसोऽसान्तस्य दात्परस्य उदूतौ स्तो दस्य मश्च । आन्तरतम्याद्ध्रस्वस्य उः, दीर्घस्य ऊः । अमू । जसः शी । गुणः ॥

[3]एत ईद्बहुवचने । ८ । २ । ८१ ॥

अदसो दात्परस्यैत ईदस्य च मो बह्वर्थोक्तौ । अमी । 'पूर्वत्रासिद्ध'मिति विभक्तिकार्यं प्राक्, पश्चादुत्वमत्वे । अमुम् । अमू । अमून् । मुत्वे कृते घिसंज्ञायां नाभावः ॥

[4]न मु ने । ८ । २ । ३ ॥

नाभावे कर्तव्ये कृते च मुभावो नाऽसिद्धः । अमुना । अमूभ्याम् ३ । अमीभिः । अमुष्मै । अमीभ्यः २ । अमुष्मात् । अमुष्य । अमुयोः २ । अमीषाम् । अमुष्मिन् । अमीषु ॥

इति हलन्तपुंल्लिङ्गप्रकरणम् ॥

---

दीर्घ. । वेधाः=प्रजापतिः । न मु ने इति । न-अव्यय पद, मु=प्रथमान्तम्, ने-सप्तम्यन्तम् । 'ने' इति विषयसप्तमीत्याशयेनाह-कर्त्तव्ये इति । अन्यथा घेः परत्वाऽभावेन नाभावो न स्यादिति भावः । नन्वेवमपि कृते नाभावे 'सुपि चे'ति दीर्घः स्यात्, दीर्घं प्रति मुत्वस्याऽसिद्धत्वादत आह-कृते चेति। एतच्च 'ने' इत्यस्याऽऽवृत्त्या लभ्यते । एकत्र च ने इति विषयसप्तमी, अपरत्र च परसप्तमीति च विवेक. । * इति हलन्ताः पुँल्लिङ्गाः *

१ अदस् शब्द के अन्त्य अल् को औकारादेश हो सु परे रहते, और सु का लोप हो । २ सान्तभिन्न अदस् शब्द के दकार से परे ह्रस्व को उ, दीर्घ को ऊ आदेश होता है और दकार को मकार आदेश होता है । ३ अदस् के दकार से परे जो एकार उसको ईकार आदेश होय और दकार को मकार आदेश बहुवचन में। ४ नाभाव यदि करना हो या कर लिया हो तो भी मुभाव असिद्ध नहीं होता है।

# अथ हलन्तस्त्रीलिङ्गप्रकरणम् ।

**[1] नहो धः । ८ । २ । ३४ ॥**

नहो हस्य धः स्याज्झलि पदान्ते च ॥

**[2] नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ । ६ । ३ । ११६ ॥**

क्विबन्तेष्वेषु परेषु पूर्वपदस्य दीर्घः । उपानत्, उपानद् । उपानहौ । उपानत्सु । क्विन्नन्तत्वात् कुत्वेन घः । उष्णिक्, उष्णिग् । उष्णिहौ । उष्णिहः । उष्णिग्भ्याम् । उष्णिक्षु । द्यौः । दिवौ । दिवः । द्युभ्याम् । द्युषु । गीः । गिरौ । गिरः । एवं पूः । चतस्रः २ । चतसृणाम् । का । के । काः । सर्वावत् ॥

**[3] यः सौ । ७ । २ । ११० ॥**

इदमो दस्य यः स्यात्सौ । इयम् । त्यदाद्यत्वम् । पररूपत्वम् । टाप् । दश्चेति मः । इमे । इमाः । इमाम् । अनया । हलि लोपः । आभ्याम् । आभिः । अस्यै । अस्याः २ । अनयोः २ । आसाम् । अस्याम् । आसु । त्यदाद्यत्वम् । टाप् । स्या । त्ये । त्याः । एवं तद्, यद्,

हस्येति । 'हो ढ' इत्यतो 'ह' इत्यनुवृत्तेरलोऽन्त्यपरिभाषया वा 'न हो हस्ये'ति लभ्यते । झलीति । झलि परतः पदान्ते वा विद्यमानस्येत्यर्थः । उपानदिति । उपपूर्वान्नहेः सम्पदादित्वात्क्विपि 'नहिवृती'त्यादिना दीर्घः । सोर्हल्ङ्यादिलोपः, धत्व जश्त्वचर्त्वे । उपानत्=पादत्राणम् । उष्णिगिति । उत्पूर्वात्स्णिहे. प्रीत्यर्थकादृत्विगादिना क्विन् । निपातनाद्दलोपषत्वे । क्विन्नन्तत्वात्कुत्वम् हस्य घ जश्त्वचर्त्वे–उष्णिक्=छन्दोविशेष । गीः–वाणी । गीर्वाग्वाणी सरस्वती'त्यमरः । पूः=नगरी । 'पूः स्त्री पुरीनगर्यौ वे'त्यमरः ।

१ नह् धातु के हकार को धकार आदेश हो झल् परे रहने और पदान्त में ।

२ क्विबन्त नहि वृति-वृषि आदि परे रहते पूर्वपद को दीर्घ हो ।

३ इदम् शब्द के दकार को यकार आदेश हो सु परे रहते (स्त्रीलिङ्ग में) ।

एतद् । वाक्, वाग् । वाचौ । वाचः । वाग्भ्याम् । वाक्षु ॥ अप्शब्दो नित्यं बहुवचनान्तः । 'अप्तृ'न्निति दीर्घः । आपः । अपः ।

**अपो भि । ७ । ४ । ४८ ॥**

अपस्तकारः स्याद्भादौ प्रत्यये परे[1] । अद्भिः । अद्भ्यः । अद्भ्यः । अपाम् । अप्सु । दिक्—दिग् । दिशौ । दिशः । दिग्भ्याम् । त्यदादिष्विति दृशेः क्विन्विधानादन्यत्रापि कुत्वम् । दृक्, दृग् । दृशौ । दृशः । दृग्भ्याम् । त्विट्, त्विड् । त्विषौ । त्विषः । त्विड्भ्याम् । त्विट्त्सु । त्विट्सु । 'ससजुषोरु'रिति रुत्वम् । सजूः । सजुषौ । सजूर्भ्याम् ॥ आशीः । आशिषौ । आशिषः । आशीर्भ्याम् । असौ । उत्वमत्वे । अमू । अमूः । अमुया । अमूभ्याम् ३ । अमूभिः । अमुष्यै । अमूभ्यः २ । अमुष्याः २ । अमुयोः २ । अमूषाम् । अमुष्याम् । अमूषु ॥

इति लघुकौमुद्यां हलन्तस्त्रीलिङ्गप्रकरणम् ॥

आप इति । 'आपः स्त्री भूम्नि वार्वारी'त्यमरः ।

**दिगिति** । क्विन्नन्तत्वात्क्विन्प्रत्ययस्येति प्राप्तस्य कुत्वस्यासिद्धत्वाद्व्रश्चेति षः । ततो जश्त्वेन डः । ततः कुत्वेन ग. । तस्य चर्त्वेन कः । **अन्यत्रापि**= त्यदाद्युपपदत्वाऽभावेऽपि क्विन्प्रत्ययस्येत्यस्य—क्विन्प्रत्ययो यस्मात्कदाचित् दृष्टस्तस्य कवर्गोऽन्तादेश इत्यर्थेन दृगस्त्यदादावुपपदे तादृगित्यादौ क्विन्प्रत्ययस्य दृष्टतया केवलादपि दृशेः ( क्विनोऽभावेऽपि ) कुत्वं भवत्येवेत्याशयः । **सजूरिति** । सह जुषते इति—सजूः=सखी ।

* इति हलन्ताः स्त्रीलिङ्गाः *

---

१ अप् शब्द को तकार अन्तादेश हो भकारादि प्रत्यय परे रहते ।

# अथ हलन्त-नपुंसकलिंगप्रकरणम् ।

स्वमोर्लुक् । दत्वम् । स्वनडुत्, स्वनडुद् । स्वनडुही । चतुरनडुहोरित्याम् । स्वनड्वांहि । पुनस्तद्वत् । शेषं पुंवत् । वाः । वारी । वारि । वार्भ्याम् । चत्वारि । किम् । के । कानि । इदम् । इमे । इमानि ॥ *अन्वादेशे[1] नपुंसके वा एनद्वक्तव्यः * । एनत् । एनद् । एने । एनानि । एनेन । एनयोः २ । अहः । विभाषा ङिश्योः । अह्नी-अहनी । अहानि ॥

**अहन्[2] । ८ । २ । ६८ ॥**

'अह'न्नित्यस्य रुः स्यात् पदान्ते । अहोभ्याम् । दण्डि । दण्डिनी । दण्डीनि । दण्डिना । दण्डिभ्याम् । सुपथि । टेर्लोपः । सुपथी । सुपन्थानि । ऊर्क्, ऊर्ग् । ऊर्जी । ऊन्र्जि । नरजानां

**स्वनडुदिति** । सुष्ठु अनड्वाहो यस्मिन् कुलेयाने वा तत् स्वनडुत् कुलम्, यानं वा । 'जश्शसोःशि'इति विहितस्यादेशस्य 'शि सर्वनामस्थान'मिति सर्वनामस्थानसंज्ञकतया 'चतुरनडुहो'रित्यामि यणि 'नपुंसकस्य झलच' इति नुमि च 'स्वनड्वांही'ति सिद्धम् । **वाः**=जलम् । 'आपः स्त्री भूम्नि वार्वारि सलिलं कमल जल'मित्यमरः । **वारीति** । 'वार् इ' इत्यत्र अझलन्तत्वान्न नुम् । वारि । **किमिति** । किम्शब्दात्स्वमोः 'स्वमोर्नपुंसका'दिति लुकि लुका लुप्तत्वान्न लुमताऽङ्गस्येति प्रत्ययलक्षणनिषेधेन विभक्तिपरत्वाऽभावात्किमः क इति कादेशो न । **अहरिति** । अहन्-शब्दात्स्वमोः 'स्वमोर्नपुंसका'दिति लुकि 'रोऽसुपी'ति अह्नो रेफादेशे विसर्गः । दण्डोऽस्त्यस्य तत्-दण्डि कुलम् । सुष्ठु पन्था यस्मिन् तत् सुपथि नगर, वनञ्च । ऊर्क्=बलम् ।

ऊर्ज् शब्दाज्जश्शसोः श्यादेशे सर्वनामस्थानसंज्ञायां 'नपुंसकस्य झलच' इति नुमि-'ऊन्र्जि' इति सिध्यति ।

१ अन्वादेश में एतद् शब्द को विकल्प से एनत् आदेश हो नपुंसकलिङ्ग में ।

२ अहन् शब्द को रु आदेश हो पदान्त में ।

संयोगः ॥ तत् । ते । तानि ॥ यत् । ये । यानि ॥ एतत् । एते । एतानि ॥ गवाक्, गवाग् । गोची । गवाञ्चि । पुनस्तद्वत् । गोचा । गवाग्भ्याम् ॥ शकृत् । शकृती । शकृन्ति । ददत् ददती ।

## वा नपुंसकस्य । ७ । १ । ७९ ॥

अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य वा नुम् स्यात् सर्वनामस्थाने परे । ददन्ति–ददति ॥ तुदत् ॥

## आच्छीनद्योर्नुम् । ७ । १ । ८० ॥

गवागिति । गवाक् ग्, गो अक्–ग् । गोऽक्–ग् । गवाङ्, गो अङ्, गोऽङ् ॥ गोची । गवाञ्ची । गो अञ्ची । गोञ्ची ॥ गवाञ्चि, गोऽञ्चि, गोऽञ्चि ॥ पुनस्तद्वत् । गोचा । गवाञ्चा, गो अञ्चा, गोञ्चा ॥ गवाग्भ्यां, गो अग्भ्या, गोग्भ्याम् । गवाङ्भ्यां, गो अङ्भ्या, गोऽङ्भ्याम् । गवाग्भि, गोअग्भिः, गोऽग्भिः । गवाङ्भिः, गोअङ्भिः, गोऽङ्भिः ॥ गोचे । गवाञ्चे, गो अञ्चे, गोञ्चे ॥ भ्यामि पूर्ववत् । गवाग्भ्यः, गोऽग्भ्यः, गोग्भ्यः । गवाङ्भ्यः, गो-अङ्भ्यः गोऽङ्भ्यः । गोऽचः । गवाञ्चः, गोऽञ्च., गोञ्च· ॥ भ्यामादौ पूर्ववत् ॥ ङसि पूर्ववत् ॥ गोचोः, गवाञ्चो., गोऽञ्चो, गोञ्चोः ॥ गोऽचां, गवाञ्चा, गोअञ्चाम्, गोऽञ्चाम् ॥ गोऽचि । गवाञ्चि, गोअञ्चि, गोऽञ्चि ॥ गवाक्षु, गोअक्षु, गोक्षु । गवाङ्क्षु, गोअङ्क्षु, गोऽङ्क्षु । गवाङ्षु, गोअङ्षु, गोङ्षु इति १०९ रूपाणि । तदुक्तं

'गवाकशब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः ।
असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ॥ १ ॥
स्वम्सुप्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसोः ।
चत्वारि शेषे दशके रूपाणीति विभावय' ॥ २ ॥ इति ।

शकृदिति । शकृत्–मलम् ।

---

१ अभ्यस्त से पर जो शतृ प्रत्यय तदन्त जो क्लीब अङ्ग उसको विकल्प से नुम् होय सर्वनामस्थान परे रहते ।

२ अवर्णान्त अङ्ग से परे जो शतृ प्रत्यय का अवयव, तदन्त जो शब्द स्वरूप उसको नुम् हो विकल्प से शी (प्रत्यय) और नदीसंज्ञक परे रहते ।

अवर्णान्तादङ्गात्परो यः शतुरवयवस्तदन्तस्य नुम् वा स्या-च्छीनद्योः परतः। तुदन्ती–तुदती। तुदन्ति॥

**शप्श्यनोर्नित्यम्। ७। १। ८१॥**

शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् स्याच्छी-नद्योः परतः। पचन्ती। पचन्ति॥ दीव्यत्। दीव्यन्ती। दीव्य-न्ति॥ धनुः। धनुषी। सान्तेति दीर्घः। नुम्विसर्जनीयेति षः। धनूंषि। धनुषा। धनुर्भ्याम्॥ एवं चक्षुर्हविरादयः॥ पयः। पयसी। पयांसि। पयसा। पयोभ्याम्॥ सुपुम्। सुपुंसी। सुपुमांसि॥ अदः। विभक्तिकार्यम्। उत्वमत्वे। अमू। अमूनि। शेषं पुंवत्॥

॥ इति हलन्तनपुंसकलिङ्गप्रकरणम्॥

## अथाऽव्ययप्रकरणम्।

**स्वरादिनिपातमव्ययम्। १। १। ३७॥**

स्वरादयो निपाताश्चाऽव्ययसंज्ञाः स्युः। स्वर्। अन्तर्।

सुपुमिति। शोभनाः पुमांसो यस्मिन् कुलं तत्–सुपुम्–कुलम्।

॥ इति हलन्ता नपुंसकलिङ्गाः॥

**स्वर्**–स्वर्गे परलोके च। **अन्तर्**–मध्ये। **प्रातर्**–प्रभाते। **पुनर्**–अप्रथमे विशेषे च। **सनुतर्**–अन्तर्धाने। स्वराद्याः पञ्च रेफान्ताः,तेन स्वर्याति प्रातरत्रेत्यादौ हशि चेत्याद्युत्वं न। तत्र रोरित्युकारानुबन्धग्रहणात्

१ शप् श्यन् सम्बन्धी अकार से परे जो शतृ का अवयव तदन्त जो शब्द-स्वरूप उसको नित्य नुम् हो शी और नदी परे रहते। २ स्वरादि गण-पठित जो शब्द और निपातसंज्ञक जो शब्द उनकी अव्यय संज्ञा हो।

प्रातर् । पुनर् । सनुतर् । उच्चैस् । नीचैस् । शनैस् । ऋधक् । ऋते । युगपत् । आरात् । पृथक् । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । समया । निकषा । स्वयम् । वृथा । नक्तम् । नञ् । हेतौ । इद्धा । अद्धा । सामि । वत् । ब्राह्मणवत् । क्षत्रियवत् । सना । सनत् । सनात् । उपधा । तिरस् । अन्तरा । अन्तरेण । ज्योक् । कम् । शम् । सहसा । विना । नाना । स्वस्ति । स्वधा । अलम् । वषट् । श्रौषट् । वौषट् । अन्यत् ।

**उच्चैस्** महति । **नीचैस्**-अल्पे । **शनैस्**-क्रियामान्द्ये । **ऋधक्** सत्ये । वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये । **ऋते**-वर्जने । **युगपत्**-एककाले । **आरात्**-दूर-समीपयोः । **पृथक्**-भिन्ने । **ह्यस्** अतीतेऽह्नि । **श्वस्**-आगामिदिने । **दिवा**-दिने । **रात्रौ**-निशि । **सायम्**-निशामुखे । प्रदोषे । **चिरम्**-बहुकाले । **मनाक्**-अल्पे । **ईषत्**-अल्पे । **जोषम्**-सुखे मौने च । **तूष्णीम्**-मौने । **बहिस्**-**अवस्**-इमौ बाह्ये । **समया**-समीपे मध्ये च । **निकषा**-समीपे । **स्वयम्**-आत्मना इत्यर्थे । **वृथा**-व्यर्थे । **नक्तम्**-रात्रौ । **नञ्**-निषेधे ।

'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥'

**हेतौ**-निमित्ते । **इद्धा**-प्राकाश्ये । **अद्धा**-स्फुटावधारणयोः, तत्त्वातिशययोरित्यन्ये । **सामि**-अर्द्धे निन्दिते च । **वदिति** । 'तेन तुल्य'मित्यतीदिविहितो वतिप्रत्ययो गृह्यते । प्रत्ययग्रहणे च तदन्तग्रहणमित्याशयेनोदाहरति-**ब्राह्मणवदिति** । **सना** । **सनत्** **सनात्**-एतत्त्रयं नित्ये । **उपधा**-भेदे । **तिरस्**-अन्तर्धाने तिर्यगर्थे परिभवे च । **अन्तरा**-मध्ये विनाऽर्थे च । **अन्तरेण**-वर्जने । **ज्योक्**-कालाधिक्ये शीघ्रे प्रश्ने इदानीमर्थे च । **कम्**-वारिमूर्धनिन्दासुखेषु । **शम्**-सुखे । **सहसा**-आकस्मिकाऽविमर्शयोः । **विना**-वर्जने । **नाना**-अनेकविनार्थयोः । **स्वस्ति**-मङ्गले । **स्वधा**-पितृहविर्दाने । **अलम्**-भूषणपर्याप्तिशक्तिवारणनिषेधेषु । **वषट्** **श्रौषट्** **वौषट्**-एतत्त्रयं देवहविर्दाने ।

अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मृषा । मिथ्या । मुधा । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रबाहुकम् । (प्रवाहिका) । आर्यहलम् । अभीक्ष्णम् । साकम् । साधम् । नमस् । हिरुक । धिक् । अथ । अम् । आम् । प्रताम् । प्रशाम् । प्रतान् । मा । माङ् । आकृतिगणोऽयम् ।

अन्यत्-अन्यार्थे । अस्ति-सत्तायाम् । उपांशु-अप्रकाशोच्चारणे रहस्ये च । क्षमा-क्षान्तौ । विहायसा-आकाशे । दोषा-रात्रौ । मृषा मिथ्या वितथे । मुधा-व्यर्थे । पुरा-अविरते, चिरातीते, भविष्यदासन्ने च । मिथो मिथस्-इति द्वय रहसि, सहार्थे च । प्रायस्-बाहुल्ये । मुहुस्-पुनरर्थे । प्रबाहुकं-समकाले ऊर्ध्वार्थे च । प्रबाहुकमित्यत्र प्रवाहिकेत्यपि कचित्पाठः । आर्य-हलम् बलात्कारे । केचित्तु-आर्येति प्रतिबन्ध, हलमिति निषेधेऽनुवादे चेत्ये-कमव्ययद्वयमिदमित्याहुः । अभीक्ष्णं-पौनःपुन्ये । साकम्-साधम्-इतिद्वयं सहार्थे । नमस्-नमस्कारे । हिरुक्-वर्जने । धिक्-निन्दायाम् भर्त्सने च । अथ मङ्गले प्रारम्भे च । अम्-शैघ्र्ये अल्पे च । आम्-अङ्गीकारे । प्रताम्-ग्लानौ । प्रशाम्-समानार्थे । प्रतान्-विस्तारे । अत्र प्रतानिति नान्तस्य पुनः पाठसामर्थ्यात्प्रताम् प्रशामित्यनयोर्मोनो धातोरिति नत्वं न । प्रशामित्यत्र प्रशानिति नान्तपाठस्त्वसाम्प्रदायिकः । मा-माङ्-एतौ निषेधे ।

आकृत्या स्वरूपेणैव गण्यते इति आकृतिगणः । एवञ्च एवञ्जातीयका अन्येऽपि स्वरादिगणे बोध्या.[1] । तथा हि-कामम्-यथेच्छमित्यर्थे (स्वाच्छन्द्ये) । प्रकामम्-अतिशये । भूयस्-पुनरर्थे । साम्प्रतम्-न्याय्ये । परम्-किन्त्वर्थे । साक्षात्-प्रत्यक्षे । साचि-तिर्यगर्थे । सत्यम्-अर्धाङ्गीकारे । मङ्क्षु आशु-इदं द्वय शैघ्र्ये । सम्वत्-वर्षे । अवश्यम्-निश्चये । सपदि-शैघ्र्ये । बलवत्-अतिशये । उषा-रात्रौ । ओम्-अङ्गीकारे ब्रह्मणि च । भूर्-पृथिव्याम् । भुवर्-अन्तरिक्षे । झटिति-झगिति तरसा-एते शैघ्र्ये । सुष्ठु-प्रशंसायाम् । दुष्ठु-निकृष्टे । सु-पूजायाम् । कु-निन्दायाम् ईषदर्थे च ।

१ स्वरादि आकृतिगण है । अर्थात् इस प्रकार के अन्यान्य शब्द भी शिष्ट प्रमाण से स्वरादि में जानना ॥

च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् । युगपत् । भूयस् । कूपत् । कुवित् । नेत् । चेत् । चण् । कच्चित् । यत्र । नह । हन्त । माकिः । माकिम् । नकिः । नकिम् । माङ् । नञ् । यावत् । तावत् । त्वै । द्वै । ( न्वै ) रै । श्रौषट् । वौषट् । स्वाहा । स्वधा । तुम् । तथाहि । खलु । किल । अथो । अथ । सुष्ठु । स्म । आदह ।

---

अञ्जसा-तत्त्वशीघ्रार्थयोः । मिथु-द्वावित्यर्थे । आराम्-विनाशे । स्थाने-युक्ते । वरम्-ईषदुत्कर्षे । सुदि-शुक्लपक्षे । वदि-कृष्णपक्षे । अनिशम्, नित्यं, सदा, अजस्रम्, सन्ततम्-एतत्पञ्चकं सातत्ये । आः-आश्चर्ये । इत्यादि ।

च-समुच्चयाऽन्वाचयेतरेतरयोगसमाहारेषु । 'वा स्याद्विकल्पोपमयोरिवार्थे च समुच्चये' । ह-प्रसिद्धौ । अह-पूजायाम् । एव-अवधारणेऽनवक्लृप्तौ च । एवम्-उक्तपरामर्शे । नूनम्-निश्चये तर्के च । शश्वत्-पौनःपुन्ये सहार्थे नित्ये च । युगपत्-एककाले । भूयस्-पुनरर्थे आधिक्ये च । कूपत्-प्रश्ने प्रशंसायाञ्च । कुवित्-भूर्यर्थे प्रशंसायाञ्च । नेत् शङ्काप्रतिषेधविचारसमुच्चयेषु । चेत्-यदीत्यर्थे । चण्-चेदित्यर्थे । अत्र णकारोऽनुबन्धः समुच्चयादौ तु निरनुबन्धकोऽयम् । कच्चित्-इष्टप्रश्ने । यत्र-अवक्लृप्त्यमर्षगर्हार्थेषु । नह-प्रत्यारम्भे । 'हन्त-हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' । माकिः, माकिम्, नकिः, नकिम् चत्वारो वर्जने । केचित्तु नकिमिति न पठन्ति । माङ्नञौ स्वरादिपूक्तावेव उभयत्र पाठश्चिन्त्यफलः । यावत्, तावत्-एतौ साकल्यावधिमानावधारणेषु । त्वै-विशेषे वितर्के च । द्वै वितर्के । 'न्वै' इति पाठान्तरम् । रै-दाने आदरे च । श्रौषट्-वौषट् हविर्दाने । स्वाहा-देवदाने । स्वधा-पितृदाने । स्वरभेदार्थं एषामुभयत्र पाठः । तुम्-तुङ्कारे । तथाहि-निदर्शने (उदाहरणदाने) । खलु-निषेधवाक्यालङ्कारनिश्चयेषु । किल-वार्त्तायामलीके च । अथो अथ-मङ्गलानन्तरारम्भप्रश्नाधिकारप्रतिज्ञासमुच्चयकार्त्स्न्येषु । अथशब्दः-स्वरादिष्वपि पठ्यते, तेन मङ्गलवाचकस्य सत्त्वार्थत्वेऽप्यव्ययत्वं सिध्यति । सुष्ठु-प्रशंसायाम् । स्वरभेदार्थं पुनः पाठः । स्म-अतीते पादपूरणे च । आदह-उपक्रमहिंसाकुत्सनेषु ।

उपसर्गविभक्तिस्वरप्रतिरूपकाश्च[1] । अवदत्तम् । अहंयुः । अस्तिक्षीरा । अ । आ । इ । ई । उ । ऊ । ए । ऐ । ओ । औ । पशु । शुकम् । यथाकथाच । पाट् । प्याट् । अङ्ग । है । हे । भोः । अये । द्य । विषु । एकपदे । युत् । आतः ॥

चादिरप्याकृतिगणः[2] ॥

[ तद्धितश्चाऽसर्वविभक्तिः[3] १ । १ । ३८ ॥

यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात् । परि-

उपसर्गेति । उपसर्गप्रतिरूपकाः, सुबन्तप्रतिरूपकाः, तिङन्तप्रतिरूपकाः, स्वरप्रतिरूपकाश्च अव्ययसञ्ज्ञकाः स्युरित्यर्थः । तत्र-उपसर्गप्रतिरूपकोदाहरणम्-अवदत्तमिति । अत्रावेत्यस्योपसर्गत्वाभावेन 'अच उपसर्गात्त' इति तादेशो न भवति । 'अह'मिति सुबन्तप्रतिरूपकमव्ययमहङ्कारे । अस्तीति तिङन्तप्रतिरूपकमव्ययम् । प्रथमान्तत्वे तु अहंशुभमोरिति युसि विभक्तिलुकि-अस्मद्युरिति स्यात् । अहंयुरिति त्विष्यते । तिङन्तत्वे तु बहुव्रीहिसमासानुपपत्तिः । स्वरप्रतिरूपकाः-अ आ इ ई इत्यादयः । अ-सम्बोधनेऽधिक्षेपे निषेधे च । आ-वाक्यस्मरणयोः । इ-सम्बोधने विस्मये जुगुप्सायाञ्च । ई उ ऊ ए ऐ ओ औ-सम्बोधने । पशु-सम्यगर्थे । शुक-शैघ्र्ये । यथा कथा च-अनादरे । ( किसी तरह से ) । पाट्प्रभृतयः सप्त सम्बोधने । द्य-हिंसा-प्रातिलोम्य-पादपूरणेषु । विषु-नानार्थे । एकपदे-अकस्मादित्यर्थे । युत्-कुत्सायाम । [ युदित्यन्ये पठन्ति ] । आतः-इतोऽपीत्यर्थे ।

आकृतीति । तद्यथा-यत्-तदिति द्वयं हेतौ । आहोस्वित्-विकल्पे । सोम्-सर्वतोभावे । सुकम्-अतिशये । अनुकं-वितर्के । शवत्-अन्तःकरणे आभिमुख्ये च । व-पादपूरणे इवार्थे च । दिष्ट्या-आनन्दे । चटु-

१ उपसर्गप्रतिरूपक, सुबन्तप्रतिरूपक, तिङन्तप्रतिरूपक और स्वरप्रतिरूपक शब्दों की अव्यय संज्ञा हो । (प्रतिरूपक-सदृश) २ चादि भी आकृतिगण है ।

३ जिस शब्द से सर्व विभक्तियों की उत्पत्ति न हो ऐसा जो तद्धितान्त शब्द उसकी अव्ययसंज्ञा हो ।

गणनं कर्त्तव्यम् ] । तसिलादयः प्राक् पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः । अम् । आम् । कृत्वोर्थाः । तसिवती । नानाञौ । एतदन्तमप्यव्ययम् । अत इत्यादि ॥

**कृन्मेजन्तः १ । १ । ३९ ॥**[1]

कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् । स्मारं स्मारम् । जीवसे । पिबध्यै ॥

**क्त्वातोसुन्कसुनः १ । १ । ४० ॥**[2]

एतदन्तमव्ययं स्यात् । कृत्वा । उदेतोः । विसृपः ॥

**अव्ययीभावश्च १ । १ । ४१ ॥**[3]

[ अव्ययीभावोऽव्ययं स्यात् ] । अधिहरि ॥

**अव्ययादाप्सुपः २ । ४ । ८२ ॥**[4]

चाटु एतौ प्रियवाक्ये । हुम्–भर्त्सने । इव–सादृश्ये । अद्यत्वे–इदानीमित्यर्थे । इत्यादि । अत्र स्वरादिचादीनामाकृतिगणत्वाऽविशेषेऽपि येषां निपातस्वर इष्टस्ते चादिषु अन्ये स्वरादिषु, स्वरद्वयभाजस्तूभयत्र बोध्या इति विवेकः ।

अव्ययमिति । 'तद्धितश्चाऽसर्वविभक्ति'रित्यनेनेति भावः । यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यादिति च तदर्थः ।

स्मारमिति । णमुलन्तोऽयम् । 'नित्यवीप्सयो'रिति द्वित्वम् ।

जीवसे इति । 'तुमर्थे से सेन्–' इति असेप्रत्ययश्छान्दसः ।

पिबध्यै इति । 'तुमर्थे से सेन्' इति छान्दसः शध्यैप्रत्ययः, पिबादेशः ।

'उदेतो'रित्यत्र तोसुन् प्रत्ययः । विसृप इति । 'सृपितृदोः कसुन्' इति कसुन्प्रत्ययः ।

१ कृत् जो मान्त एजन्त तदन्त जो शब्द उसकी अव्यय सञ्ज्ञा हो ।

२ क्त्वा तोसुन् और कसुन् प्रत्ययान्त शब्दों की अव्यय सञ्ज्ञा हो ।

३ अव्ययीभावसमास की अव्ययसञ्ज्ञा हो ।

४ अव्यय से विहित जो आप् और सुप् उनका लुक् हो ।

अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात् । तत्र शालायाम् ।

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥**
**वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।**
**आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥२॥**

वगाहः, अवगाहः । पिधानम् , अपिधानम् ॥

इत्यव्ययप्रकरणम् ।

# अथ तिङन्ते भ्वादिप्रकरणम् ।

लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् ।
—एषु पञ्चमो लकारश्छन्दोमात्रगोचरः ॥

**१ लः कर्मणि च भावे चाऽकर्मकेभ्यः ३ । ४ । ६९ ॥**

तत्र इत्यस्य तद्धितश्चासर्वविभक्तिरित्यव्ययसञ्ज्ञा ।

**न व्येति**—विविधं विकारं न प्राप्नोति । सत्त्वधर्मान् लिङ्गसङ्ख्यादीन् न गृह्णातीति यावत् ।

**वष्टीति । भागुरिः**—अवाप्योरुपसर्गयोरल्लोपं वष्टि । **हलन्तानां**=हलन्तेभ्यः, आपं=टापञ्च—वष्टि । **वष्टि**—इच्छति । हलन्तेभ्यष्टाप उदाहरणमाह **वाचेति** । अत्र '**वगाहश्चावगाहश्च पिधानमपिधानञ्च**'मिति पठनीयम् । एकस्यांशस्य श्लोके उदाहरणमन्यस्य नेति वैषम्यस्याऽनुचितत्वात् ।

इत्यव्ययानि ।

**एषु**—दशसु लकारेषु । **पञ्चमः**—लेट् लकारः, **छन्दोमात्रगोचरः** वेद एव प्रयुज्यते न तु लोके । **ल इति** । **लः**—प्रथमान्तं, **कर्मणि**—सप्तम्यन्तं, **च**-अव्ययपद, भावे-सप्तम्यन्त, **च**—अव्ययपदम् ,**अकर्मकेभ्यः**—पञ्चम्यन्तम् ।

१ सकर्मक धातुओं से कर्म और कर्ता में लकार हों—और अकर्मक धातुओं से भाव और कर्त्ता में ( लकार ) हों ।

लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च ॥

**[१]वर्त्तमाने लट् ३ । २ । १२३ ॥**

वर्त्तमानक्रियावृत्तेर्धातोर्लट् स्यात् । अटाविता । उच्चारणसामर्थ्याल्लस्य नेत्वम् । **भू सत्तायाम् ॥ १ ॥** कर्तृविवक्षायां भू ल् इति स्थिते

**[२]तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ३ । ४ । ७८ ॥**

एतेऽष्टादश लादेशाः स्युः ।

**[३]लः परस्मैपदम् १ । ४ । ९९ ॥**

लादेशाः परस्मैपदसंज्ञाः स्युः ॥

**[४]तङानावात्मनेपदम् १ । ४ । १०० ॥**

तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः । पूर्वसंज्ञाऽपवादः ॥

---

**सकर्मकेभ्य इति ।** फलव्यधिकरणव्यापारवाचकत्वं-सकर्मकत्वं, फलसमानाधिकरणव्यापारवाचकत्वम् अकर्मकत्वम् । प्रारब्धापरिसमाप्तक्रियाश्रयत्वं वर्तमानत्वम् । **अटाविताविति ।** अकारः-'उपदेशेऽज्-' इत्यनेन, टकारः-'हलन्त्य'मित्यनेन इत्सञ्ज्ञको भवति, तेन 'तस्य लोप'इति तयोर्लोप इत्याशयः ।

**लस्येति ।** लस्य 'लशक्वतद्धिते' इत्यनेनेत्वं प्राप्नोति, तच्च उच्चारणसामर्थ्यान्न भवतीति भावः ।

१ वर्तमानकालिक जो क्रिया तद्वृत्ति जो धातु उससे लट् लकार हो ।

२ लकार के स्थान में तिबादि अठारह आदेश हों ।

३ लकार के स्थान में हुए जो आदेश उनकी परस्मैपदसञ्ज्ञा हो ।

४ तङ्प्रत्याहार और शानच् कानच् इनकी आत्मनेपद सञ्ज्ञा हो ।

**अनुदात्तङित आत्मनेपदम्[1] । १ । ३ । १२ ॥**

अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात् ॥

**स्वरितञितः कर्त्रभिप्राये क्रियाफले[2] । १ । ३ । ७२ ॥**

स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले ॥

**शेषात्कर्तरि परस्मैपदम्[3] । १ । ३ । ७८ ॥**

आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात् ।

**तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः[4] । १ । ४ । १०१ ॥**

तिङ उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः ॥

**तान्येकवचनद्विवचनबहुवचनान्येकशः[5] । १ । ४ । १०२ ॥**

लब्धप्रथमादिसंज्ञानि तिङस्त्रीणि त्रीणि वचनानि प्रत्येकमेकवचनादिसंज्ञानि स्युः ॥

**अनुदात्तेति** । अनुदात्तश्च ङश्च अनुदात्तङौ, तावितौ यस्यासौ—अनुदात्तङित्, तस्मात्—अनुदात्तङित इति विग्रहः । एवं 'स्वरितञित' इत्यत्रापि । कर्तारमभिप्रैतीति—कर्त्रभिप्रायं, तस्मिन्—**कर्त्रभिप्राये** । 'कर्मण्य'णित्यण् ।

तिङ षट्त्रिकाः, सञ्ज्ञास्तु तिस्र इति यथासङ्ख्यं न प्राप्नोतीत्यत आह—**उभयोरिति** । परस्मैपदमिति, आत्मनेपदमिति चानुवर्त्तते, तेन पदद्वये प्रत्येकं त्रयस्त्रिका इति यथासङ्ख्यं सञ्ज्ञाः प्रवर्त्तन्ते इति बोध्यम् ।

'तानी'त्यस्य व्याख्यानं—**लब्धप्रथमेत्यादि** । अन्वर्थैकसञ्ज्ञाधिकारा-

१ अनुदात्तेत् जो धातु और ङित् जो धातु उसकी आत्मनेपद सञ्ज्ञा हो ।

२ स्वरितेत् जो धातु और ञित् जो धातु उनसे आत्मनेपद हो कर्तृगामी क्रियाफल में । ( अर्थात् यदि क्रियाजन्य फल कर्ता को प्राप्त होता हो तो ) ।

३ आत्मनेपद का जो निमित्त उससे हीन जो धातु उससे परस्मैपद हो कर्ता में ।

४ आत्मनेपद और परस्मैपद सम्बन्धी तीन तीन त्रिक इनकी क्रम से प्रथम-मध्यम-उत्तम सञ्ज्ञा हो । ५ प्राप्त की है प्रथमादि सञ्ज्ञा जिन्होंने ऐसे जो तीन तीन त्रिक उनकी क्रम से एकवचन द्विवचन बहुवचन सञ्ज्ञा हो ।

५युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः १ । ४ । १०५ ॥

तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने च मध्यमः स्यात् ॥

ॲस्मद्युत्तमः १ । ४ । १०७ ॥

तथाभूतेऽस्मद्युत्तमः स्यात् ॥

३शेषे प्रथमः १ । ४ । १०८ ॥

मध्यमोत्तमयोरविषये प्रथमः स्यात् । भू-ति इति जाते ।

तिङ्४शित्सार्वधातुकम् ३ । ४ । ११३ ॥

तिङः शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ॥

त्प्रथमादिसञ्ज्ञानामेकवचनादिसञ्ज्ञानाञ्च पर्यायः स्यात् । तथा च अस्तेर्लोटो 'मेनि'रिति कृते एकत्वविवक्षायामुत्तमसञ्ज्ञाऽभावादाड्डत्तमस्येत्याडनापत्त्या 'असो'त्यादिप्रयोगाणामप्यापत्तिः स्यात् ।

'समानाधिकरणे'इत्यस्य व्याख्यानं-तिङ्वाच्यकारकवाचिनीति । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः-सामानाधिकरण्यम् । 'स्थानि-नी'त्यस्य व्याख्यानम्-'अप्रयुज्यमाने' इति । तथाभूत इति । तिङ्वाच्य-कारकवाचिनि अस्मदि प्रयुज्यमानेऽप्रयुज्यनाने च उत्तम. स्यादित्यर्थः ।

१ तिङ् वाच्य जो कारक तादृश कारकवाची जो युष्मद् शब्द वह प्रयुज्यमान हो वा अप्रयुज्यमान हो तो धातु से मध्यम पुरुष हो ।२ तिङ् वाच्य जो कारक-तादृश-कारक-वाची जो अस्मदि वह प्रयुज्यमान हो वा अप्रयुज्यमान हो तो धातु से उत्तम पुरुष हो ।

३ मध्यम और उत्तम का जहाँ विषय नहीं है वहाँ प्रथम पुरुष हो । (अर्थात् तिङ् वाच्य जो कारक तादृश कारकवाची जो युष्मद्-अस्मद् उससे भिन्न जो तदादि शब्द वह प्रयुज्यमान हो वा अप्रयुज्यमान हो तो प्रथम पुरुष हो ) ।

४ धातु के अधिकार में पठित जो तिङ् और शित्सञ्ज्ञकप्रत्यय उनकी सार्व-धातुक सञ्ज्ञा हो ।

## कर्तरि शप् । ३ । १ । ६८ ॥

कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात् ॥

## सार्वधातुकार्धधातुकयोः ७ । ३ । ८४ ॥

अनयोः परयोरिगन्ताङ्गस्य गुणः स्यात् । अवादेशः । भवति । भवतः ।

## झोऽन्तः ७ । १ । ३ ॥

प्रत्ययावयवस्य झस्याऽन्तादेशः स्यात् । अतो गुणे । भवन्ति । भवसि । भवथः । भवथ ॥

## अतो दीर्घो यञि ७ । ३ । १०१ ॥

अतोऽङ्गस्य दीर्घः स्याद्यञादौ सार्वधातुके । भवामि । भवावः । भवामः ।

स भवति । तौ भवतः । ते भवन्ति । त्वं भवसि । युवां भवथः । यूयं भवथ । अहं भवामि । आवां भवावः । वयं भवामः ॥

सार्वधातुके इत्यनुवर्त्तते, धातोरेकाच इत्यतो धातोरित्यनुवर्त्तते । तदाह–**कर्त्रर्थे इति** । झकारोत्तराकारः तकारोत्तराकारश्च उच्चारणार्थः । 'अतो दीर्घो यञी'ति तु न प्रवर्त्तते, स्थान्यलादेशविधावनल्विधाविति स्थानिवत्त्वनिषेधात् । 'स भवती'त्यादौ युष्मदस्मदोर्विषयस्याऽभावाच्छेषे प्रथम इति प्रथमः पुरुषः । एव 'देवदत्तो भवति' 'चैत्रो भवति' 'भवान् भवती'–त्यादावपि प्रथमः पुरुषः । 'त्वं भवसी'त्यादौ च युष्मद्युपपदे मध्यमः । 'अहं भवामी'त्यादौ चास्मद्युपपदे उत्तमः पुरुषः । यत्र च प्रथममध्यमयोरुभयोर्विषयः–'स च त्वं च भवथः' इत्यादौ तत्र तु परत्वान्मध्यम एव, यत्र च

१ कर्त्रर्थक सार्वधातुक परे रहते धातु से शप् प्रत्यय हो ।

२ इगन्त अङ्ग को गुण हो सार्वधातुक आर्धधातुक परे रहते ।

३ प्रत्यय का अवयव जो झकार उसको अन्त आदेश हो ।

४ अदन्त अङ्ग को दीर्घ हो यञादि सार्वधातुक परे रहते ।

**[1]परोक्षे लिट् ३ । २ । ११५ ॥**

भूतानद्यतनपरोक्षार्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः ॥

**[2]परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ३ । ४ । ८२ ॥**

लिटस्तिबादीनां नवानां णलादयो नव स्युः । भू अ इति स्थिते ।

**[3]भुवो वुग् लुङ्लिटोः ६ । ४ । ८८ ॥**

भुवो वुगागमः स्याल्लुङ्लिटोरचि ॥

**[4]लिटि धातोरनभ्यासस्य ६ । १ । ८ ॥**

लिटि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तः । आदिभूतादचः परस्य तु द्वितीयस्य । भूव् भूव् अ इति स्थिते ॥

**[5]पूर्वोऽभ्यासः ६ । १ । ४ ॥**

अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससंज्ञः स्यात् ॥

**[6]हलादिः शेषः ७ । ४ । ६० ॥**

अभ्यासस्याऽऽदिर्हल् शिष्यते, अन्ये हलो लुप्यन्ते । इति वलोपः ।

मध्यमोत्तमयोर्विषयस्तत्र 'त्वञ्चाऽहञ्च पठाव' इत्यत्रोत्तम एव । यत्र च सर्वेषां प्रथममध्यमोत्तमानां विषयस्तत्र—'स च त्वं चाहञ्च भोक्ष्यामहे' इत्यादौ, तत्र च परत्वादुत्तमः पुरुष एवेति विवेकः । अत्र='एकाचो द्वे प्रथमस्ये'ति ६।१।१। षाष्ठप्रकरणे । **अभ्यासस्येति** । अभ्यासस्येति जातिपरो निर्देशः, तेन आदेर्हलोऽभावेऽपि 'आततुः' आटतुः' इत्यादौ तकारादिनिवृत्ति

१ भूत अनद्यतन परोक्षार्थ वृत्ति जो धातु उसमे लिट् लकार हो ।

२ लिट् के स्थान में जो तिबादि नव उनको णलादि नव आदेश हों ।

३ भूधातु को वुक का आगम हो लुङ लिट् सम्बन्धी अच परे रहते ।

४ अभ्यास रहित धातु का अवयव जो प्रथम एकाच उसको द्वित्व हो और आदिभूत अच् से परे जो द्वितीय एकाच् उसको द्वित्व हो ।

५ षाष्ठद्वित्वप्रकरण में विहित जो दो विधान किए हैं, उनके पूर्व की अभ्यास संज्ञा हो । ६ अभ्यास का आदि हल शेष रहे और अन्य हल् का लोप हो ।

[1]ह्रस्वः ७।४।५९॥

अभ्यासस्याऽचो ह्रस्वः स्यात्॥

[2]भवतेरः ७।४।७३॥

भवतेरभ्यासोकारस्य अः स्याल्लिटि॥

[3]अभ्यासे चर्च ८।४।५४॥

अभ्यासे झलां चरः स्युर्जशश्च। झशां जशः, खयां चर इति विवेकः। बभूव। बभूवतुः। बभूवुः।

[4]लिट् च ३।४।११५॥

लिडादेशस्तिङार्धधातुकसंज्ञः स्यात्॥

[5]आर्धधातुकस्येड् वलादेः ७।२।३५॥

वलादेरार्धधातुकस्येडागमः स्यात्। बभूविथ। बभूवथुः। बभूव॥ बभूव। बभूविव। बभूविम।

[6]अनद्यतने लुट् ३।३।१५॥

सिध्यति, यत्र क्वचिदभ्यासे अनादेर्लोपविधानात्। 'अत्र लोपोऽभ्यासस्ये'ति सूत्रादभ्यासपदमनुवर्तते, तदाह **अभ्यासोकारेति**।

**झशामिति**। वर्गतृतीयचतुर्थानां स्थाने वर्गतृतीयाः, वर्गप्रथमद्वितीयानां स्थाने प्रथमा इति भावः। आन्तरतम्यादियं व्यवस्थेति ध्येयम्।

**लिट्**—प्रथमान्तं, च अव्ययपदम्। लिट्पदेन लिडादेशतिबादेर्ग्रहणम्।

**अनद्यतन इति**। अतीताया रात्रेः पश्चार्द्धेन, आगामिन्या रात्रेः पूर्वार्द्धेन

१ अभ्यास के अच् को ह्रस्व होय।

२ भू धातु के अभ्यास के उकार को अकार हो लिट् परे रहते।

३ अभ्यास में झशों को जश् हो और खरों को चर् आदेश हो।

४ लिडादेश जो तिङ् उसकी आर्धधातुक सञ्ज्ञा हो।

५ वलादि आर्धधातुक को इट् का आगम हो।

६ भविष्यत् अनद्यतन अर्थ में वर्तमान धातु से लोट् हो।

भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् स्यात् ॥

स्यतासी लृलुटोः ३ । १ । ३३ ॥

धातोः स्यतासी एतौ प्रत्ययौ स्तो लृलुटोः परतः । शबाद्यप-वादः । 'लृ' इति लृङ्लृटोर्ग्रहणम् ॥

आर्धधातुकं शेषः ३ । ४ । ११४ ॥

तिङ्शिद्भ्योऽन्यो 'धातो'रिति विहितः प्रत्यय एतत्संज्ञः स्यात् । इट् ॥

लुटः प्रथमस्य डारौरसः २ । ४ । ८५ ॥

डा रौ रस् एते क्रमात्स्युः । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । भविता ॥

तासस्त्योर्लोपः ७ । ४ । ५० ॥

तासस्तेश्च सस्य लोपः स्यात्सादौ प्रत्यये परे ॥

रि च ७ । ४ । ५१ ॥

---

च सहितो दिवसोऽद्यतनः, तद्भिन्नोऽनद्यतनः । स्यतासी—प्रथमान्तं, लृलुटोः सप्तम्यन्तम् । ग्रहणमिति । 'स्वरितानुबन्धग्रहणे सामान्यग्रहण'मिति परिभाषाबलादिति भाव । एतत्सञ्ज्ञः=आर्धधातुकसञ्ज्ञः । इट्=आर्धधातुकतया 'आर्द्धधातुकस्येड्वलादे'रित्यनेन इट् । टेः='भवितास्' इत्यत्र 'आस्' इत्यस्य । लोपः='टे'रित्यनेन सूत्रेण लोपः । 'सस्यार्द्धधातुके' इत्यतः 'सी'त्यनुवर्त्तते, अङ्गाक्षिप्तप्रत्ययस्य सीत्यनेन विशेषणाद्यस्मिन्विधिरिति तदादिविधिरत आह-

---

१ धातु से परे स्य और तास् ये प्रत्यय हों लृ और लुट् परे रहते ।

२ तिङ् शित् से भिन्न धातु से विहित जो प्रत्यय उसकी आर्धधातुक सञ्ज्ञा हो।

३ लुट् सम्बन्धी जो प्रथम पुरुष उसके स्थान में क्रम से डा रौ रस् आदेश हों।

४ तास और अस्ति (अस् धातु) के सकार का लोप हो सादि प्रत्यय परे रहते।

५ तास् के सकार का लोप हो रादि प्रत्यय परे रहते।

रादौ प्रत्यये तथा। भवितारौ। भवितारः। भवितासि। भवितास्थः। भवितास्थ। भवितास्मि। भवितास्वः। भवितास्मः॥

[1]लृट् शेषे च ३। ३। १३॥

भविष्यदर्थाद्धातोर्लृट् स्यात् क्रियार्थायां क्रियायां सत्यामसत्यां वा। स्यः। इट्। भविष्यति। भविष्यतः। भविष्यन्ति। भविष्यसि। भविष्यथः। भविष्यथ। भविष्यामि। भविष्यावः। भविष्यामः॥

[2]लोट् च ३। ३। १६२॥

विध्याद्यर्थेषु धातोर्लोट् स्यात्॥

[3]आशिषि लिङ्लोटौ ३। ३। १७३॥

[ आशिषि धातोर्लिङ्लोटौ स्तः ]।

[4]एरुः ३। ४। ८६॥

लोट इकारस्य उः स्यात्। भवतु॥

[5]तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् ७। १। ३५॥

आशिषि तुह्योस्तातङ् वा स्यात्। परत्वात्सर्वादेशः। भवतात्॥

सादाविति। एव रादावित्यत्रापि बोध्यम्। तथा=तासेर्लोपः। अस्तेस्तु नेह सम्बन्धः, ततो रादिप्रत्ययाऽसम्भवात्।

'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्'इत्युक्तं, प्राक् ततोऽन्यः शेष इत्याह—असत्यामिति। चकाराद्यल्लब्ध तदाह—सत्यामिति।

'विधिनिमन्त्रणे'त्याद्यनुवर्त्तते, तदाह—विध्यादिष्विति। परत्वादिति।

१ भविष्यत् अर्थ वाचि धातु से लृट् लकार हो क्रियार्थक जो क्रिया वह हो या न हो तो।

२ विधि-निमन्त्रण-आमन्त्रण-आदि अर्थों में धातु से लोट् लकार हो।

३ आशीर्वाद अर्थ में धातु से लिङ् और लोट् लकार होते हैं।

४ लोट् सम्बन्धी इकार को उकार आदेश हो।

५ आशीर्वाद अर्थ में तु हि को तातङ् आदेश हो विकल्प से।

[1]लोटो लङ्वत् ३ । ४ । ८५ ॥

लोटो लङ इव कार्यं स्यात् । तेन तामादयः सलोपश्च ॥

[2]तस्थस्थमिपां तांतंतामः ३ । ४ । १०१ ।

ङितश्चतुर्णां तामादयः क्रमात्स्युः । भवताम् । भवन्तु ॥

[3]सेर्ह्यपिच्च ३ । ४ । ८७ ॥

लोटः सेर्हिः स्यात् सोऽपिच्च ॥

[4]अतो हेः ६ । ४ । १०५ ॥

अतः परस्य हेर्लुक् स्यात् । भव । भवतात् । भवतम् । भवत ॥

[5]मेर्निः ३ । ४ । ८९ ॥

लोटो मेर्निः स्यात् ॥

यद्यपि ङिच्चेत्ययमनेकाल्शित्सर्वस्येत्यस्याऽपवादस्तथा च परत्वादित्ययुक्त, तथापि अनन्यार्थङित्त्वेष्वनङादिषु ङिच्चेति चरितार्थमिति गुणवृद्धिप्रतिषेधसम्प्रसारणाद्यर्थतया सम्भवत्प्रयोजनङकारे तातङि मन्थरं प्रवृत्तो ङिच्चेत्यस्य योगः—परेणाऽनेकाल्शिदित्यनेन बाध्यते, इहोत्सर्गापवादयोरनयोः समबलत्वात् । लङ्वदिति । लङ्वदित्यत्र षष्ठ्यन्ताद्वतिः, तेन तामादयः सलोपश्च भवन्ति । अडाटौ तु नातिदिश्येते, न हि तौ लङः क्रियेते, किन्तर्हि ?, अङ्गस्येति तत्त्वम् ।

भवतादिति । 'अतो हे'रिति लुगपेक्षया परत्वाद्धेस्तातङ् । अन्तरङ्गमेव हि लुग् बाधते न तु परम् । अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते'इति परिभाषा त्वनित्येति भावः ॥

१ लोट् को लङ् की तरह कार्य हो ।

२ ङित् सम्बन्धी जो तस्-थस्-थ-मिप् इनको क्रम से ताम्-तम्-त-अम् ये आदेश हों ।

३ लोट् सम्बन्धि सि को हि आदेश हो और वह अपित् हो ।

४ अदन्त से परे हि का लुक् हो ।

५ लोट् सम्बन्धी मि को नि आदेश हो ।

## [1]आडुत्तमस्य पिच्च । ३ । ४ । ९२ ॥

लोडुत्तमस्याऽऽट् स्यात्स पिच्च । हिन्योरुत्वं न, इकारोच्चारण-सामर्थ्यात् ॥

## ते [2]प्राग्धातोः । १ । ४ । ८० ॥

ते=गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्याः ॥

## [3]आनि लोट् ८ । ४ । १६ ॥

उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्याऽऽनीत्यस्य नस्य णः स्यात् ॥ प्रभवाणि । *[4]दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः । दुःस्थितिः । दुर्भवानि । *[5]अन्तरशब्दस्याऽङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् । अन्तर्भवाणि ॥

## [6]नित्यं ङितः ३ । ४ । ९९ ॥

**सामर्थ्यादिति** । अन्यथा प्रक्रियालाघवाय हुन्वादेशमेव कुर्यात्सूत्रकार इति भावः । **प्रागेव** न परतः, नाऽव्यवहिताश्चेति 'छन्दसि परेऽपि' 'व्यवहिताश्चे'ति सूत्रितमित्याशयः । **आनीति** । 'नि लो'डिति वक्तव्ये आनिग्रहणमागमशास्त्रस्यानित्यता ज्ञापयति। तेन 'सागरं तर्तुकामस्य' 'जहत्रा स्तोत्र'-मित्यादि सिध्यति ।

**अन्तरिति** । भोः सूत्रकार ! त्वया अन्तः-शब्दस्य-अङ्विधौ, किविधौ, णत्वे च कर्तव्ये उपसर्गत्वं वक्तव्यमित्यर्थः । एवञ्चान्तःशब्दस्योपसर्गतया-

१ लोट् सम्बन्धी उत्तम पुरुष को आट् का आगम हो और वह पित् हो ।

२ गतिसञ्ज्ञक और उपसर्गसञ्ज्ञक इनका धातु से पूर्व ही प्रयोग होता है ।

३ उपसर्गस्थनिमित्त जो रेफ षकार उससे परे जो लोट्सम्बन्धी आनि उसके नकार को णकार हो ।

४ षत्व णत्व करना हो तो दुर् को उपसर्गत्व नहीं होता है ।

५ अङ् विधि किविधि और णत्व कर्तव्य हो तो अन्तर् शब्द की उपसर्ग सञ्ज्ञा होय ।

६ ङित् लकार सम्बन्धी जो सकारान्त उत्तम पुरुष उसके सकार का नित्य लोप होय ।

सकारान्तस्य ङिदुत्तमस्य नित्यं लोपः स्यात् । अतोऽन्त्यस्येति सलोपः । भवाव । भवाम ॥

**[1] अनद्यतने लङ् ३ । २ । १११ ॥**

अनद्यतनभूतार्थवृत्तेर्धातोर्लङ् स्यात् ।

**[2] लुङ्लङ्लृङ्क्ष्वडुदात्तः ६ । ४ । ७१ ॥**

एष्वङ्गस्याऽडागमः स्यात्, स चोदात्तः ॥

**[3] इतश्च ३ । ४ । १०० ॥**

ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः स्यात् । अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ।

**[4] विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ् ३ । ३ । १६१ ॥**

एष्वर्थेषु धातोर्लिङ् स्यात् ॥

---

ऽऽनिलोडित्यनन णत्वेऽन्तर्भवाणीति सिद्धमित्याशयः । ङिदुत्तमस्य=ङिल्लकारोत्तमस्य । तेन 'भवावः' 'भवामः' इत्यत्र वस्मसोर्ङित्त्वेऽपि नाऽनेन लोपः ।

विधिः—प्रेरणं, भृत्यादेर्निकृष्टस्य कार्ये प्रवर्त्तनम् । निमन्त्रणं=नियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्त्तनम् । आमन्त्रणं—'यथेच्छसि तथा कुरु' इति कामचारानुज्ञा । अधीष्टं सत्कारपूर्वकं गुर्वादेरध्यापनादौ प्रवर्त्तनम् । सम्प्रश्नः=सम्प्रधारणम् । प्रार्थनम्=याच्ञा ।

---

१ अनद्यतन भूतार्थ वृत्ति धातु से लङ् लकार हो ।

२ लुङ् लङ् लृङ् परे रहते अङ्ग को अट् का आगम हो और वह उदात्त होय ।

३ ङित् लकार सम्बन्धी जो इकारान्त परस्मैपद उसका (उसके इकार का) लोप हो ।

४ विधि-निमन्त्रण-आमन्त्रण-अधीष्ट-सम्प्रश्न-और प्रार्थना इन अर्थों में धातु से लिङ् लकार हो ।

[1] **यासुट् परस्मैपदेषूदात्तो ङिच्च ३ । ४ । १०३ ॥**

लिङः परस्मैपदानां यासुडागमः स्यात्स चोदात्तो ङिच्च ॥

**लिङः[2] स लोपोऽनन्त्यस्य ७ । २ । ७९ ॥**

सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः स्यात् । इति प्राप्ते ॥

**अतो[3] येयः ७ । २ । ८० ॥**

अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्य इय् स्यात् ।

गुणः ॥

**लोपो[4] व्योर्वलि ६ । १ । ६६ ॥**

[ वकारयकारयोर्लोपः स्याद्वलि ] । भवेत् । भवेताम् ॥

**झेर्जुस्[5] ३ । ४ । १०८ ॥**

लिङो झेर्जुस् स्यात् । भवेयुः । भवेः । भवेतम् । भवेत ।

भवेयम् । भवेव । भवेम ॥

**लिङाशिषि[6] ३ । ४ । ११६ ॥**

आशिषि लिङस्तिङार्धधातुकसंज्ञः स्यात् ॥

लिङः–षष्ठ्यन्त, स–इति लुप्तषष्ठ्यन्त, लोपः–प्रथमान्तम्, अनन्त्यस्य–षष्ठ्यन्तम् । सेत्यनन्त्यस्येत्यनेन विशेष्यते, तदाह अनन्त्यस्येति । 'रुदादिभ्य' इत्यतः 'सार्वधातुके' इत्यनुवर्तते । आशिषीति । 'लङः शाकटायनस्यैवे'त्यतोऽत्र एवकारोऽनुवर्त्तनीयः, तेन सार्वधातुकसञ्ज्ञा नेत्यपि लभ्यते । अन्यथा एकसञ्ज्ञाधिकारबहिर्भूततया सार्वधातुकसञ्ज्ञाऽपि स्यात्तथा च पक्षे

१ लिङ् सम्बन्धी जो परस्मैपद उसको यासुट् का आगम हो और वह उदात्त हो और ङित् हो ।

२ सार्वधातुक लिङ् के अनन्त्य सकार का लोप हो ।

३ अत् से परे जो सार्वधातुक का अवयव यास् उनको इय् आदेश हो ।

४ वकार यकार का लोप हो वल् परे रहते ।

५ लिङ् सम्बन्धी झि को जुस् हो ।

६ आशीर्वाद अर्थ में जो लिङ् उसकी आर्धधातुक सञ्ज्ञा हो ।

किदाशिषि ३ । ४ । १०४ ॥[1]

आशिषि लिङो यासुट् कित्स्यात् । 'स्कोः संयोगाद्यो'रिति सलोपः ॥

क्ङिति च १ । १ । ५ ॥[2]

गित्किन्ङिन्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः । भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ॥

लुङ् ३ । २ । ११० ॥[3]

भूतार्थवृत्तेर्धातोर्लुङ् स्यात् ॥

माङि लुङ् ३ । ३ । १७५ ॥[4]

[ माङ्युपपदे धातोर्लुङ् स्यात् ] । सर्वलकारापवादः ॥

स्मोत्तरे लङ् च ३ । ३ । १७६ ॥[5]

स्मोत्तरे माङि लङ् स्याच्चाल्लुङ् ॥

च्लि लुङि ३ । १ । ४३ ॥[6]

शबाद्यापत्तिः स्यादित्यवधेयम् । किदिति । ङित्त्वेनैव गुणवृद्धिनिषेधे सिद्धे किद्वचनमिज्यादित्यादौ वचिस्वपीति सम्प्रसारणार्थम्, जागर्यादित्यादौ गुणार्थञ्च, जागर्तेर्हि ङिति गुणः पर्युदस्यते, ङित्त्वञ्चेह विशेषविहितेन कित्त्वेन बाध्यते इति तत्र गुणः सुलभः ।

इग्लक्षणे='इक' इत्युच्चार्य्य विहिते । सर्वेति । 'माऽस्तु' इत्यादौ तु निषेधार्थको माशब्दो न माङिति तत्र लोट् भवत्येवेत्याशयः ।

१ आशीर्वाद अर्थ में जो लिङ्, तत्सम्बन्धी जो यासुट् वह कित् हो ।

२ गित् कित् ङित् निमित्तक इग्लक्षण गुणवृद्धि नहीं होय ।

३ भूतार्थक धातु से लुङ् लकार हो ।

४ माङ् उपपद रहते धातु से लुङ् लकार हो ।

५ स्म है उत्तर में जिसके ऐसा जो माङ् वह उपपद रहते धातु से लङ् हो ( चकार से ) लुङ् भी हो । ६ धातु से परे च्लि प्रत्यय हो लुङ् परे रहते ।

[ धातोश्च्लिप्रत्ययः स्याल्लुङि । ] शबाद्यपवादः ॥

[1]च्लेः सिच् ३ । १ । ४४ ॥

[ च्लेः सिजादेशः स्यात् ] । इचावितौ ॥

[2]गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २ । ४ । ७७ ॥

एभ्यः सिचो लुक् स्यात् । गापाविहेणादेशपिबती गृह्येते ॥

[3]भूसुवोस्तिङि ७ । ३ । ८८ ॥

भू सू एतयोः सार्वधातुके तिङि परे गुणो न स्यात् । अभूत् । अभूताम् । अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ॥

[4]न माङ्योगे ६ । ४ । ७४ ॥

अडाटौ न स्तः । मा भवान् भूत् । मा स्म भवत् । मा स्म भूत् ॥

शबाद्येति । आदिपदेन श्यन्नादीनां ग्रहणं बोध्यम् ।

इचाविताविति । इकारस्य 'उपदेशेऽच्-' इत्यनेन, चस्य-हलन्त्यमित्यनेनेत्सञ्ज्ञेति विवेकः । इत्सञ्ज्ञायां सत्यां 'तस्य लोप' इति लोप इत्यपि बोध्यम् । इदित्त्वफलन्तु-अमंस्तेत्यत्र अनिदितामिति नलोपाऽभावः । इदित्त्वान्नुम् तु न, अन्तेदित इति व्याख्यानात् । गापेति । 'गाती'ति श्तिपा विकरणशून्यस्य निर्देशाल्लुग्विकरणस्य इणादेशस्य ग्रहणं गापदेन, एवं 'लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्ये'ति परिभाषयाऽलुग्विकरणः पिबति· पाशब्देन गृह्यते, न तु पातिर्लुग्विकरण इत्यर्थः ।

१ च्लि को सिच् आदेश हो ।

२ गा, स्था, घुसञ्ज्ञक, पा और भूधातु से परे सिच् का लुक् हो ।

३ भू-सू धातु को सार्वधातुक तिङ् परे रहते गुण नहीं हो ।

४ माङ् के योग में अट्-आट् नहीं हो ।

**[1] लिङ्निमित्ते लृङ् क्रियातिपत्तौ ३ । ३ । १३९ ॥**

हेतुहेतुमद्भावादि लिङ्निमित्तं, तत्र भविष्यत्यर्थे लृङ् स्यात् । क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । 'सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत्' इत्यादि ज्ञेयम् । अत सातत्यगमने ॥ २ ॥ अतति ॥

**[2] अत आदेः ७ । ४ । ७० ॥**

अभ्यासस्यादेरतो दीर्घः स्यात् । आत । आततुः । आतुः । आतिथ । आतथुः । आत । आत । आतिव । आतिम । अतिता । अतिष्यति । अततु ॥

**[3] आडजादीनाम् ६ । ४ । ७२ ॥**

अजादेरङ्गस्याऽऽट् स्यात् लुङ्लङ्लृङ्क्षु । आतत् । अतेत् । अत्यात् । अत्यास्ताम् । लुङि सिचि इडागमे कृते ॥

**[4] अस्तिसिचोऽपृक्ते । ७ । ३ । ९६ ॥**

विद्यमानात् सिचोऽस्तेश्च परस्याऽपृक्तस्य हल ईडागमः स्यात् ॥

**[5] इट ईटि । ८ । २ । २८ ॥**

हेत्विति । 'हेतुहेतुमतोर्लिङ्' 'इच्छार्थेषु लिङ्लोटौ' इत्यादि सूत्रोक्तं लिङ्निमित्तमित्यर्थः । अनिष्पत्तिः=असिद्धिः । सातत्यगमनं=निरन्तरं गमनम् ।

१ हेतुहेतुमद्भावादि जो लिङ् के निमित्त, उन अर्थों में भविष्यत्कालिक क्रियावाची धातु से लृङ् लकार हो क्रिया की असिद्धि गम्यमान हो तो ।

२ अभ्यास के आदि के अकार को दीर्घ हो ।

३ अजादि अङ्ग को आट् का आगम हो लुङ् लङ् लृङ् परे रहते ।

४ विद्यमान जो सिच् और अस्ति उन से परे अपृक्त हल् को ईट् का आगम हो ।

५ इट् से परे सकार का लोप हो ईट् परे रहते ।

इटः परस्य सस्य लोपः स्यादीटि परे । *[1]सिज्लोप एकादेशे सिद्धो वाच्यः । आतीत् । आतिष्टाम् ॥

[2]सिजभ्यस्तविदिभ्यश्च । ३ । ४ । १०९ ॥

सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्सम्बन्धिनो झेर्जुस् स्यात् । आतिषुः । आतीः । आतिष्टम् । आतिष्ट । आतिषम् । आतिष्व । आतिष्म । आतिष्यत् । षिध गत्याम् ॥ ३ ॥

[3]ह्रस्वं लघु । १ । ४ । १० ॥

[ ह्रस्वं लघुसञ्ज्ञं स्यात् । ]

[4]संयोगे गुरु । १ । ४ । ११ ॥

संयोगे परे ह्रस्वं गुरु [ सञ्ज्ञं ] स्यात् ॥

[5]दीर्घं च । १ । ४ । १२ ॥

दीर्घश्च गुरु [ सञ्ज्ञं ] स्यात् ॥

[6]पुगन्तलघूपधस्य च । ७ । ३ । ८६ ॥

पुगन्तस्य लघूपधस्य चाऽङ्गस्येको गुणः स्यात् सार्वधातुकार्धधातुकयोः । धात्वादेरिति सः । सेधति । षत्वम् । सिषेध ॥

**सिज्लोप इति** । सिचो लोप -एकादेशे=सवर्णदीर्घे-कर्त्तव्ये सिद्धो भवति, न तु पूर्वत्राऽसिद्धमित्यनेन असिद्धो भवतीत्यर्थः । एवञ्च सकारेण व्यवधानाऽभावादातीदित्यादावकः सवर्णे इति दीर्घो भवत्येवेत्याशयः ।

अङ्गस्येत्यधिक्रियते, 'मिदेर्गुण' इत्यतो गुणपदं 'सार्वधातुकार्धधातुकयो'रिति चानुवर्त्तते. 'इको गुणवृद्धी' इति परिभाषया इक्पदमुपतिष्ठतेऽत आह-**पुगन्तस्येति** । षत्वम्=आदेशप्रत्यययो'रिति षत्वम् ।

१ एकादेश करने में सिच् का लोप सिद्ध ही रहता है ।

२ सिच्-अभ्यस्त और विद् से परे ङित्सम्बन्धी झि को जुस् हो ।

३ ह्रस्व की लघु सञ्ज्ञा हो । ४ संयोग परे रहते ह्रस्व की गुरु सञ्ज्ञा हो ।

५ दीर्घ की गुरु सञ्ज्ञा हो । ६ पुगन्त जो अङ्ग और लघूपध जो अङ्ग उसके अवयव इक् को गुण हो सार्वधातुक आर्धधातुक परे रहते ।

**१ असंयोगाल्लिट् कित् । १ । २ । ५ ॥**

असंयोगात्परोऽपिल्लिट् कित् स्यात् । सिषिधतुः । सिषिधुः । सिषेधिथ । सिषिधथुः । सिषिध । सिषेध । सिषिधिव । सिषिधिम । सेधिता । सेधिष्यति । सेधतु । असेधत् । सेधेत् । सिध्यात् । असेधीत् । असेधिष्यत् । एवम्—चिती संज्ञाने ॥४॥ शुच शोके ॥५॥ गद व्यक्तायां वाचि ॥ ६ ॥ गदति ॥

**२ नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च । ८ । ४ । १७ ॥**

उपसर्गस्थान्निमित्तात्परस्य नेर्नस्य णः स्याद्गदादिषु परेषु । प्रणिगदति ॥

'सार्वधातुकमपि'दित्यतोऽपिदिति वर्तते, तदाह—अपिदिति ।

**सिषिधतुरिति** । कृताऽकृतप्रसङ्गित्वेन नित्यत्वात्परमपि पुगन्तेति गुणं बाधित्वा कित्त्वात् क्ङिति चेति गुणनिषेधः । अस्य च—सेधतु-सेधतात्, सेधताम्, सेधन्तु । सेध सेधतात्, सेधतं, सेधत । सेधानि, सेधाव, सेधाम। असेधत्, असेधताम्, असेधन् । असेधः, असेधतम्, असेधत । असेधम्, असेधाव, असेधाम—इत्यादि रूपाणि ।

**लुङि च**—असेधीत्, असेधिष्टाम्, असेधिषुः । असेधीः, असेधिष्टम्, असेधिष्ट । असेधिषम्, असेधिष्व, असेधिष्मेति रूपाणि ।

**संज्ञानम्**=अवबोधः । चैतन्यमिति यावत् । चेतति । चिचेत । चेतिता । चेतिष्यति । चेततु । अचेतत् । चेतेत् । चित्यात् । अचेतीत् । अचेतिष्यत्—इति चेतते रूपाणि ।

**शुचधातोः**—शोचति । शुशोच । शोचिता । शोचिष्यति । शोचतु । अशोचत् । शोचेत् । शुच्यात् । अशोचीत् । अशोचिष्यत्—इति रूपाणि ।

**व्यक्तायामिति** । व्यक्ता वर्णा यस्यां तथाभूतायां मनुष्यादिवाचीत्यर्थः। तेन'गौर्गदती'ति न प्रयुज्यते। अधीयाने शुके 'शुको गदती'ति तु प्रयुज्यते एव।

**निमित्तादिति । निमित्तात्**=णत्वनिमित्तात्—रेफात् षकाराच्च। 'अत्र

१ असंयोग से परे जो पित् भिन्न लिट् वह कित् हो ।

२ उपसर्गस्थनिमित्त ( रेफ षकार ) से परे जो नि का नकार उसको णकार

**कुहोश्चुः । ७ । ४ । ६२ ॥**[1]

अभ्यासकवर्गहकारयोश्चवर्गादेशः स्यात् ॥

**अत उपधायाः । ७ । २ । ११६ ॥**[2]

उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे ।

जगाद । जगदतुः । जगदुः । जगदिथ । जगदथुः । जगद ।

**णलुत्तमो वा ७ । १ । ९१ ॥**[3]

उत्तमो णल् वा णित्स्यात् । जगाद-जगद । जगदिव । जगदिम । गदिता । गदिष्यति । गदतु । अगदत् । गदेत् । गद्यात् ।

**अतो हलादेर्लघोः ७ । २ । ७ ॥**[4]

हलादेर्लघोरकारस्य इडादौ परस्मैपदे सिचि वृद्धिर्वा स्यात् ।

अगादीत्—अगदीत् । अगदिष्यत् । णद अव्यक्ते शब्दे ॥ ७ ॥

**णो नः ६ । १ । ६५ ॥**[5]

लोपोऽभ्यासस्ये'त्यतोऽभ्यासस्येति वर्त्तते, तदाह—**अभ्यासेति** । 'मृजेर्वृद्धि.' 'अचो ञ्णिती'त्यतो वृद्धिपदं ञ्णितीति चानुवर्त्त्याह **वृद्धिरिति** ।

गोतो णिदित्यतो णिदिति वर्त्तते । तदाह **णिदिति** ।

'ऊर्णोतेर्विभाषे'त्यतो विभाषेति, 'नेटी'त्यत 'इटी'ति 'सिचि वृद्धिः परस्मैपदेषु' इति चानुवर्त्त्याह—**वृद्धिर्वेति** ।

अव्यक्ते=अस्पष्टाक्षरे, शब्दे=ध्वनौ। नादे इत्यर्थः ।

हो गदादि परे रहते । १ अभ्यास के कवर्ग हकार को चवर्ग आदेश हो ।

२ उपधा के अत् (ह्रस्व अकार) को वृद्धि हो ञित् णित् प्रत्यय परे रहते ।

३ उत्तम पुरुष का जो णल्-वह विकल्प से णित् हो ।

४ हलादि धातु के लघु अकार को वृद्धि हो विकल्प से, इडादि परस्मैपद सिच् परे रहते । ५ धातु के णकार को नकार हो ।

धातोरादेर्णस्य नः स्यात् । णोपदेशास्त्वनर्द्नाटिनाथनाथ्-नन्दनक्कनॄनृतः ॥

[1]उपसर्गादसमासेऽपि णोपदेशस्य ८ । ४ । १४ ॥

उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः स्यात् समासे असमासे च । प्रणदति । प्रणिनदति । नदति । ननाद ॥

[2]अत एकहल्मध्येऽनादेशादेर्लिटि ६ । ४ । १२० ॥

लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्याऽसंयुक्तहल्-मध्यस्थस्याऽकारस्य एकारः स्यादभ्यासलोपश्च किति लिटि । नेदतुः । नेदुः ॥

णोपदेशा इति । नर्द-नाटि-नाथ-नाध-नन्द-नक्क-नॄ-नृतधातुव्यतिरिक्ता नकारादिधातवो णोपदेशा बोध्या इत्यर्थः । यथाऽयं नदधातुर्णोपदेशः, परिगणितधातुभिन्नत्वात् । नाटेर्दीर्घाद्धस्य पर्युदासाद्धटादिर्णोपदेश एव । इह नाधनॄनन्दीना केचिण्णोपदेशतामाहु ।

समास इति । 'समासेऽङ्गुलेः सङ्गः' इत्यतोऽनुवर्त्तनात्समासे एव स्यादतोऽसमासग्रहणम् । कृतेऽसमासग्रहणे समासे न स्यादतोऽपेर्ग्रहणं, तेन समासेऽसमासे च भवतीत्याशयः । प्रणिनदतीति । नेर्गदेति णत्वम् । धातुनकारस्य 'उपसर्गादसमासे' इति णत्वन्तु न भवति, अडाद्यतिरिक्तनकार-व्यवधानात् ।

अत एकेति । एकशब्दोऽसहायवाची एकयोर्हलोर्मध्ये इत्यर्थः । तदाह-असंयुक्तेति । इष्टानुरोधेन लिटीत्यावर्त्त्य आदेशविशेषणम्, एत्वनिमित्तञ्च स्वीक्रियते, तदाह- लिण्निमित्तेति । इह 'गमहने'त्यतः क्ङितीत्यनुवर्त्तते । ङितीति तु नानुवर्त्तते, प्रयोजनाऽभावात्, तदाह- कितीति ।

१ उपसर्गस्थनिमित्त से परे णोपदेश धातु के नकार को णकार हो समास में या असमास में ।

२ लिट् को निमित्त मानकर आदेश आदि नहीं हुए हैं जिसको ऐसा जो अङ्ग तदवयव जो असंयुक्त हल्मध्यस्थ अकार उसको एकार हो और अभ्यास का लोप हो कित् लिट् परे रहते ।

**थलि च सेटि[1] ६ । ४ । १२१ ॥**

प्रागुक्तं स्यात् । नेदिथ । नेदथुः । नेद । ननाद-ननद । नेदिव । नेदिम । नदिता । नदिष्यति । नदतु । अनदत् । नदेत् । नद्यात् । अनादीत्—अनदीत् । अनदिष्यत् । टुनदि समृद्धौ ॥८॥

**आदिर्ञिटुडवः[2] १ । ३ । ५ ॥**

उपदेशे धातोराद्या एते इतः स्युः ॥

**इदितो[3] नुम् धातोः ७ । १ । ५८ ॥**

[ इदितो धातोर्नुमागमः स्यात् । ] नन्दति । ननन्द । नन्दिता । नन्दिष्यति । नन्दतु । अनन्दत् । नन्देत् । नन्द्यात् । अनन्दीत् । अनन्दिष्यत् ॥ ९ ॥ अर्च पूजायाम् ॥ अर्चति ।

**तस्मान्नुड् द्विहलः[4] ७ । ४ । ७१ ॥**

द्विहलो धातोर्दीर्घीभूतादकारात्परस्य नुट् स्यात् । आनर्च ।

**अनादीदिति** । अतो हलादेरिति वृद्धिविकल्पः ।

सम्यक् ऋद्धिः—**समृद्धिः** । स्वरूपानुरूपा धनधान्यसम्पत्तिरित्यर्थः ।

'उपदेशेऽच्' इत्यत 'उपदेशे'इत्यनुवर्त्तते तदाह **उपदेशे इति** । एते=ञिटुडवः । इतः=इत्सञ्ज्ञकाः । तेन'तस्य लोप' इति तेषां लोप इत्याशयः ।

**इदिति इति** । इत्-इधस्यासौ-इदित्, तस्य-इदितः । इकारेत्सञ्ज्ञकस्य धातोर्नुमागमो भवतीत्यर्थः । **नन्द्यादिति** । इदित्वादनिदिता हल उपधाया इति नकारलोपो न ।

**तस्मादिति** । तच्छब्देन 'अत आदे'रिति कृतदीर्घोऽकारः परामृश्यते, तदाह **दीर्घीभूतादिति** । अर्चधातोर्लिटि-आनर्च, आनर्चतुः, आनर्चुः ।

१ लिट् को निमित्त मानकर आदेश आदि नहीं हुए हैं जिसको ऐसा जो अङ्ग, तदवयव जो असंयुक्त हल् मध्यस्थ अकार, उसको एकार होय और अभ्यास का लोप हो सेट् थल् परे रहते।

२ उपदेश में धातु के आदि जो ञि टु डु उनकी इत्सञ्ज्ञा हो ।

३ इदित जो धातु उसको नुम् का आगम होय ।

४ द्विहल् धातु का जो दीर्घीभूत आकार उससे जो परे उसको नुट होय ।

आनर्चतुः । अर्चिता । अर्चिष्यति । अर्चतु । आर्चत् । अर्चेत् । अर्च्यात् । आर्चीत् । आर्चिष्यत् ॥

**व्रज गतौ ॥१०॥** व्रजति । वव्राज । व्रजिता । व्रजिष्यति । व्रजतु । अव्रजत् । व्रजेत् । व्रज्यात् ॥

**वदव्रजहलन्तस्याचः ७ । २ । ३ ॥**[1]

वदेर्व्रजेर्हलन्तस्य चाऽङ्गस्याऽचः स्थाने वृद्धिः स्यात्सिचि परस्मैपदेषु । अव्राजीत् । अव्रजिष्यत् ॥

**कटे वर्षाऽऽवरणयोः ॥११॥** कटति । चकाट । चकटतुः । कटिता । कटिष्यति । कटतु । अकटत् । कटेत् । कट्यात् ॥

**ह्मयन्तक्षणश्वसजागृणिश्व्येदिताम् ७ । २ । ५ ॥**[2]

हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्न स्यादिडादौ सिचि । अकटीत् । अकटिष्यत् ॥ **गुपू रक्षणे ॥ १२ ॥**

आनर्चिथ, आनर्चथुः, आनर्च । आनर्च, आनर्चिव, आनर्चिमेति रूपाणि ।

**लोटि**—अर्चतु-अर्चतात्, अर्चताम्, अर्चन्तु । अर्च-अर्चतात्, अर्चतम्, अर्चत । अर्चानि, अर्चाव, अर्चाम ॥ लङि—आर्चत्, आर्चताम्, आर्चन् । आर्चः, आर्चतम्, आर्चत । आर्चम्, आर्चाव, आर्चामेति रूपाणि ॥ आर्चीत्, आर्चिष्टाम्, आर्चिषुः । आर्चीः, आर्चिष्टम्, आर्चिष्ट । आर्चिषम्, आर्चिष्व, आर्चिष्मेति च लुङि रूपाणि ।

**वर्षेति** । वर्षं=वर्षणे, आवरणे=आच्छादने-चेत्यर्थः ।

**हमयेति** । हकारान्तस्य, मकान्तस्य, यकारान्तस्य चेत्यर्थः । **क्षणादेः**= क्षणश्वसजागृधातूनाम् । कटधातोरेदित्वान्न वृद्धिः ।

१ वद धातु व्रज धातु और हलन्त जो अङ्ग तदवयव जो अच् उसको वृद्धि होय परस्मैपदपरक सिच् परे रहते ।

२ हकारान्त, वकारान्त, मकारान्त जो धातु, और क्षणादि, (क्षणश्वसजागृ) तथा ण्यन्त, श्वि और एदित् जो धातु उनको वृद्धि नहीं होय ।

**[1]गुपूधूपविच्छिपणिपनिभ्य आयः ३ । १ । २८ ॥**

एभ्य आयप्रत्ययः स्यात्स्वार्थे ॥

**[2]सनाद्यन्ता धातवः ३ । १ । ३२ ॥**

सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसंज्ञकाः स्युः । धातुत्वाल्लडादयः । गोपायति ॥

**[3]आयादय आर्धधातुके वा ३ । १ । ३१ ॥**

आर्धधातुकविवक्षायामायादयो वा स्युः । *[4]कास्यनेकाच आम् वक्तव्यो लिटि । आस्कासोराम्विधानान्मस्य नेत्वम् ॥

'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ती'त्यभियुक्तोक्तेराह—स्वार्थे इति । सनादयश्च—

**'सन्क्यच्काम्यच्क्यङ्क्यषोऽथाऽऽचारक्विब्णिज्यङौ तथा ।**
**यगाय ईयङ् णिङ् चेति द्वादशाऽमी सनादयः ॥ इति ।**

**सनादय इति ।** सनमारभ्य 'कमेर्णिङ्' इत्येतद्विहितणिङ्प्रत्ययपर्यन्तं द्वादश प्रत्यया अन्ते येषामित्यर्थः । आयप्रत्ययविशिष्टस्य धातुत्वात्, विशिष्टादेव 'वर्तमाने ल'डित्यादिना लडादय इत्यर्थः ।

**विवक्षायामिति ।** परसप्तम्यान्तु आर्धधातुकोपदेशकाले यदकारान्तमित्यनुपपदं वक्ष्यमाणं न सङ्गच्छेतेति भावः । मकारस्येत्सञ्ज्ञायान्तु मित्वादन्त्यादचः परत आमि सति—'अकः सवर्णे' इति दीर्घे च आमूविधानं व्यर्थमेव, आमि सत्यसति वा फलाऽभावादित्याशयः । परे तु आमो मकारस्य नेत्वम्, आमोऽदन्तत्वादित्याहुः ।

---

१ गुप् धूप विच्छ पण और पन इन धातुओं से आय् प्रत्यय होय स्वार्थ में ।

२ सन् से लेकर 'कमेर्णिङ्' पर्यन्त जो प्रत्यय, वे हैं अन्त में जिनके उनकी धातु संज्ञा हो ।

३ आर्धधातुक की विवक्षा में आयादि विकल्प से हों ।

४ कास् धातु और अनेकाच् धातु उनसे आम् हो लिट् परे रहते ।

**अतो लोपः ६ । ४ । ४८ ॥**

आर्धधातुकोपदेशे यदकारान्तं तस्याऽकारस्य लोपः स्यादार्धधातुके ॥[1]

**आमः २ । ४ । ८१ ॥**

आमः परस्य लुक् स्यात् ॥[2]

**कृञ् चानुप्रयुज्यते लिटि ३ । १ । ४० ॥**

आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते । तेषां द्वित्वादि ॥[3]

**उरत् ७ । ४ । ६६ ॥**

अभ्यासऋवर्णस्याऽत्स्यात्प्रत्यये परे । रपरः । हलादिः शेषः । वृद्धिः । गोपायाञ्चकार । द्वित्वात्परत्वाद्यणि प्राप्ते—[4]

---

'ण्यक्षत्रियार्ष-' इत्यतो लुगित्यनुवर्तते, तदाह-लुगिति ।

'कास्प्रत्ययादाम्-' इत्यत आमित्यनुवर्त्तते, तच्च पञ्चम्या विपरिणम्यते, प्रत्ययग्रहणे तदन्तग्रहणं, तदाह—आमन्तादिति । अत्र कृञ्पदेन न कृञ्धातोर्ग्रहणम्, 'आम्प्रत्ययव'दिति सूत्रे कृञ्ग्रहणात्, किन्तु कृञ्प्रत्याहारस्यैव । स च प्रत्याहारः, 'कृभ्वस्तियोगे' इत्यतः 'कृञो द्वितीये'ति ञकारेण तत्र कृञ्प्रत्याहारघटकाः कृभ्वस्तयस्त्रयः, तदाह—कृभ्वस्तय इति । सम्पदिस्तु प्रत्याहारेऽन्तर्भूतोऽपि अनन्वितार्थत्वान्न प्रयुज्यते । तेषाम्=अनुप्रयुज्यमानकृभ्वस्तीनाम् । द्वित्वादि=लिटिधातोरनभ्यासस्येत्यादिना द्वित्वाऽभ्याससञ्ज्ञादि ।

'अत्र लोपः' इत्यतोऽभ्यासस्येत्यनुवर्त्तते । अङ्गस्येत्यधिक्रियते, तस्य च प्रत्ययाक्षेपकत्वं, तदाह—प्रत्यये इति । रपरः—'उरण्रपर' इत्यनेन । वृद्धिः='अचो ञ्णिती'त्यनेन कृञ ऋकारस्य वृद्धिः ।

यणीति । यणि=इको यणचीति यणि । इदमुपलक्षणम्—अचो ञ्णितीति वृद्धेरपि ।

१ आर्धधातुक के उपदेश काल में जो अकारान्त उसका लोप होय आर्धधातुक परे रहते ।

२ आम् से परे जो ( लिट् ) उसका लुक् हो ।

३ आमन्त से परे लिट्परक कृ भू अस् इनका अनुप्रयोग हो ।

४ अभ्यास का जो ऋवर्ण उसको अत् होय प्रत्यय परे रहते ।

## द्विर्वचनेऽचि १ । १ । ५९ ॥

द्वित्वनिमित्तेऽचि परे अच आदेशो न स्याद्द्वित्वे कर्तव्ये[1] । जुगोपायाञ्चकतुः ॥

## एकाच उपदेशेऽनुदात्तात् ७ । २ । १० ॥

उपदेशे यो धातुरेकाजनुदात्तश्च ततः परस्यार्धधातुकस्येण्न स्यात्[2] ।

ऊदृदन्तैर्यौतिरुक्ष्णुशीङ्स्नुनुक्षुश्विडीङ्श्रिभिः ।
वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥

कान्तेषु शक्लेकः । चान्तेषु—पच्-मुच्-रिच्-वच्-विच्-सिचः षट् । छान्तेषु—प्रच्छेकः । जान्तेषु—त्यज्-निजिर्-भज्-भञ्ज्-भुज्-

द्विर्वचनशब्दो द्वित्वनिमित्ते लाक्षणिकः, तेन अचा सामानाधिकरण्यम् । यद्वा—अर्श आद्यजन्तः । तदाह—द्वित्वनिमित्ते इति । 'अचः परस्मि'-न्नित्यतोऽच इति, 'स्थानिवदादेश' इत्यत 'आदेश' इति, 'न पदान्ते'त्यतो 'ने'ति चानुवर्तते । तदाह—अच आदेशो नेति ।

एकाच इति । अत्र 'उपदेशे' इति देहलीदीपकन्यायेन पूर्वोत्तराभ्यां सम्बध्यते । तेन उपदेशे य एकाच्, उपदेशे य अनुदात्त इत्याद्यर्थः । पूर्वान्वयात्पिपक्षतीत्यादाविण्निषेधः सिद्धयति । सम्प्रति द्वित्वेनानेकाच्त्वेऽपि उपदेशे एकाच्त्वात् । उत्तरान्वयस्य—कर्तुं गन्तुमित्यत्रेण्निषेधः फलम्, नित्स्वरेण सम्प्रत्युदात्तत्वेऽप्युपदेशेऽनुदात्तत्वादिति ध्येयम् । नेड्वशीत्यतो 'ने'ति इडिति चानुवर्तते । तदाह—इण्नेति ।

एकाचः=कृआदयो धातवः । निहताः=अनुदात्ताः । अजन्तेषु अनुदात्तानुक्त्वा हलन्तेषु तानाह—कान्तेष्विति ।

१ द्वित्वनिमित्तक अच् परे रहते अच् आदेश नहीं हो द्वित्व करना होतो ।

२ उपदेश में जो एकाच् और अनुदात्त धातु उससे परे आर्धधातुक को इट् नहीं हो ।

भ्रस्ज्-मस्ज्-यज्-युज्-रुज्-रञ्ज्-विजिर्-स्वञ्ज्-सञ्ज-सृजः पञ्चदश। दान्तेषु-अद्-क्षुद्-खिद्-छिद्-तुद्-नुद्-पद्य-भिद्-विद्यतिर्विनद्-विन्द्-शद्-सद्-स्विद्य-स्कन्द्-हदः षोडश। धान्तेषु—क्रुध्-क्षुध्-बुध्-बन्ध्-युध्-रुध्-राध-व्यध्-शुध्-साध्-सिध्या एकादश। नान्तेषु—मन्यहनौ द्वौ। पान्तेषु—आप्-छुप्-क्षिप्-तप्-तिप्-तृप्य दृप्य-लिप्-लुप्-वप्-शप्-स्वप्-सृपस्त्रयोदश। भान्तेषु—यभ्-रभ-लभस्त्रयः। मान्तेषु—गम्-नम्-यम्-रमश्चत्वारः। शान्तेषु—क्रुश् -दंश्-दिश् दृश-मृश्—रिश—रुश्—लिश्—विश्—स्पृशो दश। षान्तेषु—कृष्—त्विष्-तुष्—द्विष्—दुष्—पुष्य—पिष्—विष्—शिष्—शुष्—श्लिष्या—एकादश। सान्तेषु—घस्—वसती द्वौ। हान्तेषु—दह्—दिह्—दुह्—नह्—मिह्—रुह्—लिह्—वहोऽष्टौ।

अनुदात्ता हलन्तेषु धातवस्त्र्यधिकं शतम् (१०३)॥

गोपायाञ्चकर्थ। गोपायाञ्चक्रथुः। गोपायाञ्चक्र। गोपायाञ्चकार-गोपायाञ्चकर। गोपायाञ्चकृव। गोपायाञ्चकृम। गोपायाम्बभूव। गोपायामास। जुगोप। जुगुपतुः। जुगुपुः॥

[१]स्वरतिसूतिसूयतिधूञूदितो वा ७।२।४४॥

स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड्वा स्यात्।

उपसंहरति-अनुदात्ता इति। विन्दतेरपि ग्रहणादेषा(१०३)सङ्ख्येति भावः। एवञ्च प्रकृते कृधातोरजन्तस्य परिगणितबहिर्भूतत्वेनाऽनुदात्ततया थलि 'एकाच' इतीण्निषेधो भवति। तदाह-गोपायाञ्चकर्थेति। गुप्धातोर्लुङि पक्षे-अगोपायीत्, अगोपायिष्टाम्, अगोपायिषुः। अगोपायीः, अगो-

१ स्वरत्यादि जो धातु और ऊदित् जो धातु उनसे परे जो वलादि आर्धधातुक उसको इट् का आगम हो विकल्प करके।

जुगोपिथ-जुगोप्थ । गोपायिता-गोपिता-गोप्ता । गोपायिष्यति, गोपिष्यति-गोप्स्यति । गोपायतु । अगोपायत् । गोपायेत् । गोपाय्यात्—गुप्यात् । अगोपायीत् ॥

**नेटि ७ । २ । ४ ॥**

इडादौ सिचि हलन्तस्य वृद्धिर्न स्यात् । अगोपीत् । अगौप्सीत् ॥

**झलो झलि ८ । २ । २६ ॥**

झलः परस्य सस्य लोपः स्याज्झलि । अगौप्ताम् । अगौप्सुः । अगौप्सीः । अगौप्तम् । अगौप्त । अगौप्सम । अगौप्स्व । अगौप्स्म । अगोपायिष्यत् । अगोपिष्यत् । अगोप्स्यत् ॥

**क्षि क्षये ॥ १२ ॥** क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । 'एकाच' इतीण्निषेधे प्राप्ते—

**[3]कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ७ । २ । १३ ॥**

क्रादिभ्य एव लिट इण्न स्यादन्यस्मादनिटोऽपि स्यात् ॥

---

पायिष्टम्, अगोपायिष्ट । अगोपायिषम्, अगोपायिष्व, अगोपायिष्म ॥ अगोपीत्, अगोपिष्टाम्, अगोपिषुः । अगोपीः, अगोपिष्टम्, अगोपिष्ट । अगोपिषम् । अगोपिष्व, अगोपिष्मेत्यादि रूपाणि ।

चिक्षियतुरित्यत्र—'अचि श्नुधातु'तीयङ् । निषेधे प्राप्ते=परिगणितबहिर्भूततयाऽनुदात्तत्वेन थलादौ परत इण्निषेधे प्राप्ते । 'सूत्राण्यवतार्यन्ते' इति शेषः ।

---

१ इडादि सिच् परे रहते हलन्त को वृद्धि नहीं हो ।

२ झल् से परे जो सकार उसका लोप होय झल् परे रहते ।

३ क्रादि से ही परे जो लिट् उसको इट् नहीं हो अन्य जो अनिट् धातु उनसे परे जो लिट उसे तो इट् हो ।

**अचस्तास्वत्थल्यनिटो नित्यम् ७ । २ । ६१ ॥**

उपदेशेऽजन्तो यो धातुस्तासौ नित्याऽनिट् ततस्थल इण्न स्यात्।

**उपदेशेऽत्वतः ७ । २ । ६२ ॥**

उपदेशेऽकारवतस्तासौ नित्याऽनिटः परस्य थल इण् न स्यात्।

**ऋतो भारद्वाजस्य ७ । २ । ६३ ॥**

तासौ नित्याऽनिट ऋदन्तादेव थलो नेट् भारद्वाजस्य मतेन । तेनाऽन्यस्य स्यादेव ।

अयमत्र सङ्ग्रहः

**अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् ।**
**ऋदन्त ईदृङ् नित्याऽनिट् क्राद्यन्यो लिटि सेड् भवेत्॥**

अयमत्रेति । 'कृसृभृवृ' इत्यादिसूत्रचतुष्टयेन यल्लभ्यं तस्यायं सङ्क्षेप इत्यर्थः ।

अजन्त इति । यो धातुरजन्तः तासि (लुटि) परतो नित्यमनिट् च, तत परस्य थल इड्वा भवति । यथाऽयं क्षिधातुरजन्तः, तासौ नित्यानिट् च, क्षेतेत्यत्र इटोऽभावात्,अतस्ततः परस्य थल इड्वा भवति । चिक्षयिथ–चिक्षेथेति। 'अचस्तास्व'दिति, 'ऋतो भारद्वाजस्ये'ति सूत्रद्वयेन चाऽयमर्थो लभ्यते । किञ्च

अकारवान् यो धातुस्तासौ नित्यानिट् ततः परस्य थल इड्वा भवति । यथा पच्धातुस्तासौ नित्याऽनिट्-(पक्तेति हि तत्र रूपम्)। एवञ्च–ततः परस्य

१ उपदेश में अजन्त जो धातु, तास् परे रहते नित्य अनिट्,–उससे परे जो थल् उसको इट् नहीं हो ।

२ उपदेश में जो अकारवान् धातु–तास् परे रहते नित्य अनिट्–उसको थल् पर रहते इट् नहीं हो ।

३ तास् पर रहते नित्य अनिट् जो ऋदन्त धातु इसको ही थल् परे रहते इट् नहीं हो भारद्वाज के मत में। अन्य धातुओं को तो भारद्वाज के मत में इट् होता है ।

४ अजन्त या अकारवान् धातु जो तास् (लुट) परे रहते नित्य अनिट् हो उसको थल् परे रहते विकल्प से इट् होता है । ऋदन्त धातु–जो तास् परे रहते अनिट् हो–उससे परे थल् को नित्य ही इट् नहीं होता है।

चिक्षियिथ—चिक्षेथ । चिक्षियथुः । चिक्षिय । चिक्षाय—चिक्षय । चिक्षियिव । चिक्षियिम । क्षेता । क्षेष्यति । क्षयतु । अक्षयत् । क्षयेत् ।

१अकृत्सार्वधातुकयोर्दीर्घः ७ । ४ । २५ ॥

अजन्ताङ्गस्य दीर्घः स्याद्यादौ प्रत्यये परे न तु कृत्सार्वधातुकयोः । क्षीयात् ॥

थल इड्वा भवति—पेचिथ—पपक्थेति । अयमर्थश्च—'उपदेशेऽत्वत' इति 'ऋतो भारद्वाजस्ये'ति च सूत्रद्वयप्रवृत्त्या लभ्यते ।

किञ्च—

यो धातुः—ऋकारान्तस्तासि परतो नित्यानिट् ततः परस्य थल इण्न भवति । भारद्वाजमतेऽपि अन्येषां मतेऽपि च तत्र इण्न भवतीत्याशयः । यथा—'हृञ् हरणे'—धातुस्तासौ नित्यमनिट्, ( हर्तेति रूपात् ) । एवञ्च—ततः परस्य थल इण्न, जहर्थेति । अयमर्थश्च—'ऋतो भारद्वाजस्ये'ति, 'अचस्तास्व'—दिति च सूत्रद्वयप्रवृत्त्या लभ्यते ।

किञ्च—

क्रादिभिन्नः सर्वोऽपि धातुर्लिटि सेड्भवति । क्रादयस्तु लिटि नित्यानिट इत्याशयः । एवञ्च—क्रादीनामष्टानां थलि परतो वमादिषु च—चकर्थ, चकृव, इत्यादौ सर्वत्र इडभावः । एवं नित्यानिटोऽपि धातोः परेषां वमादीनां नित्यमिड्भवतीति लब्धम् । एतच्च 'कृसृभृवृ' इति नियमार्थेन सूत्रेण लभ्यते इत्यवधेयम् ।

**चिक्षयिथेति** । क्षिधातोरनुदात्ततया तासौ नित्यानिटः परस्य थलः—'अचस्तास्व'दितीण्निषेधे 'चिक्षेथे'ति, 'ऋतो भारद्वाजस्ये'ति सूत्रेण इटि च—'चिक्षयिथे'ति रूपमिति भावः । अत्र क्राद्यतिरिक्ततया क्रादिनियमादिट् ।

कृसृभृवृ स्तुद्रुस्रुश्रु इनसे भिन्न जो धातु वह लिट् में सेट् होता है ।

१ अजन्त अङ्ग को दीर्घ हो, यकारादि प्रत्यय परे रहते, (परन्तु) कृत्सार्वधातुक परे रहते नहीं होय ।

**सिचि वृद्धिः परस्मैपदेषु ७ । २ । १ ॥**

इगन्ताङ्गस्य वृद्धिः स्यात् परस्मैपदपरे सिचि । अक्षैप्सीत् । अक्षेप्स्यत् । तप सन्तापे ॥ १४ ॥ तपति । तताप । तेपतुः । तेपुः । तेपिथ–ततप्थ । तेपिव । तेपिम । तप्ता । तप्स्यति । तपतु । अतपत् । तपेत् । तप्यात् । अताप्सीत् । अताप्ताम् । अतप्स्यत् ॥

**क्रमु पादविक्षेपे ॥ १५ ॥**

**वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः । ३ । १ । ७० ॥**

एभ्यः श्यन्वा स्यात् कर्त्रर्थे सार्वधातुके परे । पक्षे शप् ॥

**क्रमः परस्मैपदेषु ७ । ३ । ७६ ॥**

क्रमेर्दीर्घः स्यात् परस्मैपदे शिति । क्राम्यति–क्रामति । चक्राम । क्रमिता । क्रमिष्यति । क्राम्यतु–क्रामतु । अक्राम्यत्,

---

लुङि–अक्षैप्सीत्, अक्षैप्ताम्, अक्षैप्सुः । अक्षैप्सीः, अक्षैप्तम्, अक्षैप्त । अक्षैप्सम्, अक्षैप्स्व, अक्षैप्स्मेति रूपाणि । सन्तापः=तपनं, क्लेशश्च । अकर्मकोऽयम् । सूर्यस्तपति । चैत्रस्तपति । तेपतुरित्यत्र 'अत एकहल्मध्ये' इत्येत्त्वाभ्यासलोपौ ।

भारद्वाजमते इटि 'थलि च सेटी' त्येत्त्वाभ्यासलोपे च 'तेपिथे'ति रूपम् । 'उपदेशेऽत्वत' इतीण्निषेधे च 'ततप्थे'ति रूपम् ।

तेपिवेति । क्रादिनियमान्नित्यमिट् । एवं तेपिमेत्यत्रापि बोध्यम् ।

लुङि अताप्सीत्, अताप्ताम्, अताप्सुः । अताप्सीः, अताप्तम्, अताप्त । अताप्सम्, अताप्स्व, अताप्स्मेति रूपाणि ।

पादविक्षेपः=चलनम् । अकर्मकोऽयमत्रार्थे क्रमुधातुः ।

---

१ इगन्त अङ्ग को वृद्धि हो परस्मैपदपरक सिच् परे रहते ।

२ भ्राश भ्लाश भ्रमु क्रमु क्लमु त्रसि त्रुटि लष इन धातुओं से विकल्प से श्यन् हो कर्त्रर्थक सार्वधातुक परे रहते ।

३ क्रम धातु को दीर्घ हो परस्मैपदपरक शित् परे रहते ।

अक्रामत् । क्राम्येत्—क्रामेत् । क्रम्यात् । अक्रमीत् । अक्रमिष्यत् ॥

पा पाने ॥ ८ ॥

[1]पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ७।३।७८॥

पादीनां पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे । पिबादेशोऽदन्तस्तेन न गुणः । पिबति ॥

[2]आतः औ णलः ७ । १ । ३४ ॥

आदन्ताद्धातोर्णल औकारादेशः स्यात् । पपौ ॥

[3]आतो लोप इटि च ६ । ४ । ६४ ॥

अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः स्यात् । पपतुः । पपुः । पपिथ—पपाथ । पपथुः । पप । पपौ । पपिव । पपिम । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् ॥

अक्रमीदित्यत्र 'अतो हलादे'रिति वृद्धिर्न, ह्म्यन्तेति निषेधात् ।

**पाघ्रेति** । पा—इत्यस्य—पिबादेशः । घ्रा—इत्यस्य—जिघ्रादेशः । ध्मा—इत्यस्य—धमादेशः । स्था—इत्यस्य तिष्ठादेशः, म्ना—इत्यस्य—मनादेशः । दाणो यच्छादेशः । दृशः—पश्यादेशः । ऋ—इत्यस्य ऋच्छादेशः । सृ—इत्यस्य—'धौ' इत्यादेशः । शदः—शीयादेशः । सदः—सीदादेश इत्यर्थः ।

**अदन्त इति** । अन्यथा पुगन्तेति गुणादेशापत्तिः । पिबतीत्यत्र शबकारस्य च 'अतो गुणे' इति पररूपम् ।

**पपिथेति** । अजन्ततया तासौ नित्यानिट्कतया च थलि वैकल्पिके इटि आतो लोपे—पपिथेति रूपम्, इडभावे च पपाथेति रूपम् । भारद्वाजमते इट्, अन्येषां मते नेडिति विवेकः ।

१ पादि धातुओं को पिबादि आदेश हो इत्संज्ञक शकारादि प्रत्यय परे रहते ।

२ आदन्त धातु से परे जो णल् उसको औकार आदेश हो ।

३ अजादि कित् ङित् आर्धधातुक और इट्—ये परे रहते आकार का लोप हो ।

## एर्लिङि ६ । ४ । ६७ ॥

धुसंज्ञकानां मास्थादीनां च एत्वं स्यादार्धधातुके किति लिङि । पेयात् । गातिस्थेति सिचो लुक् । अपात् । अपाताम् ॥

## आतः ३ । ४ । ११० ॥

सिज्लुकि आदन्तादेव झेर्जुस् स्यात् ॥

## उस्यपदान्तात् ६ । १ । ९६ ॥

अपदान्तादकारादुसि परे पररूपमेकादेशः स्यात् । अपुः । अपास्यत् ॥ ग्लै हर्षक्षये ॥ १७ ॥ ग्लायति ॥

## आदेच उपदेशेऽशिति ६ । १ । ४५ ॥

उपदेशे एजन्तस्य धातोरात्वं स्यान्न तु शिति । जग्लौ । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् ।

## वाऽन्यस्य संयोगादेः ६ । ४ । ६८ ॥

हर्षक्षयः=धातुक्षयः । ( मुर्झाना, उदास होना ) । अकर्मकोऽयम् । लिटि जग्लौ, जग्लतुः, जग्लुः । जग्लिथ-जग्लाथ, जग्लथुः, जग्ल । जग्लौ, जग्लिव, जग्लिमेति ग्लाधातो रूपाणि ।

---

१ घुसंज्ञक जो धातु और मा स्थादि जो धातु उनको एत्व हो आर्धधातुक कित् लिङ् परे रहते ।

२ सिज्लुक् होने पर आदन्त धातु से ही परे जो झि उसी को जुस् हो । अन्य को नहीं हो ।

३ अपदान्त अकार से उस् परे रहते पूर्व पर के स्थान में पररूप एकादेश हो ।

४ उपदेश मे एजन्त जो धातु उसको आत्व हो, शित् परे रहते नहीं हो ।

५ घुमास्थादि से अन्य जो संयोगादि धातु उसके आकार को एकार हो विकल्प करके आर्द्धधातुक लिङ् परे रहते ।

घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वा स्यादार्धधातुके किति लिङि । ग्लेयात्-ग्लायात् ॥

**[1]यमरमनमातां सक् च ७ । २ । ७३ ॥**

एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु । अग्लासीत् । अग्लास्यत् । **हृ कौटिल्ये ॥ १८ ॥** ह्वरति ॥

**[2]ऋतश्च संयोगादेर्गुणः ७ । ४ । १० ॥**

ऋदन्तस्य संयोगादेरङ्गस्य गुणः स्याल्लिटि । उपधाया वृद्धिः । जह्वार । जह्वरतुः । जह्वरुः । जह्वर्थ । जह्वरथुः । जह्वर । जह्वार-जह्वर । जह्वरिव । जह्वरिम । ह्वर्ता ॥

**[3]ऋद्धनोः स्ये ७ । २ । ७० ॥**

ऋतो हन्तेश्च स्यस्येट् स्यात् । ह्वरिष्यति । ह्वरतु । अह्वरत् । ह्वरेत् ॥

'अञ्जेः सिची'त्यतः 'सिची'ति, 'स्तुसुधूञ्भ्यः' इत्यतः परस्मैपदे'ष्विति, 'आर्धधातुकस्ये'डित्यत इडिति चानुवर्त्तते । सिचीति षष्ठ्या विपरिणम्यते, तदाह-**सिच इडिति** । अग्लासीत्, अग्लासिष्टाम्, अग्लासिषुः । अग्लासीः, अग्लासिष्टम्, अग्लासिष्ट । अग्लासिषम्, अग्लासिष्व, अग्लासिष्मेति लुङि रूपाणि । **कौटिल्यं**-कुटिलता । अत्रार्थेऽयमकर्मकः ।

**जह्वर्थेति** । ऋदन्तत्वान्नेट्, 'ऋदन्त ईदृङ्नित्यानिट्' इत्युक्तेः ।

**जह्वरिवेति**। क्रादिनियमान्नित्यमिट् । 'क्राद्यन्यो लिटि सेड्भवे'दित्युक्तेः।

१ यम् रम् नम् और आदन्त जो धातु इनको सक् का आगम हो और इनसे परे जो सिच् उसको इट् का आगम हो परस्मैपद परे रहते ।

२ ऋदन्त जो संयोगादि अङ्ग उसको गुण हो लिट् परे रहते ।

३ ऋदन्त जो धातु और हन् धातु उससे परे जो स्य उसको इट् का आगम हो ।

**ऋतश्च संयोगादेः ७ । ४ । १०. ॥**

ऋतः संयोगादेर्ऋदन्तस्य च गुणः स्याद्यकि यादावार्धधातुके लिङि च । ह्वर्यात् । अह्वार्षीत् । अह्वरिष्यत ॥ श्रु श्रवणे ॥१९॥

**श्रुवः शृ च ३ । १ । ७४ ॥**

श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च । शृणोति ।

**सार्वधातुकमपित् १ । २ । ४ ॥**

अपित्सार्वधातुकं ङिद्वत् स्यात् । शृणुतः ॥

**हुश्नुवोः सार्वधातुके ६ । ४ । ८७ ॥**

जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्य चाऽसंयोगपूर्वोवर्णस्य यण् स्यादजादौ सार्वधातुके । शृण्वन्ति । शृणोषि । शृणुथः । शृणुथ । शृणोमि ॥

**लोपश्चास्यान्यतरस्यां म्वोः ६ । ४ । १०७ ॥**

असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा स्यात् म्वोः परयोः ।

---

अह्वार्षीत्, अह्वार्ष्टाम्, अह्वार्षुः । अह्वार्षीः, अह्वार्ष्टम्, अह्वार्ष्ट । अह्वार्षम्, अह्वार्ष्व, अह्वार्ष्मेति लुङि रूपाणि ।

शृणोतीत्यत्र श्नुप्रत्ययस्य पित्त्वेन सार्वधातुकतया ङित्वान्निवर्तत चेति

---

१ ऋधातु और संयोगादि जो ऋदन्त धातु उनको गुण हो यक् परे रहते और यादि आर्धधातुक परे रहते ।

२ श्रु धातु को शृ आदेश हो और श्नुप्रत्ययभी हो ।

३ पित् भिन्न जो सार्वधातुक सो ङिद्वत् हो ।

४ हु धातु और श्नुप्रत्ययान्त जो अनेकाच् अङ्ग तदवयव जो असंयोगपूर्वक उवर्ण उसको यण् आदेश हो अजादि प्रत्यय परे रहते ।

५ असंयोगपूर्वक जो प्रत्यय का उकार उसका लोप हो विकल्प करके, वकार मकार परे रहते ।

शृण्वः शृणुवः। शृण्मः—शृणुमः। शुश्राव। शुश्रुवतुः। शुश्रुवुः। शुश्रोथ। शुश्रुवथुः। शुश्रुव। शुश्राव शुश्रव। शुश्रुव। शुश्रुम। श्रोता। श्रोष्यति। शृणोतु-शृणुतात्। शृणुताम्। शृण्वन्तु॥

**उतश्च प्रत्ययादसंयोगपूर्वात्** ६।४।१०६॥[1]

असंयोगपूर्वो यः प्रत्ययोकारस्तदन्तादङ्गात्परस्य हेर्लुक् स्यात्। शृणु-शृणुतात्। शृणुतम्। शृणुत। गुणाऽवादेशौ। शृणवानि। शृणवाव। शृणवाम। अशृणोत्। अशृणुताम्। अशृण्वन्। अशृणोः। अशृणुतम्। अशृणुत। अशृणवम्। अशृण्व—अशृणुव। अशृण्म-अशृणुम। शृणुयात्। शृणुयाताम्। शृणुयुः। शृणुयाः। शृणुयातम्। शृणुयात। शृणुयाम्। शृणुयाव। शृणुयाम। श्रूयात्। अश्रौषीत्। अश्रोष्यत्॥ **गम्लृ गतौ॥ २०॥**

**इषुगमियमां छः**।७।३।७७॥[2]

एषां छः स्यात्-शिति। गच्छति। जगाम॥

**गमहनजनखनघसां लोपः क्ङित्यनङि**।६।४।९८॥[3]

एषामुपधाया लोपः स्यादजादौ क्ङिति न त्वङि। जग्मतुः।

ऋकारस्य गुणनिषेधः। **शुश्रोथेत्यत्र** श्रुधातोः क्राद्यन्तर्गतत्वान्नेट्। **शुश्रुमेति**। 'कृसृभृवृ' इतीडभावः।

लुङि-अश्रौषीत्, अश्रौष्टाम्, अश्रौषुः। अश्रौषीः, अश्रौष्टम्, अश्रौष्ट। अश्रौषम्, अश्रौष्व, अश्रौष्म इति रूपाणि। **गताविति**। गत्यर्थे सकर्मकोऽयम्।

१ असंयोग पूर्वक जो प्रत्यय का उकार तदन्त जो अङ्ग उससे परे जो हि उसका लुक् होय।

२ इष् गम् यम् इन धातुओं को छ आदेश हो शित् परे रहते।

३ गम् हन् जन् खन् घस् इनकी उपधा का लोप हो अजादि कित् ङित् प्रत्यय परे रहते। अङ् परे रहते नहीं हो।

जग्मुः । जगमिथ–जगन्थ । जग्मथुः । जग्म । जगाम–जगम । जग्मिव । जग्मिम । गन्ता ।

गमेरिट् परस्मैपदेषु ७ । २ । ५८ ॥

गमेः परस्य सादेरार्धधातुकस्येट् स्यात् परस्मैपदेषु । गमिष्यति । गच्छतु । अगच्छत् । गच्छेत् । गम्यात् ॥

पुषादिद्युताद्यॢदितः परस्मैपदेषु । ३ । १ । ५५ ॥

श्यन्विकरणपुषादेर्द्युतादेर्ॢदितश्च परस्य च्लेरङ् स्यात् परस्मैपदेषु । अगमत् । अगमिष्यत् ॥

इति परस्मैपदिनः ॥

एध वृद्धौ ॥ २१ ॥

टित आत्मनेपदानां टेरे ३ । ४ । ७९ ॥

टितो लस्यात्मनेपदानां टेरेत्वं स्यात् । एधते ॥

---

जगमिथेति । भारद्वाजमते इट्, अन्येषान्तु 'उपदेशेऽत्वतः' इत्युक्तेर्नेट् । जग्मिवेत्यादौ तु क्रादिनियमान्नित्यमिट् ।

वृद्धाविति । वृद्धावयं धातुरकर्मकः ।

'लज्जा-सत्ता-स्थिति-जागरणं वृद्धि-क्षय-भय-जीवित-मरणम् ।
स्वप्न-क्रीडा-रुचि-दीप्त्यर्थं धातुगणन्तमकर्मकमाहुः ॥' इत्युक्तेः ।

टितः–षष्ठ्यन्तम्, आत्मनेपदानां–षष्ठ्यन्तम्, टेः–षष्ठ्यन्तम्, ए–लुप्त-

---

१ गम् से परे जो सादि आर्धधातुक उसको इट् का आगम हो परस्मैपद परे रहते ।

२ श्यन्विकरण जो पुषादि और द्युतादि और ॢदित् इनसे परे जो च्लि उसको अङ् हो परस्मैपद परे रहते ।

३ टित् लकार सम्बन्धी जो आत्मनेपद उनकी टि उसको एत्व हो ।

**आतो ङितः ७ । २ । ८१ ॥**

अतः परस्य ङितामाकारस्य इय् स्यात् । एधेते । एधन्ते ।

**थासः से ३ । ४ । ८० ॥**

टितो लस्य थासः से स्यात् । एधसे । एधेथे । एधध्वे । अतो गुणे । एधे । एधावहे । एधामहे ॥

**इजादेश्च गुरुमतोऽनृच्छः ३ । १ । ३६ ॥**

इजादिर्यो धातुर्गुरुमान्-ऋच्छत्यन्यस्तत आम् स्याल्लिटि ।

**आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य १ । ३ । ६३ ॥**

आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदं स्यात् ॥

**लिटस्तझयोरेशिरेच् ३ । ४ । ८१ ॥**

प्रथमान्तम् । आतः–षष्ठ्यन्तम्, ङितः–षष्ठ्यन्तम् ।

**एते इति** । इट एत्वे कृते आद्गुणं बाधित्वा वृद्धौ प्राप्तायामतो गुणे इति पररूपमित्यर्थः । **इजादेः**—पञ्चम्यन्तं, गुरुमतः पञ्चम्यन्तम्, अनृच्छः पञ्चम्यन्तम् । आम्प्रत्ययान्तस्यात्मनेपदाऽभावादाह—**अतद्गुणेति** । तस्य गुणाः–वर्त्तिपदार्थाः–तद्गुणाः–संविज्ञायन्ते यत्रासौ–तद्गुणसंविज्ञानः, तद्भिन्नः–अतद्गुणसंविज्ञानः । 'आम्प्रत्यय'शब्देन–आम्प्रत्ययस्य प्रकृतिर्धातुर्गृह्यते । तृतीयान्ताद्वृतिः । तदाह–**आम्प्रकृत्येति** । सा च प्रकृते एध धातुरिति बोध्यम् । अनुप्रयोगे इत्यत्र कर्मणि घञ् । तदाह **अनुप्रयुज्येति** ।

१ ह्रस्व अकार से परे जो ङित्सम्बन्धी आकार उसको इय् आदेश हो ।

२ टित् लकार सम्बन्धी जो थास् उसको से आदेश हो ।

३ इजादि जो गुरुमान् धातु, ऋच्छति से अन्य, उससे आम् हो ।

४ अनुप्रयुज्यमान जो कृञ् धातु उससे आम्प्रकृति के तुल्य आत्मनेपद हो । (अर्थात् आम्प्रकृति यदि आत्मनेपदी हो तो कृञ् से भी आत्मनेपद हो अन्यथा नहीं)

५ लिडादेश जो त और झ उनको एश् और इरेच् ये आदेश हों ।

लिडादेशयोस्तशयोरेश् इरेजित्येतावादेशौ स्तः । एधाञ्चक्रे । एधाञ्चक्राते । एधाञ्चक्रिरे । एधाञ्चकृषे । एधाञ्चक्राथे ॥

**इणः षीध्वंलुङ्लिटां धोऽङ्गात् ८ । ३ । ७८ ॥**[1]

इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य ढः स्यात् । एधाञ्चकृढ्वे । एधाञ्चक्रे । एधाञ्चकृवहे । एधाञ्चकृमहे । एधाम्बभूव । एधामास । एधिता । एधितारौ । एधितारः । एधितासे । एधितासाथे ।

**धि च ८ । २ । २५ ॥**[2]

धादौ प्रत्यये परे सस्य लोपः स्यात् । एधिताध्वे ।

**ह एति ७ । ४ । ५२ ॥**[3]

तासस्त्योः सस्य हः स्यादेति परे । एधिताहे । एधितास्वहे । एधितास्महे । एधिष्यते । एधिष्येते । एधिष्यन्ते । एधिष्यसे । एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्यावहे । एधिष्यामहे ।

**आमेतः ३ । ४ । ९० ॥**[4]

लोट एकारस्य आम् स्यात् । एधताम् । एधेताम् । एधन्ताम् ॥

---

एधाञ्चकृषे इत्यत्र क्राद्यन्तर्गतत्वान्नेट् ।

**एधामासेति ।** अनुप्रयोगसामर्थ्यादस्तेर्भूभावो न,अन्यथा 'कथानुपयुज्यते' इति, 'कृभ्वि'ति वा ब्रूयात् ।

---

१ इणन्त अङ्ग से परे जो षीध्वम् , और लुङ् लिट् सम्बन्धी धकार उसको ढकार हो ।

२ धादि प्रत्यय परे रहते स का लोप हो ।

३ तास् और अस्ति का जो सकार उसको 'ह' आदेश हो एकार परे रहते ।

४ लोट् सम्बन्धी जो एकार उसको आम् हो ।

## [१]सवाभ्यां वाऽमौ ३ । ४ । ९१ ॥

सवाभ्यां परस्य लोडेतः क्रमाद्वाऽमौ स्तः । एधस्व । एधेथाम् । एधध्वम् ॥

## [२]एत ऐ ३ । ४ । ९३ ।

लोडुत्तमस्य एत ऐ स्यात् । एधै । एधावहै । एधामहै ॥

आटश्च । ऐधत । ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि ॥

## [३]लिङः सीयुट् ३ । ४ । १०२ ॥

[ लिङादेशाना सीयुडागमः स्यात् ] । सलोपः । एधेत । एधेयाताम् ।

## [४]झस्य रन् ३ । ४ । १०५ ।

लिङो झस्य रन् स्यात् । एधेरन् । एधेथाः । एधेयाथाम् । एधेध्वम् ।

## [५]इटोऽत् ३ । ४ । १०६ ॥

लिङादेशस्य इटोऽत्स्यात् । एधेय । एधेवहि । एधेमहि ॥

## [६]सुट् तिथोः ३ । ४ । १०७ ॥

**सलोपः**='लिङः सलोप' इत्यनेन सीयुटः सस्य लोपः ।

१ सकार वकार से परे जो लोट् सम्बन्धी—एकार उसको क्रम से व और अम् आदेश होता है । [ अर्थात् 'स' से परे जो 'ए' उसको 'व', 'व' से परे जो 'ए' उसको 'अम्' होता है ] ।

२ लोट् सम्बन्धी उत्तम पुरुष का जो एकार उसको ऐकार होता है ।

३ लिङ् के स्थान में जो तिबादि आदेश उनको सीयुट् का आगम होता है ।

४ लिङ् सम्बन्धी जो झ उसको रन् आदेश होता है ।

५ लिङ्स्थानिक जो इट् उसको अत् आदेश होता है ।

६ लिङ् सम्बन्धी जो तकार थकार उनको सुट् का आगम होता है ।

लिङस्तकारथकारयोः सुट् स्यात् । सलोपः । आर्धधातुकत्वात्सलोपो न । एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् । एधिषीष्ठाः । एधिषीयास्थाम् । एधिषीध्वम् । एधिषीय । एधिषीवहि । एधिषीमहि ॥ ऐधिष्ट । ऐधिषाताम् ॥

[1]आत्मनेपदेष्वनतः ७ । १ । ५ ॥

अनकारात्परस्यात्मनेपदेषु झस्य अदित्यादेशः स्यात् । ऐधिषत । ऐधिष्ठाः । ऐधिषाथाम् । ऐधिढ्वम् । ऐधिषि । ऐधिष्वहि । ऐधिष्महि । ऐधिष्यत । ऐधिष्येताम् । ऐधिष्यन्त । ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्यध्वम् । ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि ॥ कमु कान्तौ ॥ २ ॥

[2]कमेर्णिङ् ३ । १ । ३० ॥

कमेर्णिङ् स्यात्स्वार्थे । ङित्वात्तङ् । कामयते ।

---

सलोपो नेति । आशीर्लिङ आर्धधातुकतया सार्वधातुकत्वाऽभावाल्लिङः सलोपोऽनन्त्यस्येति सीयुटः सकारस्य लोपो न भवतीत्यर्थः ।

आत्मनेपदेषु-सप्तम्यन्तम्, अनतः=पञ्चम्यन्तम् । अनतः=अकारातिरिक्तवर्णाव्यवहितोत्तरवर्त्तिनः ।

ऐधिढ्वमिति । ध्वमि परतः सिजन्तस्याङ्गसञ्ज्ञकतया सिचो लोपे इकारान्तस्य 'ऐधि' इत्यस्याङ्गतया इणन्ताङ्गाद्धाढत्वप्रवृत्तिः । एधिषीध्वमित्यत्र तु 'एध्' इत्येवाङ्गम्, इषीध्वमिति तु प्रत्ययः, 'एध्' इति च नेणन्तमङ्गमिति तत्र नानेन ढत्वमिति विवेकः । कान्तिः=इच्छा । सकर्मकोऽयम् । 'चैत्रो धनं कामयते'इत्यादिश्च प्रयोगः । स्वार्थे इति । 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ती'त्युक्तेः स्वार्थे एवाय णिङित्याशयः । तङिति । 'अनुदात्तङित' इति सूत्रेण कामिधातोर्लडादेः स्थाने आत्मनेपदसञ्ज्ञकस्तङित्यर्थः ।

१ अनकार से परे जो आत्मनेपद सम्बन्धी झ उसको अत् आदेश होता है ।
२ कम् धातु से णिङ् प्रत्यय हो स्वार्थ में ।

[1] अयामन्ताल्वाय्येत्न्विष्णुषु ६ । ४ । ५५ ॥

आम् अन्त आलु आय्य इत्नु इष्णु एषु णेरयादेशः स्यात् । कामयाञ्चक्रे । आयादय इति णिङ् वा । चकमे । चकमाते । चकमिरे । चकमिषे । चकमाथे । चकमिध्वे । चकमे । चकमिवहे । चकमिमहे । कामयिता । कामयितासे । कमिता । कामयिष्यते । कमिष्यते । कामयताम् । अकामयत । कामयेत । कामयिषीष्ट ॥

[2] विभाषेटः ८ । ३ । ७९ ॥

इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः स्यात् । कामयिषीढ्वम्–कामयिषीध्वम् । कमिषीष्ट । कमिषीध्वम् ॥

[3] णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३ । १ । ४८ ॥

ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि परे ।

अ कामि अ त इति स्थिते

अकामीति । यथा प्रकृते–'अ–चकम्–इ–अ–ते'त्यत्र चङ्परो यस्मादेवभूते णौ परतो यदङ्गम्–'अचकम्' इति, तदवयवो योऽभ्यासः–चकाररूपः, स च लघुपरोऽपि भवति, स्वोत्तरस्य ककारोत्तराकारस्य लघोर्विद्यमानत्वात्, एवञ्च चकारात्मकस्याभ्यासस्य सनि परतो यत्कार्यमित्वादि तदनेनातिदिश्यते । तदेवम्–अचीकमतेत्यत्र सन्वद्भावात्सन्यत इति दीर्घो लघोरिति च सूत्रद्वयं प्रवर्त्तते इत्यवधेयम् ।

१ आम् अन्त–आलु–आय्य–इत्नु–इष्णु–ये प्रत्यय परे रहते णि के स्थान में अय आदेश हो ।

२ इण् से परे जो इट् उससे परे जो षीध्व लुङ् लिट् सम्बन्धी धकार उसको ढकार आदेश विकल्प से हो ।

३ ण्यन्त से परे और श्रि द्रु स्रु इन धातुओं से परे जो च्लि उसको चङ् आदेश हो कर्त्रर्थक लुङ् परे रहते ।

णेरनिटि ६ । ४ । ५१ ॥

अनिडादावार्धधातुके परे णेर्लोपः स्यात् ॥[1]

णौ चङ्युपधाया ह्रस्वः ७ । ४ । १ ॥

चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् ॥[2]

चङि ६ । १ । ११ ॥

चङि परेऽनभ्यासधात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेस्तु द्वितीयस्य ॥[3]

सन्वल्लघुनि चङ्परेऽनग्लोपे ७ । ४ । ९३ ॥

चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति ॥[4]

सन्यतः ७ । ४ । ७९ ॥

अभ्यासस्याऽत इत् स्यात् सनि ।[5]

दीर्घो लघोः ७ । ४ । ९४ ॥

लघोरभ्यासस्य दीर्घः स्यात् सन्वद्भावविषये । अचीकमत ।[6]

'अचीकमते'ति रूपं साधयेति प्रश्ने-इच्छार्थकात्कमधातोः कमेर्णिङिति णिङि कामीत्यस्य सनाद्यन्ता इति धातुसञ्ज्ञाया लुङि तङि च्लि लुङीति च्लि-प्रत्यये तस्य चङादेशे णिलोपे णौ चङीति ह्रस्वत्वे चङीति द्वित्वे हलादिः शेषे

१ अनिडादि आर्धधातुक परे रहते णि का लोप हो ।

२ चङ्परक णि परे रहते जो अङ्ग उसकी उपधा को ह्रस्व हो ।

३ चङ् परे रहते अभ्यासभिन्न धातु का अवयव जो प्रथम एकाच् उसको द्वित्व हो, और अजादि के द्वितीय एकाच् को द्वित्व हो ।

४ चङ्परक णि परे रहते जो अङ्ग, उसका अवयव जो लघुपरक अभ्यास उसको सन् परे रहते जो कार्य होते है वे हों । यदि णिनिमित्तक अक् का लोप न हुआ हो तो।

५ अभ्यास का जो अकार उसको इत् हो सन् परे रहते ।

६ लघु जो अभ्यास उसको दीर्घ हो सन्वद्भाव के विषय में ।

णिङभावपक्षे—*कमेश्च्लेश्चङ् वाच्यः । अचिकमत । अकामयिष्यत—अकमिष्यत ॥ अय गतौ ३ ॥ अयते ॥

उपसर्गस्यायतौ ८ । २ । १९ ॥

अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात् । प्लायते । पलायते ॥

दयायासश्च ३ । १ । ३७ ॥

दय् अय् आस् एभ्य आम् स्याल्लिटि । अयाञ्चक्रे । अयिता । अयिष्यते । अयताम् । आयत । अयेत । अयिषीष्ट । विभाषेटः । अयिषीढ्वम्—अयिषीध्वम् । आयिष्ट । आयिढ्वम् आयिध्वम् । आयिष्यत ॥ द्युत दीप्तौ ॥ ४ ॥ द्योतते ॥

द्युतिस्वाप्योः सम्प्रसारणम् । ७ । ४ । ६७ ॥

अनयोरभ्यासस्य संप्रसारणं स्यात् । दिद्युते ।

द्युद्भ्यो लुङि १ । ३ । ९१ ॥

द्युतादिभ्यो लुङः परस्मैपदं वा स्यात् । पुषादीत्यङ् । अद्युतत्—अद्योतिष्ट । अद्योतिष्यत ॥ एवम्—श्वित । वर्णे ॥५॥ ञिमिद ।

कुहोश्चुरिति चुत्वे सन्वद्भावात्सन्यत इतीत्वे दीर्घो लघोरिति दीर्घे च अचीकमतेति सिद्धमित्युत्तरम् ।

णिङभावेति । 'आयादय आर्द्धधातुके वे'ति वैकल्पिकतया कमेर्णिङभावे इत्यर्थः ।

अचकमतेति । अचकमतेत्यत्र णिङोऽभावान्न सन्वद्भाव इति नेत्त्वदीर्घौ ।

'अयिषीढ्वम्' इत्यत्र 'आयिढ्व'मित्यत्र च 'विभाषेट'-इति वैकल्पिको ढः ।

दीप्तिः प्रकाश, शोभा च । अकर्मकोऽयम् ।

अद्योतिष्ट, अद्योतिषाताम्, अद्योतिषत । अद्योतिष्ठाः, अद्योतिषाथाम्,

१ कम् से परे जो च्लि उसको चङ् आदेश होता है ।

२ अयतिपरक जो उपसर्ग उसका जो रेफ उसको लकारादेश होता है ।

३ दय् अय्-आस् इनसे आम् हो लिट् परे रहते ।

४ द्युत् और स्वापि के अभ्यास को सम्प्रसारण होता है ।

५ द्युतादि से परे जो लुङ् उसको परस्मैपद होता है विकल्प से ।

स्नेहने ॥ ६ ॥ ञिष्विदा स्नेहनमोचनयोः ॥ ७ ॥ मोहनयोरित्येके । ञिक्ष्विदा चेत्येके ॥ रुच दीप्तावभिप्रीतौ च ॥ ८ ॥ घुट परिवर्तने ॥ ९ ॥ शुभ दीप्तौ ॥ १० ॥ क्षुभ सञ्चलने ॥ ११ ॥ णभ तुभ हिंसायाम् ॥ १२ ॥ १३ ॥ स्रंसु भ्रंसु ध्वंसु अवस्रंसने ॥ १४ ॥ १५ ॥ १६ ॥

ध्वंसु गतौ च ॥ १७ ॥ स्रम्भु विश्वासे ॥ १८ ॥

वृतु वर्तने ॥ १९ ॥ वर्तते । ववृते । वर्तिता ॥

वृद्भ्यः स्यसनोः १ । ३ । ९२ ॥

वृतादिभ्यः पञ्चभ्यः परस्मैपदं वा स्यात् स्ये सनि च ।

न वृद्भ्यश्चतुर्भ्यः ७ । २ । ५९ ॥

वृतुवृधुशृधुस्यन्दूभ्यः सकारादेरार्धधातुकस्येण् न स्यात् तङानयोरभावे । वर्त्स्यति—वर्तिष्यते । वर्तताम् । अवर्तत । वर्तेत । वर्तिषीष्ट । अवर्तिष्ट । अवर्त्स्यत्—अवर्तिष्यत ॥

दद दाने ॥ २० ॥ ददते ॥

अद्योतिढ्वम् । अद्योतिषि, अद्योतिष्वहि, अद्योतिष्महि—इति लुङि रूपाणि ॥

वर्णे=श्वेतीकरणे । सौधं श्वेतते चैत्रः । सकर्मकोऽयम् । श्वेतीभवने त्वकर्मकः । स्नेहनं—तैलादिलापनम् ।

परिवर्त्तनं घोटनम् । ( घोटना )।

सञ्चलनं क्षोभः । (घबड़ाना, क्रुद्ध होना, क्षुब्ध होना )।

अवस्रंसनं—पतनं, नाशश्च । लुङि—अस्रसत्, अभ्रसत्, अध्वसत्, अस्रभत्—इत्येवं रूपाणि, अङो ङित्त्वेन अनिदितामिति नकारलोपात् ।

१ वृतादि जो पांच उनसे परे परस्मैपद हो विकल्प से स्य और सन् परे रहते ।

२ वृतु-वृधु-शृधु-स्यन्दू इन धातुओं से परे जो सकारादि आर्धधातुक उसको इट् नहीं होय तङ् और आन के अभाव में ।

न शसददवादिगुणानाम्[1] ६ । ४ । १२६ ॥

शसेर्ददेर्वकारादीनां गुणशब्देन विहितश्च योऽकारस्तस्य एत्वाभ्यासलोपौ न स्तः । ददृदे । ददृदाते । ददृदिरे । ददिता । ददिष्यते । ददताम् । अददत । ददेत । ददिषीष्ट । अददिष्ट । अददिष्यत ॥ त्रपूष् लज्जायाम् ॥ २१ ॥ त्रपते ॥

तॄफलभजत्रपश्च[2] ६ । ४ । १२२ ॥

एषामत एत्वमभ्यासलोपश्च स्यात् किति लिटि सेटि थलि च। त्रेपे । त्रपिता-त्रप्ता । त्रपिष्यते-त्रप्स्यते । त्रपताम् । अत्रपत । त्रपेत । त्रपिषीष्ट-त्रप्सीष्ट । अत्रपिष्ट-अत्रप्त । अत्रपिष्यत अत्रप्स्यत ॥

इत्यात्मनेपदिनः ॥

# अथोभयपदिनः ।

श्रिञ् सेवायाम् ॥ १ ॥ श्रयति-श्रयते । शिश्राय-शिश्रिये । श्रयितासि-श्रयितास । श्रयिष्यति-श्रयिष्यते । श्रयतु-श्रयताम् । अश्रयत्-अश्रयत । श्रयेत्-श्रयेत । श्रीयात्-श्रयिषीष्ट । चङ् । अशिश्रियत्-अशिश्रियत । अश्रयिष्यत्-अश्रयिष्यत ॥

वर्त्तन इति । अकर्मकोऽयं वृतुधातुः । एवं त्रपधातावपि बोध्यम् । त्रेतेति । स्वरतिसूतीति वेट् । अत्रप्तेति । 'झलो झली'ति सलोपः । श्रयिषीढ्वे-श्रयिषीध्वम् । विभाषेट इति वा ढ -।

१ शस-दद्-और वकारादि धातुओं का गुणशब्द से विहित जो अकार उसको एत्व नहीं होय और अभ्यासलोप नहीं होय ।

२ तॄ फल भज और त्रप इन धातुओं का जो अकार उसको एत्वाऽभ्यासलोप होय कित् लिट् और सेट् थल् परे रहते ।

भृञ् भरणे ॥ २ ॥ भरति—भरते । बभार । बभ्रतुः । बभ्रुः । बभर्थ । बभृव । बभृम । बभ्रे । बभृषे । भर्तासि—भर्तासे । भरिष्यति—भरिष्यते । भरतु—भरताम् । अभरत्—अभरत । भरेत्—भरेत ॥

रिङ्[1] शयग्लिङ्क्षु ७ । ४ । २८ ॥

शे यकि यादावार्धधातुके लिङि च ऋतो रिङादेशः स्यात् । रीङि प्रकृते रिङ्विधानसामर्थ्याद्दीर्घो न । भ्रियात् ॥

उश्च १ । २ । १२ ॥

ऋवर्णात्परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । भृषीष्ट । भृषीयास्ताम् । [ भृषीरन् ] । अभार्षीत् । [ अभार्ष्टाम्, अभार्षुः । अभार्षीः, अभार्ष्टम्, अभार्ष्ट । अभार्षम् । अभार्ष्व । अभार्ष्म ] ॥

ह्रस्वादङ्गात्[3] ८ । २ । २७ ॥

सिचो लोपः स्याज्झलि । अभृत । अभृषाताम् । [अभृषत । अभृथाः, अभृषाथाम्, अभृड्ढ्वम् । अभृषि]॥ अभरिष्यत्—अभरिष्यत॥

हृञ् हरणे ॥ २ ॥ हरति—हरते । जहार । जह्रे । जहर्थ । जह्रिव । जह्रिम । जह्रिषे । हर्तासि-हर्तासे । हरिष्यति—हरिष्यते । हरतु-

भरणं—पालनं धारणं पूरणञ्च । 'कृसृभृवृ' इति नेट् ।

इणः षीध्वमिति ढ—भृषीढ्वम् । अभार्षीत्, अभार्ष्टाम्, अभार्षुः । अभार्षीः, अभार्ष्टम्, अभार्ष्ट । अभार्षम्, अभार्ष्व, अभार्ष्म ॥ पक्षे—अभृत, अभृषाताम्, अभृषत । अभृथाः, अभृषाथाम्, अभृड्ढ्वम् । अभृषि, अभृष्वहि, अभृष्महि ॥

जहर्थेत्यत्र ऋदन्तत्वात्सर्वेषां मते इण्न । 'ऋदन्त ईदृङ्नित्याऽनि'ड्त्युक्तेः । जह्रिव जह्रिषे इत्यादौ तु क्रादिनियमादिट् ।

१ शकार, यक् और यकारादि आर्धधातुक लिङ् परे रहते ऋकार को रिङ् आदेश हो ।

२ ऋवर्ण से परे जो झलादि लिङ् और सिच् सो कित् हो तङ् परे रहते ।

३ ह्रस्वान्त अङ्ग से परे जो सिच् उसका लोप हो झल् परे रहते ।

हरताम् । अहरत्—अहरत । हरेत्—हरेत । ह्रियात्—हृषीष्ट । हृषीयास्ताम् । अहार्षीत्—अहृत । अहरिष्यत्—अहरिष्यत ।

**धृञ् धारणे ॥ ४ ॥** धरति—धरते । **णीञ् प्रापणे ॥ ५ ॥** नयति नयते ॥ **डुपचष् पाके ॥ ६ ॥** पचति—पचते । पपाच । पेचिथ—पपक्थ । पेचे । पक्तासि । पक्तासे ॥

**भज सेवायाम् ॥ ७ ॥** भजति—भजते । बभाज—भेजे । भक्तासि-भक्तासे । भक्ष्यति—भक्ष्यते। अभाक्षीत् अभक्त । अभक्षाताम् ॥

**यज देवपूजासङ्गतिकरणदानेषु ॥ ८ ॥** यजति—यजते ।

**[1]लिट्यभ्यासस्योभयेषाम् ६ । १ । १७ ॥**

वच्यादीनां ग्रह्यादीनां चाऽभ्यासस्य सम्प्रसारणं स्याल्लिटि । इयाज ॥

**[2]वचिस्वपियजादीनां किति ६ । १ । १५ ॥**

वचिस्वप्योर्यजादीनां च सम्प्रसारणं स्यात् किति । ईजतुः । ईजुः । इयजिथ—इयष्ठ । ईजे । यष्टा ॥

**[3]षढोः कः सि ८ । २ । ४१ ॥**

अत्र 'हृषीढ्व'मित्यत्र लिङि, 'अहृढ्व'मित्यत्र लुङि च 'इण. षीध्व'मिति ढत्वम् । अनिडय धातुः । यजादयश्च नव । तथाहि—

**'यजिर्वपिर्वहिश्चैव वसिर्वेञ् व्येञ् इत्यपि ।**
**ह्वेञ्वदी श्वयतिश्चेति यजाद्याः स्युरिमे नव ॥'** इति ।

**षढोः**—षष्ठ्यन्तम् , **कः**—प्रथमान्तम् , **सि**—सप्तम्यन्तम् ।

१ वच्यादि और ग्रह्यादि जो धातु उनके अभ्यास को सम्प्रसारण हो लिट् परे रहते ।

२ वच् धातु—स्वप् धातु और यजादि जो धातु उनको सम्प्रसारण हो कित् परे रहते ।

३ षकार और ढकार को क आदेश हो सकार परे रहते ।

[ षस्य ढस्य च कः स्यात्सकारे परे ]। वक्ष्यति-यक्ष्यते । इज्यात्-यक्षीष्ट । अयाक्षीत्--अयष्ट ॥ वह प्रापणे ॥५॥ वहति- वहते । उवाह । ऊहतुः । ऊहुः । उवहिथ ॥

झषस्तथोर्धोऽधः ८ । २ । ४० ॥

झषः परयोस्तथोर्धः स्यान्न तु दधातेः ॥

ढो ढे लोपः । ८ । ३ । १३ ॥

[ ढस्य लोपः स्याड्ढे परे ] ॥

सहिवहोरोदवर्णस्य । ६ । ३ । ११२ ॥

अनयोरवर्णस्य ओत्स्याड्ढलोपे । उवोढ । ऊहे । वोढा । वक्ष्यति । अवाक्षीत् । अवोढाम् । अवाक्षुः । अवाक्षीः । अवोढम् । अवोढ । अवाक्षम् । अवाक्ष्व । अवाक्ष्म ।

अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवाक्षाथाम् । अवोढ्वम् । अवक्षि । अवक्ष्वहि । अवक्ष्महि ॥

* इति तिङन्ते भ्वादयः *

झषः-पञ्चम्यन्तम्, तथोः-षष्ठ्यन्तम्, धः-प्रथमान्तम्, अधः-षष्ठ्यन्तम् । दधातेस्तथयोर्नेत्यर्थः ।

इति श्रीगुरुप्रसादशास्त्रिविरचितायां लघुकौमुदीसरलायां भ्वादिप्रकरणम् ।

१ झष् से परे तकार थकार को धकार हो परन्तु धा धातु को नहीं होय ।

२ ढकार का लोप होय ढकार परे रहते ।

३ सह् धातु और वह् धातु का जो अवर्ण उसको ओकार हो ढकार का लोप हुआ हो तो ।

# अथ तिङन्तेऽदादिप्रकरणम् ।

अद भक्षणे ॥ १ ॥

अदिप्रभृतिभ्यः शपः[1] । २ । ४ । ७२ ॥

[एभ्यः परस्य शपो] लुक् स्यात् । अत्ति । अत्तः । अदन्ति । अत्सि । अत्थः । अत्थ । अद्मि । अद्वः । अद्मः ॥

लिट्यन्यतरस्याम्[2] । २ । ४ । ४० ॥

अदो घस्लृ वा स्याल्लिटि । जघास । उपधालोपः ।

शासिवसिघसीनां च[3] । ८ । ३ । ६० ॥

इण्कुभ्यां परस्यैषां सस्य षः स्यात् । घस्य चर्त्वम् । जक्षतुः । जक्षुः । जघसिथ । जक्षथुः । जक्ष । जघास--जघस । जक्षिव । जक्षिम ॥ आद । आदतुः । आदुः ॥

* अथ तिङन्तेऽदादयः *

**भक्षणं** -खादनम् । सकर्मकोऽयम् । 'देवदत्त ओदनमत्ति' । 'ण्यक्षत्रिये'-त्यतो लुगनुवर्त्तते । 'लुङ्सनो'रित्यतो 'घस्लृ' इति, 'अदो जग्धि' रित्यतोऽद इति चानुवर्त्तते, तदाह-अद इति ।

**उपधालोप इति** । 'गमहनजनखने'त्युपधाभूताऽकारलोप इत्यर्थः । 'अपदान्तस्य मूर्धन्य' इति, 'इण्को' रिति 'सहेः साडः स' इत्यतः 'स' इति चानुवर्त्याह **इणिति** । **चर्त्वमिति** । खरि चेति घस्य ककारादेश इत्यर्थः ।

**जघसिथेति** । घसादेशस्य तासि (लुटि) परतोऽभावात्तासौ नित्याऽनिटोऽभावेन क्रादिनियमात्थलि नित्यमिट् । **जक्षिवेति** । अकारवत्त्वेन भारद्वाजादिमतभेदाद्वैकल्पिके इति प्राप्ते नित्यार्थो विधिरयम् ।

१ अदादिगणपठित धातुओं से परे जो शप् उसका लुक् हो ।

२ अद् धातु को घस्लृ आदेश हो विकल्प से लिट् परे रहते ।

३ इण् और कवर्ग से परे जो शास् वस् और घस् धातु का सकार उसको षकार हो ।

इडत्त्यर्तिव्ययतीनाम् ७ । २ । ६६ ॥

अद् ऋ व्येञ् एभ्यस्थलो नित्यमिट् स्यात् । आदिथ । अत्थ । अत्स्यसि । अत्तु-अत्तात् । अत्ताम् । अदन्तु ॥

हुझल्भ्यो हेर्धिः ६ । ४ । १०१ ॥

होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि-अत्तात् । अत्तम् । अत्त । अदानि । अदाव । अदाम ॥

अदः सर्वेषाम् ७ । ३ । १०० ॥

अदः परस्याऽपृक्तसार्वधातुकस्य अट् स्यात्सर्वमतेन । आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म । अद्यात् । अद्याताम् । अद्युः ॥ अद्यात् । अद्यास्ताम् । अद्यासुः ॥ १ ॥

लुङ्सनोर्घस्लृ २ । ४ । ३७ ॥

अदो घस्लृ स्याल्लुङि सनि च । लृदित्त्वादङ् । अघसत् । आत्स्यत् ॥ हन हिंसागत्योः ॥ २ ॥ हन्ति ॥

अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक-
लोपो झलि क्ङिति ६ । ४ । ३७ ॥

अघसदिति । 'पुषादिद्युताद्यृ' इति सूत्रेणाऽङित्यर्थः । अनुनासिकेति लुप्तषष्ठीकं, वनतीतरेषां विशेषणं, नतु वनतेरव्यभिचारात् । विशेषणेन तदन्त-

१ अद् ऋ और व्येञ्-इन धातुओं से परे जो थल् उसको नित्य इट् हो ।

२ हु धातु और झलन्त धातु से परे जो हि उसके स्थान में धि आदेश हो ।

३ अद धातु से परे जो अपृक्त सार्वधातुक उसको अट् का आगम हो सब ( आचार्यों ) के मत में ।

४ अद् धातु को घस्लृ आदेश हो लुङ् और सन् परे रहते ।

५ अनुनासिकान्त जो अनुदात्तोपदेश धातु, और वनधातु तथा तनोत्यादि-धातु इनके अनुनासिक का लोप हो झलादि कित् ङित् परे रहते ।

अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ किति ङिति परे। यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः। तनु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः। हतः। घ्नन्ति। हंसि। हथः। हथ। हन्मि। हन्वः। हन्मः। जघान। जघ्नतुः। जघ्नुः॥

अभ्यासाच्च[1]। ७। ३। ५५॥

अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात्। जघनिथ-जघन्थ। जघ्नथुः। जघ्न। जघान-जघन। जघ्निव। जघ्निम। हन्ता। हनिष्यति। हन्तु-हतात्। हताम्। घ्नन्तु॥

हन्तेर्जः[2]। ६। ४। ३६॥

हन्तेर्जादेशः स्याद्धौ परे॥

असिद्धवदत्राभात्[3] ६। ४। २२॥

इत ऊर्ध्वमापादसमाप्तेराभीयम्। समानाश्रये तस्मिन्कर्तव्ये तदसिद्धं स्यात्। इति जस्याऽसिद्धत्वान्न हेर्लुक्। जहि हतात्। हतम्। हत। हनानि। हनाव। हनाम।

विधिस्तदाह अनुनासिकान्तानामिति। एषाम् अनुदात्तोपदेशाना यम्यादीनाम्। लोप इति। अलोऽन्त्यस्येति नकारस्य लोपः।

जघानेति। अत्र अभ्यासाच्चेति कुत्वमन्तरङ्गत्वाद्बाधित्वा हो हन्तेरिति कुत्वम्।

इत इति। इतः='असिद्धव'दित्यत आरभ्य। आ पादसमाप्तेः= षष्ठाध्यायचतुर्थपादसमाप्तिपर्यन्तम्। तस्मिन्=आभीये। तत्=कृतमाभीयम्। जस्य=हन्तेर्ज इति जादेशस्य। न लुक्='अतो हे'रिति हेर्न लुक्।

१ अभ्यास परे जो हन्ति का हकार उसको कुत्व हो।

२ हन् धातु के स्थान में जकारादेश हो हि परे रहते।

३ असिद्धवदत्राभात्—इस सूत्र से लेकर षष्ठाध्याय के चतुर्थ पाद की समाप्ति तक आभीय कहलाता है। समानाश्रय आभीय करने में कृत जो आभीय वह असिद्ध हो।

अहन् । अहताम् । अघ्नन् । अहन् । अहतम् । अहत । अहनम् । अहन्व । अहन्म । हन्यात् । हन्याताम् । हन्युः ॥

**आर्धधातुके[1] । २ । ४ । ३५ ॥**

इत्यधिकृत्य ॥

**हनो वध लिङि[2] । २ । ४ । ४२ ॥**

**लुङि च[3] । २ । ४ । ४३ ॥**

हनो वधादेशः स्याल्लिङि लुङि च । वधादेशोऽदन्तः । आर्धधातुके इति विषयसप्तमी । तेन आर्धधातुकोपदेशेऽकारान्तत्वादतो लोपः । वध्यात् । वध्यास्ताम् । आदेशस्याऽनेकाच्त्वादेकाच इतीण्निषेधाऽभावादिट् ।

अतो हलादेरिति वृद्धौ प्राप्तायाम्

**अचः परस्मिन् पूर्वविधौ[4] । १ । १ । ५७ ॥**

परनिमित्तोऽजादेशः स्थानिवत्स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये ॥ इत्यल्लोपस्य स्थानिवत्त्वेनोपधात्वाऽभावान्न

---

अदन्त इति । तेन वधादेशोपदेशेऽनेकाच्त्वादेकाच इतीण्निषेधो न प्रवर्त्तते, तेन अवधीदित्यत इट् सिध्यति । अतो हलादेरिति वृद्धिस्तु नेह प्रवर्त्तते, अल्लोपस्य अचः परस्मिन्निति स्थानिवद्भावात् । अन्त्यस्याऽकारस्य तु नानेन वृद्धिः, 'न्यल्लोपौ' इत्यनेन बाधादित्याशयः ।

विषयसप्तमीति । परसप्तमीस्वीकारे तु आर्धधातुकोपदेशेऽकारान्तत्वा-

---

१ 'आर्धधातुके' यह अधिकार सूत्र है ।

२ हन् धातु को वध आदेश हो लिङ् परे रहते ।

३ हन् धातु को वध आदेश हो लुङ् परे रहते ।

४ पर को निमित्त मान कर अच् के स्थान में हुआ जो आदेश वह स्थानिवत् हो । स्थानिभूत अच् से पूर्वत्वेन जो दृष्ट उसको विधि करना हो तो ।

वृद्धिः ॥ अवधीत् । अहनिष्यत् ॥ यु मिश्रणाऽमिश्रणयोः ॥३॥

## [१]उतो वृद्धिर्लुकि हलि । ७ । ३ । ८९ ॥

लुग्विषये उतो वृद्धिः स्यात् पिति हलादौ सार्वधातुके, नत्वभ्यस्तस्य । यौति । युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयाव । यविता । यविष्यति । यौतु । युतात् । अयौत् । अयुताम् । अयुवन् । युयात् । इह उतो वृद्धिर्न, भाष्ये पिच्च ङिन्न, ङिच्च पिन्नेति व्याख्यानात् । युयाताम् । युयुः । यूयात् । यूयास्ताम् । यूयासुः । अयावीत् । अयविष्यत् ॥

**या प्रापणे ॥४॥** याति । यातः । यान्ति । ययौ । याता । यास्यति । यातु । अयात् । अयाताम् ॥

## [२]लङः शाकटायनस्यैव । ३ । ४ । १११ ॥

आदन्तात्परस्य लङो झेर्जुस् वा स्यात् । अयुः । अयान् । यायात् । यायाताम् । यायुः । यायात् । यायास्ताम् । यायासुः । अयासीत् । अयास्यत् । **वा गतिगन्धनयोः ॥५॥ भा दीप्तौ**

भावादतो लोप इति लोपो न स्यात् । विषयसप्तम्यङ्गीकारे तु आर्धधातुकविवक्षायां ततः पूर्वमेव वधादेश इति लोप प्रवर्तते इत्याशयः ।

**मिश्रणं**-सम्मेलनम्, **अमिश्रणं**-पृथक्करणम् । युयाव, युयुवतुः, युयुवुः । युयविथ, युयुवथुः, युयुव । युयाव युयव, युयुविव, युयुविम । इह=युयादित्यत्र । तिपः पित्त्वेन 'उतो वृद्धि'रिति प्राप्ताऽपि वृद्धिरिह न भवति, यासुटो ङित्त्वस्य विशेषविहिततया ङित्त्वेन पित्त्वस्य बाधात् । यच्च ङित् तत्पिन्न भवतीति भाष्योक्तेरित्याशयः । प्रापणमिह गतिः । **गन्धनं**-सूचनम् । **दीप्तिः** शोभा, प्रकाशश्च । अकर्मकोऽयम् । सूर्यो भाति । चन्द्रो भाति ।

१ लुक् के विषय में उकार को वृद्धि हो हलादि पित् सार्वधातुक परे रहते । अभ्यस्त को नहीं हो ।

२ आदन्त धातु से परे लङ् सम्बन्धी झि को जुस् हो विकल्प करके ।

॥ ६ ॥ ष्णा शौचे ॥ ७ ॥ श्रा पाके ॥८॥ द्रा कुत्सायां गतौ ॥ ९ ॥ प्सा भक्षणे ॥ १० ॥ रा दाने ॥११॥ ला आदाने ॥ १२ ॥ दाप् लवने ॥ १३ ॥ पा रक्षणे ॥१४॥ ख्या प्रकथने ॥१५॥ अयं सार्वधातुक एव प्रयोक्तव्यः ॥

विद ज्ञाने ॥ १६ ॥

विदो लटो वा ३ । ४ । ८३ ॥

वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म ।

पक्षे—वेत्ति । वित्तः । विदन्ति ॥

---

शौच—स्नानम् । स्नाति । सस्नौ, सस्नतुः, सस्नुः । सस्निथ—सस्नाथ, सस्नथुः, सस्न । सस्नौ, सस्निव, सस्निम । स्नाता । स्नास्यति । स्नातु । अस्नात् । स्नायात्, स्नायाताम्, स्नायुः—इत्यादि । आशिषि—'वाऽन्यस्य'—त्येत्वविकल्पः । स्नेयात्—स्नायात्—इत्यादि । अस्नासीत् । अस्नास्यत् ।

श्राति । शश्रौ । शश्रिथ—शश्राथ । श्राता । श्रास्यति । श्रातु । अश्रात् । श्रायात् । श्रेयात्—श्रायात् । अश्रासीत् । अश्रास्यत् ।

द्राति । दद्रौ । दद्रिथ दद्राथ । द्राता । द्रास्यति । द्रातु । अद्रात् । द्रायात् । द्रेयात्—द्रायात् । अद्रासीत् । अद्रास्यत् ।

प्साति । पप्सौ । पप्सिथ—पप्साथ । प्साता । प्सास्यति । प्सातु । अप्सात् । प्सायात् । प्सेयात् प्सायात् । अप्सासीत् । अप्सास्यत् ।

राति । ररौ । ररिथ—रराथ । राता । रास्यति । रातु । अरात् । रायात् । रायात् । रायास्ताम् । अरासीत् । अरास्यत्—इत्यादि । एवं—'ला आदाने' 'दाप् लवने' 'पा रक्षणे' इति धातूनां रूपाणि बोध्यानि ।

सार्वधातुके=लडादिषु चतुर्षु लकारेषु । तेन—लटि—ख्याति । लोटि ख्यातु । लङि—अख्यात् । विधिलिङि—ख्यायात् । इत्यादि रूपाणि भवन्ति ।

१ विद् धातु से परे जो लट् सम्बन्धी परस्मैपद उनको णलादि आदेश विकल्प से हों ।

[1]उषविदजागृभ्योऽन्यतरस्याम् ३ । १ । ३८ ॥

एभ्यो लिटि आम्वा स्यात् । विदेरदन्तत्वप्रतिज्ञानादामि न गुणः । विदाञ्चकार—विवेद । वेदिता । वेदिष्यति ॥

[2]विदांकुर्वन्त्वित्यन्यतरस्याम् ३ । १ । ४१ ॥

वेत्तलोटि आम्, गुणाऽभावो, लोटो लुक्, लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते ॥

[3]तनादिकृञ्भ्य उः ३ । १ । ७९ ॥

तनादेः कृञश्च उप्रत्ययः स्यात् । शपोऽपवादः । गुणौ । विदाङ्करोतु ॥

[4]अत उत्सार्वधातुके ६ । ४ । ११० ॥

उप्रत्ययान्तस्य कृञोऽकारस्य उत्स्यात्सार्वधातुके क्ङिति । विदाङ्कुरुतात् । विदाङ्कुरुताम् । विदाङ्कुर्वन्तु । विदाङ्कुरु । विदाङ्करवाणि । अवेत् । अवित्ताम् । अविदुः ॥

[5]दश्च ८ । २ । ७५ ॥

**विदेरिति** । अदन्तत्वप्रतिज्ञानञ्च-आमि परत एव । तेन 'विवेदे'त्यादौ पुगन्तेति गुणो भवत्येव । प्रथमः पुरुषः, एकवचनञ्चेति द्वयं सूत्रे न विवक्षितम् । एवञ्च त्रिष्वपि पुरुषेषु सर्वेष्वपि वचनेषु च निपातन भवतीत्याशयः ।

१ उष् विद् और जागृ धातु से परे आम् हो विकल्प से लिट् परे रहते ।

२ विद् धातु से आम् हो लोट् परे रहते और गुण का अभाव हो और लोट् का लुक् हो, लोट्परक कृ धातु का अनुप्रयोग हो विकल्प से ।

३ तनादि जो धातु से और कृञ् धातु से परे उप्रत्यय हो ।

४ उप्रत्ययान्त जो कृञ धातु उसका जो अकार उसको उकार हो सार्वधातुक कित् ङित परे रहते ।

५ धातु का जो पदान्त दकार उसको रु हो विकल्प से सिप् परे रहते ।

धातोर्दस्य पदान्तस्य सिपि परे रुर्वा स्यात् । अवेः अवेत् । विद्यात् । विद्याताम् । विद्युः । विद्यात् । विद्यास्ताम् । अवेदीत् । अवेदिष्यत् ॥

अस् भुवि ॥ १७ ॥ अस्ति ॥

**[1]श्नसोरल्लोपः ६ । ४ । १११ ॥**

श्नस्याऽस्तेश्चाऽतो लोपः स्यात्सार्वधातुके क्ङिति । स्तः । सन्ति । असि । स्थः । स्थ । अस्मि । स्वः । स्मः ॥

**[2]उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ८ । ३ । ८७ ॥**

उपसर्गेणः प्रादुसश्चाऽस्तेः सस्य षः स्याद्यकारेऽचि च परे । निष्यात् । प्रनिषन्ति । प्रादुःषन्ति । यच्परः किम् ? । अभिस्तः ॥

**[3]अस्तेर्भूः २ । ४ । ५२ ॥**

[ अस्तेर्भू इत्यादेशः स्यात् ] आर्धधातुके । बभूव । भविता । भविष्यति । अस्तु-स्तात् । स्ताम् । सन्तु ॥

**[4]घ्वसोरेद्धावभ्यासलोपश्च ६ । ४ । ११९ ॥**

घोरस्तेश्च एत्वं स्याद्धौ परे अभ्यासलोपश्च । एत्वस्याऽसिद्धत्वाद्धेर्धिः । श्नसोरित्यल्लोपः । तातङ्पक्षे एत्वं न, परेण तातङा बाधात् । एधि—स्तात् । स्तम् । स्त । असानि । असाव । असाम ।

१ श्ना और अस्ति के अकार का लोप होय सार्वधातुक कित् ङित् परे रहते ।

२ उपसर्ग स्थ ण् से परे और प्रादुस् से परे जो अस्ति का सकार उसको षकार हो यकार और अच् परे रहते ।

३ अस् धातु को भू आदेश हो आर्धधातुक परे रहते ।

४ घुसञ्ज्ञक धातु और अस्धातु को एत्व हो हि परे रहते और अभ्यास का लोप हो ।

आसीत् । आस्ताम् । आसन् । स्यात् । स्याताम् । स्युः । भूयात् । अभूत् । अभविष्यत् ॥

इण् गतौ ॥ १८ ॥ एति । इतः ॥

इणो[1] यण् ६ । ४ । ८१ ॥

[ इणो यण् स्यात् ] अजादौ प्रत्यये परे । यन्ति ॥

अभ्यासस्याऽसवर्णे[2] ६ । ४ । ७८ ॥

अभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि । इयाय ॥

दीर्घ इणः[3] किति ७ । ४ । ६९ ॥

इणोऽभ्यासस्य दीर्घः स्यात्किति लिटि । ईयतुः । ईयुः । इययिथ-इयेथ । एता । एष्यति । एतु । ऐत् । ऐताम् । आयन् । इयात् ।

इण षष्ठ्यन्त, यण्-प्रथमान्तम् । अजादौ प्रत्यये परे इण्-धातोर्यणादेशः स्यादित्यर्थः । इयङोऽपवादोऽयम् । 'यन्ती'त्यत्र हि--शपो लुकि-'इ-अन्ती'त्यत्र 'इको यणची'ति यणं बाधित्वा'अचिश्नु धात्वि'तीयङ् प्राप्तस्तं बाधित्वा 'इणो य'णित्यनेन यणादेशः

इयायेति । इणो लिटि तिपि णलि द्वित्वे 'इ-इ-अ' इत्यवस्थायामकः सवर्णे इति दीर्घं 'वार्णादाङ्गं बलीय' इति न्यायेन बाधित्वा 'अचो ञ्णिती'ति वृद्धावभ्यासस्याऽसवर्णे इतीयङादेशे आयादेशे च इयायेति सिद्धम् ।

'ईयतु'रित्यत्र, इ-इ-अतुस्-इत्यवस्थायामसंयोगाल्लिट्किदिति लिटः कित्वे आङ्गत्वादभ्यासोत्तरस्येकारस्य इणो यणिति यणि अभ्यासेकारस्य 'दीर्घ इण' इति दीर्घः ।

इययिथेति । परिगणितातिरिक्ताजन्तधातुत्वेन इणोऽनुदात्तत्वेन तासौ

१ इण् धातु को यण् हो अजादि प्रत्यय परे रहते ।

२ अभ्यास का जो इवर्ण उवर्ण उसको क्रम से इयङ् उवङ् आदेश हो असवर्ण अच् परे रहते ।

३ इण् धातु के अभ्यास को दीर्घ हो कित् लिट् परे रहते ।

## [1]एतेर्लिङि ७ । ४ । २४ ॥

उपसर्गात्परस्य इणोऽणो ह्रस्वः स्यादार्धधातुके किति लिङि । निरियात् । [2]उभयत आश्रयणे नान्तादिवत् । अभीयात् । अणः किम् ? । समेयात् ॥

## [3]इणो गा लुङि २ । ४ । ४५ ॥

[ इणो गादेशः स्याल्लुङि ] गातिस्थेति सिचो लुक् । अगात् । ऐष्यत् ॥ शीङ् स्वप्ने ॥ १९ ॥

## [4]शीङः सार्वधातुके गुणः ७ । ४ । २१ ॥

[शीङो गुणः स्यात्सार्वधातुके ] क्ङिति चेत्यस्यापवादः । शेते । शयाते ॥

## [5]शीङो रुट् ७ । १ । ६ ॥

शीङः परस्य झादेशस्याऽतो रुडागमः स्यात् । शेरते । शेषे । शयाथे । शेध्वे । शये । शेवहे । शेमहे । शिश्ये । शिश्याते । शिश्यिरे । शयिता । शयिष्यते । शेताम् । शयाताम् । अशेत । अशयाताम् । अशेरत । शयीत । शयीयाताम् । शयीरन् । शयिषीष्ट । अशयिष्ट । अशयिष्यत ॥

नित्याऽनिट्कतया ऋदन्तातिरिक्ततया भारद्वाजमते थलि इट्, अन्येषां मते तु अचस्तास्वदिति नेट् । तेन रूपद्वयं लब्धम् ।

१ उपसर्ग से परे जो इण् धातु सम्बन्धी अण् उसको ह्रस्व हो आर्धधातुक कित् लिङ् परे रहते ।

२ उभयत आश्रयण में अन्तादिवद्भाव नहीं होय ।

३ इण् धातु को गा आदेश हो लुङ् परे रहते ।

४ शीङ् धातु को गुण हो सार्वधातुक परे रहते ।

५ शीङ् धातु से परे जो झस्थानिक आदेश अत् उसको रुट् का आगम होय ।

इङ् अध्ययने ॥ २० ॥ इङिकावध्युपसर्गतो न व्यभिचरतः। अधीते । अधीयाते । अधीयते ॥

गाङ् लिटि[1] २ । ४ । ४९ ॥

इङो गाङ् स्याल्लिटि । अधिजगे । अधिजगाते। अधिजगिरे। अध्येता । अध्येष्यते । अधीताम् । अधीयाताम् । अधीयताम् । अधीष्व । अधीयाथाम् । अधीध्वम् । अध्ययै । अध्ययावहै । अध्ययामहै । अध्यैत । अध्यैयाताम् । अध्यैयत। अध्यैथाः । अध्यैयाथाम् । अध्यैध्वम् । अध्यैयि । अध्यैवहि । अध्यैमहि । अधीयीत। अधीयीयाताम् । अधीयीरन् । अध्येषीष्ट ॥

विभाषा लुङ्लृङोः[2] २ । ४ । ५० ॥

इङो गाङ् वा स्यात् ॥

गाङ्कुटादिभ्योऽञ्णिन्ङित्[3] १ । २ । १ ॥

इङिकौ='इङ्-अध्ययने' 'इक् स्मरणे' इतीमौ धातू। न व्यभिचरत'=नित्यमधिपूर्वावेव लोके प्रयुज्यते इत्यर्थः ।

अधीयत इति । अधीषे,अधीयाथे, अधीध्वे।अधीये,अधीवहे,अधीमहे।

अध्ययै इति । 'अधि-इ-' इत्यत्र शपो लुकि 'आडुत्तमस्ये'त्याडागमे टित आत्मनेपदानामित्येत्वे, 'एत ऐ' इत्यैत्वे, 'आटश्चे'ति वृद्धौ, सार्वधातुकार्धधातुकयोरिति गुणेऽयादेशे यणि 'अध्ययै' इति सिद्धम् । एवमग्रेऽपि ।

अत्र गुणायादेशयोः कृतयोरुपसर्गस्य यण् । अत्र 'पूर्वं धातुरुपसर्गेण युज्यते' इति दर्शनेऽन्तरङ्गत्वाद्गुणात्पूर्वं यण् प्राप्तः, 'णेरध्ययने वृत्त'मिति निर्देशान्न भवति ।

अध्येषीष्ट, अध्येषीयास्ताम्, अध्येषीरन्। अध्येषीष्ठाः, अध्येषीयास्थाम्, अध्येषीढ्वम् । अध्येषीय, अध्येषीवहि, अध्येषीमहि इति लुङि ।

१ इङ् धातु को गाङ् आदेश हो लिट् परे रहते ।
२ इङ् धातु को गाङ् आदेश हो विकल्प से लुङ् लृङ् परे रहते ।
३ गाङादेश और कुटादि से परे जो ञित् णित् भिन्न प्रत्यय सो ङिद्वत् हों ।

गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः ॥

[1]घुमास्थागापाजहातिसां हलि ६ । ४ । ६६ ॥

एषामात ईत्स्याद्धलादौ क्ङित्यार्धधातुके । अध्यगीष्ट

अध्यैष्ट । अध्यगीष्यत अध्यैष्यत ॥

दुह[3] प्रपूरणे ॥२१॥ दोग्धि । दुग्धः । दुहन्ति । धोक्षि । दुग्धे । दुहाते । दुहते । धुक्षे । दुहाथे । धुग्ध्वे । दुहे । दुह्वहे । दुह्महे । दुदोह–दुदुहे । दोग्धासि--दोग्धासे । धोक्ष्यति--धोक्ष्यते । दोग्धु--दुग्धात् । दुग्धाम् । दुहन्तु । दोग्धि--दुग्धात् । दुग्धम् । दुग्ध । दोहानि । दोहाव । दोहाम । दुग्धाम् । दुहाताम् । दुहताम् । धुक्ष्व । दुहाथाम् । धुग्ध्वम् । दोहै । दोहावहै । दोहामहै । अधोक् । अधुग्धाम् । अदुहन् । अदोहम् । अदुग्ध । अदुहाताम् । अदुहत । अधुग्ध्वम् । दुह्यात्--दुहीत ॥

[2]लिङ्सिचावात्मनेपदेषु । १ । २ । ११ ॥

इक्समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । धुक्षीष्ट ॥

[3]शल इगुपधादनिटः क्सः ३ । १ । ४५ ॥

प्रपूरण=दोहनम् । उभयपदी । द्विकर्मकः । गां दोग्धि पयः ।
धोक्षीति । दुग्धः, दुग्ध । दोह्मि, दुह्वः, दुह्मः,–इत्यपि बोध्यम् ।
लङि–सिबादौ–अधोक्–ग्, अदुग्धम्, अदुग्ध । अदोहम्, अदुह्व, अदुह्म–इत्यपि रूपाणि बोध्यानि ।

१ घुसञ्ज्ञकधातु और मा–स्था–गा–पा–हा और सोऽन्तकर्मणि धातु इनका जो आकार उसको ईकार हो हलादि कित् ङित् आर्धधातुक परे रहते ।

२ इक् समीप हल से परे जो झलादि लिङ् सिच् सो कित् हो तङ् परे रहते ।

३ इगुपध शलन्त जो धातु उससे परे जो अनिट् च्लि उसको क्स आदेश हो।

इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् । अधुक्षत् ।

[1] लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ७ । ३ । ७३ ॥

एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । अदुग्ध अधुक्षत ॥

[2] क्सस्याऽचि ७ । ३ । ७२ ॥

अजादौ तङि क्सस्य लोपः स्यात् । अधुक्षाताम् । अधुक्षन्त । अदुग्धाः-अधुक्षथाः । अधुक्षाथाम् । अधुग्ध्वम्-अधुक्षध्वम् । अधुक्षि । अदुह्वहि-अधुक्षावहि । अदुह्महि-अधुक्षामहि । अधोक्ष्यत ॥ एवं-दिह उपचये ॥ २२ ॥

लिह आस्वादने ॥ २३ ॥ लेढि । लीढः । लिहन्ति । लेक्षि । लीढे । लिहाते । लिहते । लिक्षे । लिहाथे । लीढ्वे । लिलेह-लिलिहे । लेढासि--लेढासे । लेक्ष्यति--लेक्ष्यते । लेढु-लीढात् । लीढाम् । लिहन्तु । लीढि । लेहानि । लीढाम् । अलेट्-अलेड् । अलिक्षत् । अलीढ-अलिक्षत । अलेक्ष्यत् । अलेक्ष्यत ॥

ब्रूञ् व्यक्तायां वाचि ॥ २४ ॥

उपचयः=वृद्धिः । अस्य च-देग्धि । दिग्धे । दिदेह । दिदिहे । देग्धासि । देग्धासे । धेक्ष्यति । धेक्ष्यते । देग्धु । दिग्धाम् । अधेक् । अदिग्ध । दिह्यात् । दिहीत । दिह्यात् । धिक्षीष्ट । अधिक्षत् । अदिग्ध-अधिक्षत । अधेक्ष्यत् । अधेक्ष्यतेत्यादि रूपाणि पूर्वोक्तरीत्योह्यानि ।

व्यक्तायां वाचि=स्पष्टभाषणे ।

१ दुह् दिह् लिह् और गुह् धातु का जो क्स उसका लुक् हो विकल्प से दन्त्य तङ् परे रहते ।

२ क्स का लोप हो अजादि तङ् परे रहते ।

ब्रुवः पञ्चानामादित आहो ब्रुवः[1] ३ । ४ । ८४ ॥

ब्रुवो लटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाऽऽहादेशः । आह । आहतुः । आहुः ॥

आहस्थः[2] ८ । २ । ३५ ॥

[ आहस्थकारादेशः स्यात्— ] झलि परे । चर्त्वम् । आत्थ । आहथुः ॥

ब्रुव ईट्[3] ७ । ३ । ९३ ॥

ब्रुवः परस्य हलादेः पित ईट् स्यात् । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते । ब्रुवाते । ब्रुवते ॥

ब्रुवो वचिः[4] २ । ४ । ५३ ॥

[ ब्रुवो वचिः स्यात्— ] आर्धधातुके । उवाच । ऊचतुः । ऊचुः । उवचिथ—उवक्थ । ऊचे । वक्ता । वक्तासि—वक्तासे । वक्ष्यति—वक्ष्यते । ब्रवीतु-ब्रूतात् । ब्रूताम् । ब्रुवन्तु । ब्रूहि । ब्रवाणि । ब्रूताम् । ब्रवै । अब्रवीत् । अब्रूत । ब्रूयात् । ब्रवीत । उच्यात् । वक्षीष्ट ॥

अस्यतिवक्तिख्यातिभ्योऽङ्[5] ३ । १ । ५२ ॥

एभ्यश्च्लेरङ् स्यात् ॥

ब्रुव इति । आर्द्धधातुकविषयो ब्रुवो वचिरादेशः स्यादित्यर्थः ।

१ ब्रूञ् धातु से परे जो लट् सम्बन्धी तिबादि पाच उनको णलादि पांच आदेश हों विकल्प से और ब्रूञ धातु को आह आदेश हो ।

२ आह को थकार अन्तादेश हो झल् परे रहते ।

३ ब्रूञ् धातु से परे जो हलादि पित् उसको ईट् का आगम होय ।

४ ब्रूञ् धातु को वच् आदेश हो आर्धधातुक के विषय में ।

५ अस् धातु वच् धातु और ख्या धातु इनसे परे जो च्लि उसको अङ् आदेश होय ।

वच उम् ७ । ४ । २० ॥[1]

[वच उमागमः स्यात्-] अङि परे । अवोचत्-अवोचत । अवक्ष्यत्-अवक्ष्यत । ( ग० सू० ) चर्करीतञ्च । चर्करीतमिति यङ्लुगन्तस्य सञ्ज्ञा, तददादौ बोध्यम्[2] । ऊर्णुञ् आच्छादने ॥२८॥

ऊर्णोतेर्विभाषा[3] ७ । ३ । ९० ॥

[ ऊर्णोतेः-] वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके । ऊर्णौति-ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति । ऊर्णुत । ऊर्णुवाते । ऊर्णुवते । ऊर्णोतेराम्नेति वाच्यम्[4] ॥

न न्द्राः संयोगादयः[5] ६ । १ । ३ ॥

अचः पराः संयोगादयो नदरा द्विर्न भवन्ति । नुशब्दस्य द्वित्वम् । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुवुः ॥

विभाषोर्णोः[6] १ । २ । ३ ॥

तत्=यङ्लुगन्तं 'बाभू' इत्यादि । तत्फलन्तु शपो लुक् ।

आच्छादनम्=आवरणम् (ढकना) । लटि सिबादौ ऊर्णोषि-ऊर्णौषि, ऊर्णुथ, ऊर्णुथ । ऊर्णौमि-ऊर्णोमि, ऊर्णुवः, ऊर्णुमः ।

नुशब्दस्येति । ऊर्णुञ्धातौ हि उपदेशे नुशब्द एव । णत्वन्तु रेफात्परतया रषाभ्यामिति लक्षणवशसम्पन्नम् । एवञ्च नुशब्दस्य द्वित्वं, द्वित्वमात्रदृष्ट्याऽऽश्रमिकस्य रषाभ्यामिति णत्वस्याऽसिद्धत्वादिति भावः ।

१ वच को उम् का आगम हो अङ् परे रहते ।

२ यङ् लुगन्त को अदादि में जानना ।

३ ऊर्णुञ् धातु को विकल्प से वृद्धि हो हलादि पित् सार्वधातुक परे रहते ।

४ ऊर्णुञ् धातु से आम् न हो ।

५ अच् से परे जो संयोगादि न द र इनको द्वित्व नहीं हो ।

६ ऊर्णुञ् धातु से परे जो इडादि प्रत्यय वह विकल्प से ङित् हो ।

इडादिप्रत्ययो वा ङित्स्यात् । ऊर्णुनुविथ–ऊर्णुनविथ । ऊर्णुविता–ऊर्णविता । ऊर्णुविष्यति–ऊर्णविष्यति । ऊर्णौतु–ऊर्णोतु । ऊर्णवानि । ऊर्णवै ।

**गुणोऽपृक्ते[1] ७ । ३ । ९१ ॥**

ऊर्णोतेर्गुणः स्यादपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः । और्णोत् । और्णोः । ऊर्णुयात् । ऊर्णुयाः । ऊर्णुवीत । ऊर्णूयात् । ऊर्णुविषीष्ट–ऊर्णविषीष्ट ॥

**ऊर्णोतेर्विभाषा[2] ७ । २ । ६ ॥**

इडादौ सिचि परस्मैपदे परे वा वृद्धिः स्यात् । पक्षे गुणः । और्णावीत्–और्णुवीत्–और्णवीत् । और्णाविष्टाम्–और्णुविष्टाम्–और्णविष्टाम् । और्णाविष्ट–और्णुविष्ट–और्णविष्ट । और्णुविष्यत् । और्णविष्यत् । और्णुविष्यत–और्णविष्यत ।

इत्यदादयः ॥

**ऊर्णुनुविथेति** । ङित्वे उवङ्,गुणस्य 'विङति चे'ति निषेधात् । अन्यत्र तु गुणः ।

लुङि परस्मैपदे 'ऊर्णोतेर्विभाषे'ति, 'विभाषोर्णो'रिति च विकल्पद्वयस्य प्रवृत्त्या रूपत्रयमित्यवधेयम् ।

* इत्यदादिप्रकरणम् *

१ ऊर्णु धातु को गुण हो अपृक्त हलादि पित् सार्वधातुक परे रहते ।

२ ऊर्णु धातु को विकल्प से वृद्धि हो इडादि–परस्मैपद सिच् परे रहते ।

# अथ जुहोत्यादिप्रकरणम् ।

**दानाऽदनयोः ॥ १ ॥**

**[1] जुहोत्यादिभ्यः श्लुः २ । ४ । ७५ ॥**

[ एभ्यः परस्य— ] शपः श्लुः स्यात् ॥

**[2] श्लौ ६ । १ । १० ॥**

धातोर्द्वे स्तः । जुहोति । जुहुतः ॥

**[3] अदभ्यस्तात् ७ । १ । ४ ॥**

[अभ्यस्तात्परस्य—]झस्याऽत्स्यात् । हुश्नुवोरिति यण् । जुह्वति ।

**भीह्रीभृहुवां [4] श्लुवच्च ३ । १ । ३९ ॥**

एभ्यो लिट्याम्वा स्यादामि श्लाविव कार्यं च । जुहवाञ्चकार—जुहाव । होता । होष्यति । जुहोतु—जुहुतात् । जुहुताम् । जुह्वतु । जुहुधि । जुहवानि । अजुहोत् । अजुहुताम् ॥

**[5] जुसि च ७ । ३ । ८३ ॥**

इगन्ताङ्गस्य गुणः स्यादजादौ जुसि । अजुहवुः । जुहुयात् ।

जुहोति'—हुधातुरादिर्येषान्ते जुहोत्यादयः—इति विग्रहः ।

**दाने**—हवने,**अदने**=भक्षणे । आदाने चेत्येके । तत्र **आदानं**=ग्रहणम् । अग्नावाज्यं जुहोति । श्लु=अदर्शनम् । लोप इति यावत् ।

**श्लौ**=यत्र शपः श्लुस्तत्र ।

१ जुहोत्यादिगणपठित धातुओं से परे शप् का श्लु ( लोप ) होय ।

२ धातु को द्वित्व हो श्लु के विषय में ।

३ अभ्यस्त से परे जो झ उसको अत् आदेश होय ।

४ भी ह्री भृ और हु धातु से आम् होय लिट् परे रहते और आम् परे रहते धातु को श्लु की तरह कार्य हो ।

५ इगन्त अङ्ग को गुण हो अजादि जुस् परे रहते ।

हूयात् । अहौषीत् । अहोष्यत् ॥

ञिभी भये ॥ २ ॥ बिभेति ॥

भियोऽन्यतरस्याम्[1] ६ । ४ । ११५ ॥

इकारो वा स्याद्धलादौ क्ङिति सार्वधातुके । बिभितः-बिभीतः । बिभ्यति । बिभयाञ्चकार-बिभाय । भेता । भेष्यति । बिभेतु । बिभितात्-बिभीतात् । अबिभेत् । बिभीयात्-बिभियात् । भीयात् । अभैषीत् । अभेष्यत् ॥

ह्री लज्जायाम् ॥ ३ ॥ जिह्रेति । जिह्रीतः । जिह्रियति । जिह्रयाञ्चकार,-जिह्राय । ह्रेता । ह्रेष्यति । जिह्रेतु । अजिह्रेत् । जिह्रीयात् । ह्रीयात् । अह्रैषीत् । अह्रेष्यत् ॥

पॄ पालनपूरणयोः ॥ ४ ॥

अर्तिपिपर्त्योश्च[2] ७ । ४ । ७७ ॥

अभ्यासस्य इकारोऽन्तादेशः स्यात् श्लौ । पिपर्ति ॥

उदोष्ठ्यपूर्वस्य[3] ७ । १ । १०२ ॥

अङ्गावयवौष्ठ्यपूर्वो य ॠत् तदन्तस्याङ्गस्य उत् स्यात् ॥

जिह्रियतीत्यत्र 'अचि श्नु' इतीयङ् । 'अत्र लोपोऽभ्यासस्ये' त्यतोऽभ्यासस्यति 'निजां त्रयाणा' मित्यत. श्लाविति, 'भृञामि' दित्यत इदिति चानुवर्तते । तदाह-अभ्यासस्येति ।

'ॠत इद्धातो' रित्यत ॠदित्यनुवर्तते, तदाह य ॠदिति ।

१ भी धातु को इकार आदेश हो विकल्प से हलादि कित् ङित् परे रहते ।

२ ऋ धातु और पॄ धातु के अभ्यास को इकार अन्तादेश हो श्लु के विषय में ।

३ अङ्ग का अवयव ओष्ठ्य पूर्व में है जिसके ऐसा जो ॠकार तदन्त जो अङ्ग उसको उकार आदेश होय ।

[1]हलि च ८ । २ । ७७ ॥

रेफवान्तस्य धातोरुपधाया इको दीर्घः स्याद्धलि । पिपूर्तः । पिपुरति । पपार ॥

[2]शॄदॄप्रां ह्रस्वो वा ७ । ४ । १२ ॥

एषां लिटि ह्रस्वो वा स्यात् । पप्रतुः ॥

[3]ऋच्छत्यॄताम् ७ । ४ । ११ ॥

तौदादिकऋच्छेर्ऋधातोर्ॠतां च गुणः स्याल्लिटि । पपरतुः । पपरुः ॥

[4]वॄतो वा ७ । २ । ३८ ॥

वृङ्वृञ्भ्यामॄदन्ताच्चेटो दीर्घो वा स्यान्न तु लिटि । परीता-परिता । परीष्यति–परिष्यति । पिपर्तु अपिपः । अपिपूर्ताम् । अपिपरुः । पिपूर्यात् । पूर्यात् । अपारीत् ॥

[5]सिचि च परस्मैपदेषु ७ । २ । ४० ॥

'र्वोरुपधाया दीर्घ इक'इत्यनुवर्त्याह–रेफवान्तेत्यादि ।
शॄ दॄ अत्र 'दयतेर्दिगी'त्यतो लिटीत्यनुवर्त्तते ।
'ऋतश्च सयोगादे'रित्यतो 'दयतेर्दिगी'त्यतश्चानुवर्त्याह–गुण इति ।
'अ र्धधातुकस्ये'ड्वित्यत इडित्यनुवर्त्तते । विभक्तिविपरिणामः । 'ग्रहोऽलिटी'त्यतो दीर्घ इत्यनुवर्त्तते । तदाह–दीर्घ इति ।

१ रेफान्त और वान्त धातु की उपधा के इक् को दीर्घ हो हल् परे रहते ।

२ शॄ दॄ और पॄ धातु को ह्रस्व हो लिट् परे रहते विकल्प से ।

३ तौदादिक जो ऋच्छ धातु–ऋ धातु और ॠकारान्त धातु उनको गुण हो लिट् परे रहते ।

४ वृङ् वृञ् और ॠदन्त धातु से परे जो इट् उसको दीर्घ हो विकल्प से । लिट् परे रहते नहीं हो ।

५ परस्मैपद सिच् परे रहते इट् को दीर्घ नहीं होता है ।

अत्रेटो न दीर्घः । अपारिष्टाम् । अपरीष्यत्—अपरिष्यत् ॥

**ओहाक् त्यागे ॥ ९ ॥** जहाति ॥

**जहातेश्च[1] ६ । ४ । ११६ ॥**

इत्स्याद्वा हलादौ क्ङिति सार्वधातुके ॥ जहितः ।

**ई हल्यघोः[2] ६ । ४ । ११३ ॥**

श्नाभ्यस्तयोरात ईत् स्यात् सार्वधातुके क्ङिति हलि न तु घोः । जहीतः ॥

**श्नाभ्यस्तयोरातः[3] ६ । ४ । ११२ ॥**

अनयोरातो लोपः स्यात् क्ङिति सार्वधातुके। जहति । जहौ । हाता । हास्यति । जहातु, जहितात् , जहीतात् ।

**आ च हौ[4] ६ । ४ । ११७ ॥**

'आर्धधातुकस्ये'डित्यतो 'अहोऽलिटी'त्यतो 'वृतो वे'त्यतो 'न लिङी'-त्यतश्चानुवर्त्त्याऽह—अत्रेत्यादि । 'भियोऽन्यतरस्याम्' 'अत उत्' 'इद्दरिद्रस्य' 'गमहने'त्यतोऽनुवर्त्त्याह—इदिति ।

'गमहने'त्यतः 'श्नाऽभ्यस्तयो'रित्यतः, 'अत उ'दित्यतश्चानुवर्त्त्याह—**श्नाभ्यस्तयोरिति** ।

'श्नसोरल्लोप' इत्यतो लोप इत्यनुवर्त्तते । 'गहमने'त्यत , 'अत उत्सार्वधातुके' इत्यतश्चानुवर्त्त्याह—**अनयोरिति** ।

१ हा धातु को इकार आदेश हो विकल्प से हलादि कित् ङित् सार्वधातुक परे रहते ।

२ श्ना और अभ्यस्त का जो आकार उसको ईकारादेश हो हलादि कित ङित् सार्वधातुक परे रहते । घुसञ्ज्ञक धातु को नहीं होय ।

३ श्ना और अभ्यस्त के आकार का लोप हो कित् और ङित् सार्वधातुक परे रहते ।

४ हा धातु को आकार आदेश हो हि परे रहते । और (चकार से) इकार और ईकार आदेश भी हो ।

जहातेर्हौ परे आ स्याच्चादिदीतौ। जहाहि--जहिहि--जहीहि। अजहात्। अजहुः॥

**[1]लोपो यि ६।४।११८॥**

जहातेरालोपः स्याद्यादौ सार्वधातुके। जह्यात्। एर्लिङि। हेयात्। अहासीत्। अहास्यत्॥ **माङ् माने शब्दे च॥ ६॥**

**[2]भृञामित् ७।४।७६॥**

भृञ् माङ् ओहाङ् एषां त्रयाणामभ्यासस्य इत्स्यात् श्लौ। मिमीते। मिमाते। मिमते। ममे। माता। मास्यते। मिमीताम्। अमिमीत। मिमीत। मासीष्ट। अमास्त। अमास्यत॥ **ओहाङ् गतौ॥ ७॥** जिहीते। जिहाते। जिहते। जहे। हाता। हास्यते। जिहीताम्। अजिहीत। जिहीत। हासीष्ट। अहास्त। अहास्यत॥ **डुभृञ् धारणपोषणयोः॥ ८॥** बिभर्ति। बिभृतः। बिभ्रति। बिभृते। बिभ्राते। बिभ्रते। बिभराञ्चकार--बभार। बभर्थ। बभृव। बिभराञ्चक्रे। बभ्रे। भर्तासि। भर्तासे। भरिष्यति। भरिष्यते। बिभर्तु। बिभराणि। बिभृताम्। अबिभः। अबिभृताम्। अबिभरुः। अबिभृत। बिभृयात्। बिभ्रीत। भ्रियात्। भृषीष्ट। अभार्षीत्। अभृत। अभरिष्यत्। अभरिष्यत॥

'जहातेश्च' 'इद्दरिद्रस्य' 'ई हल्यघो'रित्येतेभ्योऽनुवर्त्याह--**जहातेरिति**।
'जहातेश्चे'त्यनुवर्त्याह। **जहातेरिति**।
'निजां त्रयाणाम्' 'अत्र लोप' इत्यतोऽनुवर्त्याह **अभ्यासस्येति**।
**बभर्थे**त्यत्र 'कृसृभृवृ' इति नेट्।

१ हा धातु के आकार का लोप हो यकारादि सार्वधातुक परे रहते।

२ भृञ्-माङ् ओहाङ् इन तीनों धातुओं के अभ्यास को इकार आदेश हो श्लु के विषय में।

**डुदाञ् दाने ॥९॥** ददाति । दत्तः । ददति । दत्ते । ददाते । ददते । ददौ । ददे । दातासि । दातासे । दास्यति । दास्यते । ददातु ॥

**[1]दाधा घ्वदाप् १।१।२०॥**

दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना । घ्वसो-रित्येत्वम् । देहि । दत्तम् । अददात् । अदत्त । दद्यात् । ददीत । देयात् । दासीष्ट । अदात् । अदाताम् । अदुः ॥

**[2]स्थाघ्वोरिच्च १।२।१७॥**

अनयोरिदन्तादेशः स्यात् सिच्च कित्स्यादात्मनेपदे । अदित । अदास्यत् । अदास्यत ॥ **डुधाञ् धारणपोषणयोः॥१०॥** दधाति ॥

**[3]दधस्तथोश्च ८।२।३८॥**

द्विरुक्तस्य झषन्तस्य धाञो बशो भष् स्यात्तथोः स्ध्वोश्च परतः । धत्तः । दधति । दधासि । धत्थः । धत्थ । धत्ते । दधाते । दधते । धत्से । धद्ध्वे । **घ्वसोरेद्धावभ्यासलोपश्च ।** धेहि । अदधात् । अधत्त । दध्यात् । दधीत । धेयात् । धासीष्ट ।

दाधा—प्रथमान्त, घु—प्रथमान्तम् । अदाप्—प्रथमान्तम् ।
'लिङ्सिचा'वित्यतः, 'हनः सि'जित्यतः, 'असंयोगाल्लि'ड्डित्यतश्चानुवर्त्याह—सिच्चेति । 'एकाचो वशोभषि'त्यतोऽनुवर्त्याह—झषन्तस्येति ।

[1] दारूप और धारूप जो धातु उसकी घु संज्ञा हो दाप् और दैप् धातु को छोड़कर के ।

[2] स्थाधातु और घुसञ्ज्ञक धातु को इकार अन्तादेश हो और सिच् कित् हो आत्मनेपदपरे रहते ।

[3] द्विरुक्त झषन्त जो धाधातु तदवयव जो बश् उसको भष्भाव हो त थ और स ध्व परे रहते ।

अधात् । अधित । अधास्यत् । अधास्यत ॥ णिजिर् शौचपोषणयोः ॥ ११ ॥ *इर इत्संज्ञा वाच्या ॥[1]

णिजां[2] त्रयाणां गुणः श्लौ ७ । ४ । ७५ ॥

णिज्विज्विषामभ्यासस्य गुणः स्यात् श्लौ । नेनेक्ति । नेनिक्तः । नेनिजति । नेनिक्ते । निनेज । निनिजे । नेक्ता । नेक्ष्यति । नेक्ष्यते । नेनेक्तु । नेनिग्धि ॥

नाऽभ्यस्तस्याऽचि[3] पिति सार्वधातुके ७ । ३ । ८७ ॥

( अभ्यस्तस्याऽचि पिति सार्वधातुके–) लघूपधगुणो न स्यात् । नेनिजानि । नेनिक्ताम् । अनेनेक् । अनेनिक्ताम् । अनेनिजुः । अनेनिजम् । अनेनिक्त । नेनिज्यात् । नेनिजीत । निज्यात् । निक्षीष्ट ॥

इरितो[4] वा ३ । १ । ५७ ॥

इरितो धातोश्च्लेरङ् वा स्यात्परस्मैपदेषु । अनिजत् । अनैक्षीत् । अनिक्त । अनेक्ष्यत् । अनेक्ष्यत ॥

इति जुहोत्यादयः ॥ ३ ॥

**शौचं**=प्रक्षालनम् । 'अत्र लोपोऽभ्यासस्ये'त्यतोऽनुवर्त्याह—**अभ्यासस्येति** । 'मिदेर्गुण'इत्यतो गुण इति 'पुगन्ते'त्यतो लघूपधेति चानुवर्त्तते ।

*इति सरलायां जुहोत्यादिप्रकरणम्*

१ इर् की इत्सञ्ज्ञा हो ।

२ णिज्–विज् और विष् धातु के अभ्यास को गुण हो श्लु के विषय में ।

३ अभ्यस्त को लघूपध गुण नहीं होय अजादि पित् सार्वधातुक परे रहते ।

४ इरित् (इर् इत्सञ्ज्ञक) धातु से परे च्लि को अङ् हो विकल्प से परस्मैपद में ।

# अथ दिवादयः

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ॥ १ ॥

दिवादिभ्यः श्यन्[१] ३ । १ । ६९ ॥

( एभ्यः श्यन् स्यात्कर्त्रर्थे सार्वधातुके परे ) । शपोऽपवादः । हलि चेति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु । अदीव्यत् । दीव्येत् । दीव्यात् । अदेवीत् । अदेविष्यत् ॥ एवं षिवु तन्तुसन्ताने ॥२॥ नृती गात्रविक्षेपे ॥३॥ नृत्यति । ननर्त । नर्तिता ॥

सेऽसिचि कृतचृतच्छृदतृदनृतः[२] ७ । २ । ५७ ॥

एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्येड्वा स्यात् । नर्तिष्यति-नर्त्स्यति । नृत्यतु । अनृत्यत् । नृत्येत् । नृत्यात् । अनर्तीत् । अनर्तिष्यत्, अनर्त्स्यत् ॥ त्रसी उद्वेगे ॥ ४ ॥ वा भ्राशेति श्यन्वा । त्रस्यति-त्रसति । तत्रास ॥

वा जॄभ्रमुत्रसाम्[३] ६ । ४ । १२४ ॥

'सार्वधातुके यक्' 'कर्तरि शप्' इत्याभ्यामनुवर्त्याह–कर्त्रर्थे इति ।
'वसतिक्षुधोरिट्' 'उदितो वा' इत्याभ्यामनुवर्त्याह–इड्वेति ।
'घोर्लोपो लेटि' इत्यतोऽनुवर्त्याह–लोपाविति ।

१ दिवादि गणपठित जो धातु उनसे परे श्यन् हो, कर्त्रर्थक सार्वधातुक परे रहते ।

२ कृत-चृत-छृद-तृद नृत इन धातुओं से परे जो सिच्भिन्न सादि आर्धधातुक उसको इट् का आगम विकल्प से हो ।

३ जॄ-भ्रमु त्रस इन धातुओं को एत्वाऽभ्यासलोप विकल्प से हो कित् लिट् और सेट थल् परे रहते ।

एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा स्तः। त्रेसतुः—तत्रसतुः। त्रेसिथ—तत्रसिथ। त्रसिता॥ शो तनूकरणे॥५॥

**ओतः[1] श्यनि ७। ३। ७१॥**

लोपः स्यात् श्यनि। श्यति। श्यतः। श्यन्ति। शशौ। शशतुः। शाता। शास्यति॥

**विभाषा घ्राधेट्शाच्छासः[2] २। ४। ७८॥**

एभ्यः सिचो लुग्वा स्यात् परस्मैपदे परे। अशात्। अशाताम्। अशुः॥ इट्सकौ। अशासीत्। अशासिष्टाम्॥

**छो छेदने॥६॥** छ्यति॥ **षोऽन्तकर्मणि॥७॥** स्यति। ससौ [ सेयात्। असात्। असासीत्। ]॥ **दो अवखण्डने॥८॥** द्यति। ददौ। देयात्। अदात्॥ **व्यध ताडने॥९॥**

**ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च[3] ६। १। १६॥**

एषां सम्प्रसारणं स्यात्किति ङिति च। विध्यति। विव्याध। विविधतुः। विविधुः। विव्यधिथ-विव्यद्ध। व्यद्धा। व्यत्स्यति। विध्येत्। विध्यात्। अव्यात्सीत्॥ **पुष पुष्टौ॥१०॥** पुष्यति। पुपोष। पुपोषिथ। पोष्टा। पोक्ष्यति। पुषादीत्यङ्। अपुषत्॥

'ण्यक्षत्रियार्षञितः' 'गातिस्थाघुपाभूभ्यः' इत्येताभ्यामनुवर्त्याह—सिच इति। 'ष्यङः सम्प्रसारणम्' इत्यतः 'सम्प्रसारण'मित्यनुवर्तते। 'आर्धधातु-

१ ओकार का लोप हो श्यन् परे रहते।

२ घ्रा धेट्-शो-छो-और षो-इन धातुओं से परे जो सिच् उसका लुक् हो विकल्प से परस्मैपद परे रहते।

३ ग्रह्यादि [ ग्रह-ज्या-वेञ्-व्यध-वष्टि विच व्रश्च-प्रच्छ-और भ्रस्ज इन ] धातुओं को सम्प्रसारण हो कित्-ङित् परे रहते।

शुष शोषणे ॥ ११ ॥ शुष्यति । शुशोष । अशुषत् ॥

णश अदर्शने ॥१२॥ नश्यति । ननाश । नेशतुः ॥

[1]रधादिभ्यश्च ७ । २ । ४५ ॥

रध् नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात् । नेशिथ ॥

[2]मस्जिनशोर्झलि ७ । १ । ६० ॥

नुम् स्यात् । ननंष्ठ । नेशिव नेश्व । नेशिम-नेश्म । नशिता—नंष्टा । नशिष्यति—नङ्क्ष्यति । नश्यतु । अनश्यत् । नश्येत् । नश्यात् । अनशत् । षूङ् प्राणिप्रसवे ॥१३॥ सूयते । सुषुवे । क्रादिनियमादिट् । सुषुविषे । सुषुविवहे । सुषुविमहे । सविता सोता ॥

दूङ् परितापे ॥१४॥ दूयते ॥

दीङ् क्षये ॥ १५ ॥ दीयते ॥

[3]दीङो युडचि क्ङिति ६ । ४ । ६३ ॥

दीङः परस्याऽजादेः क्ङित आर्धधातुकस्य युट् स्यात् ।*[4]वुग्युटा-

कस्येट्' इत्यतः 'इट्' इति, 'स्वरतिसूतिसूयति' इत्यतो 'वेति' चानुवर्त्याह-वलाद्येति ।

नुमिति । 'इदितो नुम् धातोः' इत्यतः 'नुम्' इत्यनुवर्तते ।

'आर्धधातुके' इत्यधिकृत्याह—आर्धधातुकस्येति । सिद्धाविति।तन

१ रध्-नश्-तृप-दृप्-द्रुह-मुह-ष्णुह-इन धातुओं से परे जो वलादि आर्धधातुक उसको विकल्प से इट् हो ।

२ मस्जि और नश् धातु को नुम् हो झल् परे रहते ।

३ दीङ् धातु से परे जो अजादि कित् ङित् आर्धधातुक उसको युट् हो ।

४ उवङ् और यण् करना हो तो वुक् और युट् सिद्ध ही रहते हैं, 'असिद्धवदत्राभात्' इस सूत्र से असिद्ध नहीं होते हैं ।

चुवङ्यणोः सिद्धौ वक्तव्यौ । दिदीये ॥

**मीनातिमिनोतिदीङां ल्यपि च ६ । १ । ५० ॥**

एषामात्वं स्याल्ल्यपि, चादशित्येज्निमित्ते । दाता । दास्यति । *स्थाघ्वोरिच्चे दीङः प्रतिषेधः । अदास्त ॥ **डीङ् विहायसा गतौ ॥१६॥** डीयते । डिड्ये । डयिता ॥ **पीङ् पाने ॥१७॥** पीयते । पेता । अपेष्ट ॥ **माङ् माने ॥१८॥** मायते । ममे ॥

**जनी प्रादुर्भावे ॥ १९ ॥**

**ज्ञाजनोर्जा ७ । ३ । ७९ ॥**

अनयोर्जादेशः स्याच्छिति । जायते । जज्ञे । जनिता । जनिष्यते ॥

**दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ३।१।६१॥**

एभ्यश्च्लेश्चिण् वा स्यादेकवचने तशब्दे परे ॥

**चिणो लुक् ६ । ४ । १०४ ॥**

'असिद्धवदत्राभात्' इत्यसिद्धत्वं न । 'आदेश उपदेशेऽशिति' इति सूत्रमनुवर्त्योक्तम्-**आत्वमित्यादि** । 'ष्ठिवुक्लमुचमाम्'-इत्यतः 'शिति' इत्यनुवर्त्तते । तदाह-**शितीति** । 'चिण् ते पदः' 'च्लेः सिच्' इत्येताभ्यां 'चि'णिति,'च्लेः' इति पदद्वयमनुवर्त्तते, तदाह-**एभ्यश्च्लेरिति** ।

१ मीञ् मिञ् और दीङ् धातु को आत्व हो; ल्यप्-परे रहते । चकार से शित् भिन्न एचिनमित्तक प्रत्यय परे रहते भी आत्व हो ।

२ स्थाघ्वोरिच्च-इस-सूत्र से प्राप्त जो इत्त्व वह दीङ् धातु को नहीं हो ।

३ ज्ञा और जन् धातु को जा आदेश हो शित् परे रहते ।

४ दीप जन बुध पूरि तायि और प्यायि इनसे परे जो च्लि उसको चिण् आदेश हो एकवचन त शब्द परे रहते ।

५ चिण् से परे जो त शब्द उसका लुक् हो ।

चिणः परस्य [तशब्दस्य] लुक् स्यात् ॥

**जनिवध्योश्च ७ । ३ । ३५ ॥**

अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अजनि अजनिष्ट ॥ **दीपी दीप्तौ** ॥२०॥ दीप्यते । दिदीपे । अदीपि-अदीपिष्ट ॥ **पद गतौ** ॥२१॥ पद्यते । पेदे । पत्ता । पत्सीष्ट ॥

**चिण् ते पदः ३ । १ । ६० ॥**

पदश्च्लेश्चिण् स्यात्तशब्दे परे । अपादि । अपत्साताम् । अपत्सत ॥ **विद सत्तायाम्** ॥२२॥ विद्यते । वेत्ता । अवित्त ॥ **बुध अवगमने** ॥ २३ ॥ बुध्यते । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि अबुद्ध । अभुत्साताम् ॥ **युध सम्प्रहारे** ॥ २४ ॥ युध्यते । युयुधे । योद्धा । अयुद्ध ॥

**सृज विसर्गे** ॥२५॥ सृज्यते । ससृजे । ससृजिषे ॥

**सृजिदृशोर्झल्यमकिति ६ । १ । ५८ ॥**

अनयोरमागमः स्याज्झलादावकिति । स्रष्टा । स्रक्ष्यति । स्रक्ष्यते । सृक्षीष्ट । असृष्ट । असृक्षाताम् ॥ **मृष तितिक्षायाम्** ॥ २६ ॥

तशब्दस्येति । 'अङ्गस्ये'त्यधिकाराच्चिणन्तस्याङ्गत्वप्रयोजकप्रत्ययस्य लाभेन तादृगप्रत्ययस्य 'त'स्य लोप इति लभ्यते इति भावः । 'अचो ञ्णिति' 'मृजेर्वृद्धिः' 'अत उपधायाः' 'आतो युक्' 'नोदात्तोपदेशस्य' इत्येतेभ्यो यथायथमनुवर्त्याह–**उपधाया इति** । **पदश्च्लेरिति** । 'च्लेः सिच्'इत्यत-'च्ले'रित्यनुवर्तते ।

१ जन और वध धातु का उपधाभूत जो अच् उसको वृद्धि नहीं हो चिण् और ञित् णित् कृत् परे रहते ।

२ पद धातु से परे जो च्लि उसको चिण् हो त शब्द परे रहते ।

३ सृज् और दृश् धातु को अम् का आगम हो कित् भिन्न झलादि परे रहते ।

मृष्यति मृष्यते । ममर्ष । ममर्षिथ । ममृषिषे । मर्षितासि । मर्षितासे । मर्षिष्यति मर्षिष्यते ॥

**णह बन्धने** ॥२७॥ नह्यति । नह्यते । ननाह । नेहिथ-ननद्ध । नेहे । नद्धा । नत्स्यति । अनात्सीत्—अनद्ध ॥

* इति दिवादिप्रकरणम् ॥ ४ ॥

## अथ स्वादिप्रकरणम् ।

**षुञ् अभिषवे** ॥ १ ॥

**स्वादिभ्यः श्नुः । ३ । १ । ७३ ॥**[1]

[ स्वादिभ्यः श्नुः स्यात्कर्त्रर्थे सार्वधातुके परे ] । शपोऽपवादः । सुनोति । सुनुतः । हुश्नुवोरिति यण् । सुन्वन्ति । सुन्वः—सुनुवः । सुनुते । सुन्वाते । सुन्वते । सुन्वहे—सुनुवहे । सुषाव—सुषुवे । सोता । सुनु । सुनवानि । सुनवै । सुनुयात् । सूयात् ॥

**स्तुसुधूञ्भ्यः परस्मैपदेषु । ७ । २ । ७२ ॥**[2]

एभ्यस्सिच इट् स्यात्परस्मैपदेषु । असावीत् । असोष्ट ॥

**चिञ् चयने** ॥ २ ॥ चिनोति । चिनुते ॥

**विभाषा चेः । ७ । ३ । ५८ ॥**[3]

'सार्वधातुके यक्' इत्यत 'कर्तरि शप्' इत्यतश्चानुवर्त्याह—कर्त्रर्थे इति । 'इडत्यर्तिव्ययतीनाम्' 'अञ्जेः सिचि' इत्याभ्यां 'इट्' इति 'सिच्' इति

१ कर्त्रर्थक सार्वधातुक परे रहते स्वादिगणपठित धातुओं से श्नु प्रत्यय होय ।
२ स्तु सु और धूञ् इनसे परे जो सिच् उसको इट् हो परस्मैपद परे रहते ।
३ अभ्यास से परे चिञ् धातु को कुत्व हो विकल्प करके सन् और लिट् परे रहते ।

अभ्यासात्परस्य कुत्वं वा स्यात्सनि लिटि च । चिकाय-चिचाय । चिक्ये-चिच्ये । अचैषीत् । अचेष्ट ॥

स्तृञ् आच्छादने ॥ ३ ॥ स्तृणोति । स्तृणुते ॥

शर्पूर्वाः[1] खयः । ७ । ४ । ६१ ॥

अभ्यासस्य शर्पूर्वाः खयः शिष्यन्तेऽन्ये हलो लुप्यन्ते । तस्तार । तस्तरतुः । तस्तरे । गुणोर्तीति गुणः । स्तर्यात् ॥

ऋतश्च संयोगादेः[2] । ७ । २ । ४३ ॥

ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड्वा स्यात्तङि । स्तरिषीष्ट, स्तृषीष्ट । अस्तरिष्ट—अस्तृत ॥ धूञ् कम्पने ॥ ४ ॥ धुनोति । धुनुते । दुधाव । स्वरतीति वेट् । दुधविथ-दुधोथ ॥

श्र्युकः[3] क्किति । ७ । २ । ११ ॥

श्रिञ एकाच उगन्ताच्च गित्कितोरिण् न स्यात् । परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । दुधुविव । दुधुवे । अधावीत् । अधविष्ट-अधोष्ट । अधविष्यत्—अधोष्यत् । अधविष्यताम्—अधोष्यताम् । अधविष्यत—अधोष्यत ॥

* इति स्वादिप्रकरणम् ॥ ५ ॥ *

चानुवर्तते । 'चजो कुघि'दिति 'अभ्यासाच्च' 'सँल्लिटोर्जेः' इत्येतेभ्यश्च 'कु' ,अभ्यासात्' 'सँल्लिटोरि'त्यनुवर्त्याह--अभ्यासादिति ।

शर्पूर्वा इति । 'हलादि. शेष.'इत्यस्यापवादोऽयम् । 'इट्सनि वा''लिङ्सिचोरात्मनेपदेषु' इत्याभ्याम् 'इट्' 'लिङ्सिचोः' इति पदद्वयमनुवर्त्याह--लिङ्सिचोरिति । वैकल्पिक इट् । 'नेड्वशि कृति' 'एकाच उपदेश'--इत्येताभ्या 'न' इति 'एकाच' इति च पदमनुवर्त्याह--एकाच इति ।

१ अभ्यास का जो शर्पूर्वक खय् उनका शेष हो अन्य हलों का लोप हो ।

२ ऋदन्तसयोगादि धातु से परे लिङ् और सिच् को इट् का आगम हो विकल्प से तङ् परे रहते ।

३ श्रिञ् एकाच् और उगन्त धातु से परे जो गित् और कित् प्रत्यय उनको इट् नहीं हो ।

# अथ तुदादिप्रकरणम् ।

तुद् व्यथने ॥ १ ॥

[1] तुदादिभ्यः शः । ३ । १ । ७७ ॥

[ तुदादिभ्यः शः स्यात्कर्त्रर्थे सार्वधातुके परे ] । शपोऽपवादः । तुदति । तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत् । अतुत्त ॥ णुद प्रेरणे ॥ २ ॥ नुदति । नुदते । नुनोद । नोत्ता । भ्रस्ज पाके ॥ ३ ॥ ग्रहिज्येति सम्प्रसारणम् । सस्य श्चुत्वेन शः । शस्य जश्त्वेन जः । भृज्जति-भृज्जते । ।

[2] भ्रस्जो रोपधयो रमन्यतरस्याम् । ६ । ४ । ४७ ॥

भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । मित्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज । बभर्जतुः । बभर्जिथ-बभर्ष्ठ । बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । स्कोरिति सलोपः । व्रश्चेति षः । बभ्रष्ठ । बभर्जे-बभ्रज्जे । भर्ष्टा-भ्रष्टा । भर्क्ष्यति-भ्रक्ष्यति । [3] *क्ङिति रमागमं बाधित्वा सम्प्र-

तुदादिभ्य इति । 'कर्तरि शप्' इत्यनेन प्राप्तस्य शपोऽपवादः । तुदतीति । परमपि लघूपधगुणं बाधित्वा नित्यत्वात् शप्रत्यये कृते तस्य अपित्सार्वधातुकतया ङित्त्वात् लघूपधगुणो नेति भावः । अतौत्सीदिति । झलो झलि इति सिचः सलोपः । 'आर्धधातुके' इत्यधिकृत्याह-आर्धेति ।

रमागमस्यावकाशः भर्ष्टा, भर्क्ष्यतीति । सम्प्रसारणस्यावकाशः

१ तुदादि गणपठित धातुओं से श प्रत्यय होय कर्त्रर्थक सार्वधातुक परे रहते ।

२ भ्रस्ज धातु का जो रेफ और उपधा उनके स्थान में रम् का आगम होय विकल्प करके आर्धधातुक परे रहते ।

३ कित् ङित् परे रहते रमागम को बाधकर पूर्वविप्रतिषेध करके सम्प्रसारण ही हो ।

सारणं पूर्वविप्रतिषेधेन । भृज्ज्यात् । भृज्ज्यास्ताम् । भृज्ज्यासुः । भर्क्षीष्ट-भ्रक्षीष्ट । अभार्क्षीत्-अभ्राक्षीत् । अभर्ष्ट-अभ्रष्ट ॥ **कृष विलेखने** ॥ ४ ॥ कृषति । कृषते । चकर्ष । चकृषे ॥

**अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् । ६ । १ । ५९ ॥**

उपदेशेऽनुदात्तो य ऋदुपधस्तस्याऽम्वा स्याज्झलादावकिति । क्रष्टा-कर्ष्टा । कृक्षीष्ट । *स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः । अक्राक्षीत् । अकार्क्षीत्-अकृक्षत् । अकृष्ट । अकृक्षाताम् । अकृक्षत ॥ क्सपक्षे-अकृक्षत । अकृक्षाताम् । अकृक्षन्त ॥

**मिल सङ्गमे** ॥ ५ ॥ मिलति-मिलते । मिमेल । मेलिता । अमेलीत् ॥ **मुच्लृ मोचने** ॥ ६ ॥

**शे मुचादीनाम् । ७ । १ । ५९ ॥**

मुच्-लिप्-विद्-लुप्-सिच्-कृत्-खिद्-पिशां नुम् स्यात् शे परे । मुञ्चति । मुञ्चते । मोक्ता । मुच्यात् । मुक्षीष्ट । अमुचत् । अमुक्त । अमुक्षाताम् ॥ **लुप्लृ छेदने** ॥७॥ लुम्पति । लुम्पते । लोप्ता । अलुपत्-अलुप्त ॥ **विद्लृ लाभे** ॥ ८ ॥ विन्दति । विन्दते । विवेद-विविदे । व्याघ्रभूतिमते सेट् । वेदिता । भाष्यमतेऽनिट् । परिवेत्ता ॥

**षिच क्षरणे** ॥ ९ ॥ सिञ्चति । सिञ्चते ॥

इज्यात्, सुप्यात् इति । 'भृज्ज्या' दित्यत्र तु परत्वादमागमे प्राप्ते पूर्वविप्रतिषेधेन सम्प्रसारणं भवतीति भावः । 'सृजिदृशोर्झल्यम्' इत्यतः 'अम्' इत्यनुवर्तते । 'इदितो नुम्' इत्यतो नुमित्यनुवर्त्याह-**नुमिति** ।

१ उपदेश में अनुदात्त जो ऋदुपद धातु उसको अम् का आगम हो विकल्प से कित्भिन्न झलादि परे रहते ।

२ स्पृश् मृश कृश् तृप् और दृप् से परे च्लि को सिच् विकल्प करके हो ।

३ मुच् लिप् विद् लुप् सिच् कृत् खिद् और पिश् इनको नुम हो शपरे रहते ।

**लिपिसिचिह्वश्च । ३ । १ । ५३ ॥**

एभ्यश्च्लेरङ् स्यात् । असिचत् ॥

**आत्मनेपदेष्वन्यतरस्याम् । ३ । १ । ५४ ॥**

लिपिसिचिह्वः परस्य च्लेरङ् वा [ स्यात् तङि ] । असिचत-असिक्त ॥ **लिप उपदेहे** ॥ १० ॥ उपदेहो वृद्धिः । लिम्पति । लिम्पते । लेप्ता । अलिपत् । अलिपत । अलिप्त ॥

* इत्युभयपदिनः *

**कृती छेदने** ॥११॥ कृन्तति । चकर्त । कर्तिता । कर्तिष्यति-कर्त्स्यति । अकर्तीत् ॥ **खिद परिघाते** ॥१२॥ खिन्दति । चिखेद । खेत्ता ॥ **पिश अवयवे** ॥ १३ ॥ पिशति । पेशिता ॥ **ओव्रश्चू-छेदने** ॥ १४ ॥ वृश्चति । वव्रश्च । वव्रश्चिथ-वव्रष्ठ । व्रश्चिता–व्रष्टा । व्रश्चिष्यति–व्रक्ष्यति । वृश्च्यात् । अव्रश्चीत्–अव्राक्षीत् ॥ **व्यच व्याजीकरणे** ॥ १५ ॥ विचति । विव्याच । विविचतुः । व्यचिता । व्यचिष्यति । विच्यात् । अव्यचीत्-अव्याचीत् । 'व्यचेः कुटादित्वमनसी'ति तु नेह प्रवर्तते, अनसीति पर्युदासेन कृन्मात्रविषयत्वात् ॥ **उछि उञ्छे** ॥ १६ ॥ उञ्छति । 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' इति यादवः ॥ ऋच्छ

'च्ले' सिच्' 'अस्यातवक्तिख्यातिभ्य.' इत्याभ्याम् 'च्ले.' 'अङ्' इत्यनुवर्त्योक्त-च्लेरिति । 'च्लेः सिच्' 'अस्यतिवक्ति' 'लिपिसिची'त्यतः 'च्लेः' 'अङ्' 'लिपिसिचिह्वः'–इति । पदत्रयमनुवर्त्याह–**लिपिसिचीति** । इडभावे वृद्धिः सलोपः षत्वं कत्वं च । **व्याजीकरणे**=छलकरणम् ।

१ लिप् सिच् और ह्वेञ् इनसे परे च्लि को अङ् होय ।

२ लिप् सिच् और ह्वेञ् इनसे, परे च्लि को अङ् हो विकल्प करके तङ् परे रहते ।

गतीन्द्रियप्रलयमूर्तिभावेषु ॥१७॥ ऋच्छति । ऋच्छत्यॄतामिति गुणः । द्विहल्ग्रहणस्याऽनेकहलुपलक्षणत्वान्नुट् । आनर्च्छ । आनर्च्छतुः । ऋच्छिता ॥ **उज्झ उत्सर्गे** ॥ १८ ॥ उज्झति ॥

**लुभ विमोहने** ॥ १९ ॥ लुभति ॥

**तीषसहलुभरुषरिषः** । ७ । २ । ४८ ॥

इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात् । लोभिता-लोब्धा । लोभिष्यति ॥ **तृप तृम्फ तृप्तौ** ॥ २०-२१ ॥ तृपति। ततर्प । तर्पिता । अतर्पीत् । तृम्फति। ***शे तृम्फादीनां नुम्वाच्यः** । आदिशब्दः प्रकारे । तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः। ततृम्फ । तृफ्यात् । **मृड पृड सुखने** ॥ २२-२३ ॥ मृडति । पृडति ॥ **शुन गतौ** ॥२४॥ शुनति ॥ **इषु इच्छायाम्** ॥२५॥ इच्छति । एषिता-एष्टा । एषिष्यति । इष्यात् । ऐषीत् ॥ **कुट कौटिल्ये** ॥ २६ ॥ गाङ्कुटादीति ङित्त्वम् । चुकुटिथ । चुकोट-चुकुट । कुटिता ॥ **पुट संश्लेषणे** ॥ २७ ॥ पुटति । पुटिता ॥ **स्फुट विकसने** ॥ २८ ॥ स्फुटति । स्फुटिता ।

**स्फुर स्फुल सञ्चलने** ॥ २९-३० ॥ स्फुरति । स्फुलति ॥

**इन्द्रियप्रलयः**-निश्चेष्टता, जडता वा । **मूर्तिभावः**-काठिन्यम् । ( जमना, कड़ा होना ) ।

**उत्सर्गः**=त्यागः । **विमोहनम्**=आकुलीकरणम् ।

'आर्धधातुकस्य' 'स्वरतिसूति' इत्याभ्यां 'इट्' इति, 'वा' इति चानुवर्त्याह-**तादेरार्धेति** । तथा च तृम्फसदृशधातूनां नुमागमो भवति शे परे इति वार्तिकार्थः । नकारवत्त्वेन च सादृश्यम् । तदाह-**तेनेति** । अत्र नकारस्यानुस्वारपरसवर्णाभ्यां मकार इति नकारानुषक्तत्वमस्त्येवेति भावः ।

१ इच्छत्यादि से परे जो तादि आर्धधातुक उसको इट् हो विकल्प करके ।

२ तृम्फादिकों को नुम् हो श परे रहते ।

**स्फुरतिस्फुलत्योर्निर्निविभ्यः[1] । ८ । ३ । ७६ ॥**

षत्वं वा स्यात् । निःस्फुरति-निःष्फुरति ॥ **ण स्तवने ॥ ३१ ॥** परिणूतगुणोदयः । नुवति । नुनाव । नुविता ॥ **टुमस्जो शुद्धौ ॥३२॥** मज्जति । ममज्ज । ममज्जिथ मस्जिनशोरिति नुम् । **मस्जेरन्त्यात्पूर्वो[2] नुम्वाच्यः ।** संयोगादिलोपः । ममङ्क्थ-मङ्क्ता । मङ्क्ष्यति । अमाङ्क्षीत् । अमाङ्क्ताम् । अमाङ्क्षुः ॥ **रुजो भङ्गे ॥३३॥** रुजति । रोक्ता । रोक्ष्यति । अरौक्षीत् ॥ **भुजो कौटिल्ये ॥३४॥** रुजिवत् ॥ **विश प्रवेशने ॥३५॥** विशति । **मृश आमर्शने ॥३६॥** आमर्शनं स्पर्शः ॥ **अनुदात्तस्य चर्दुपध-स्यान्यतरस्याम् ।।** अम्राक्षीत्-अमार्क्षीत्-अमृक्षत् ॥ **षद्लृ विशरणगत्यवसादनेषु ॥३७॥** सीदतीत्यादि । **शद्लृ शातने ॥३८॥**

**शदेः शितः[3] । १ । ३ । ६० ॥**

शिद्भाविनोऽस्मात्तङानौ स्तः । शीयते । शीयताम् । अशीयत । शीयेत । शशाद । शत्ता । शत्स्यति । अशदत् । अशत्स्यत् । **कॄ विक्षेपे ॥३९॥**

**ॠत इद्धातोः[4] । ७ । १ । १०० ॥**

ॠदन्तस्य धातोरङ्गस्य इत्स्यात् । किरति । चकार । चकरतुः ।

'अपदान्तस्य मूर्धन्यः' 'सिवादीना वा' इत्याभ्यां 'मूर्धन्य' इति 'वा' इति चानुवर्त्याह-**षत्वं वेति ।**

'अनुदात्तङितः' इत्यतः 'आत्मनेपदम्' इत्यनुवर्तते । लृदित्वादङ् । 'इत्वोत्वाभ्या गुणवृद्धी विप्रतिषेधेन' इति वार्तिकमनुसृत्याह-**चकारेति ।**

१ निर् नि और वि उपसर्ग से परे जो स्फुर् स्फुल् उसको षत्व हो विकल्प ।

२ मस्जधातु के अन्त्य से पूर्व नुम् हो ।

३ शिद्भावी जो शद् धातु उससे आत्मनेपद हो ।

४ ॠदन्त जो धातु का अङ्ग उसको इत् हो ।

चकरुः । करीता—करिता । कीर्यात् ॥

**किरतौ[1] लवने । ६ । १ । १४० ॥**

उपात्किरतेः सुट् स्याच्छेदने । उपस्किरति । *अड्भ्यास-व्यवायेऽपि[2] सुट् कात् पूर्व इति वक्तव्यम् । उपास्किरत् । उपचस्कार ।

**हिंसायां[3] प्रतेश्च । ६ । १ । १४१ ॥**

[उपात्प्रतेश्च] किरतेः सुट् स्याद्धिंसायाम् । उपस्किरति । प्रतिस्किरति ॥ गॄ निगरणे ॥ ४० ॥

**अचि[4] विभाषा । ८ । २ । २१ ॥**

गिरते रेफस्य लो वा स्यादजादौ प्रत्यये । गिरति—गिलति । जगार—जगाल । जगरिथ—जगलिथ । गरीता गरिता । गलीता—गलिता ॥ प्रच्छ ज्ञीप्सायाम् ॥४१॥ ग्रहिज्येति सम्प्रसारणम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छुः । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् ॥ मृङ् प्राणत्यागे ॥ ४२ ॥

**म्रियतेर्लुङ्लिङोश्च[5] । १ । ३ । ६१ ॥**

'सुट् कात्पूर्व''उपात्प्रतियत्ने'त्याभ्यां'सुट्''उपात्'इति पदद्वयमनुवर्त्याह—उपादितिवक्तव्यमिति ।'सुट्कात्पूर्व'इति सूत्रे'अड्भ्यासव्यवायेऽपि'इत्येवं वार्तिकं कर्तव्यमित्यर्थः । 'सुट्कात्' 'उपात् प्रतियत्ने' 'किरतौ लवने' इत्येतेभ्यः 'सुट्' 'उपात्''किरतेः' इति पदत्रयमनुवर्त्याह—उपादित्यादि । 'कृपो रो लः''ग्रो यङि' इत्येताभ्यां 'ग्र' इति 'लः' इति चानुवर्त्याह—गिरतेरिति।

१ उप से परे जो कॄ धातु उसको सुट् हो छेदन-अर्थ में ।

२ अट् और अभ्यास के व्यवधान में भी ककार से पूर्व सुट् हो ।

३ उप और प्रति से परे कॄ धातु को सुट् हो हिंसा अर्थ में ।

४ गॄ धातु के रेफ को लकार हो अजादि प्रत्यय परे रहते ।

५ मृङ् धातु से लुङ् लिङ् परे रहते और शित् परे रहते ही आत्मनेपद हो । अन्यत्र नहीं हो ।

लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र । रिङ् । इयङ् । म्रियते । ममार । मर्ता । मरिष्यति । मृषीष्ट । अमृत ॥ पृङ् व्यायामे ॥ ४३ ॥ प्रायेणाऽयं व्याङ्पूर्वः । व्याप्रियते । व्यापप्रे । व्यापप्राते । व्यापरिष्यते । व्यापृत । व्यापृषातास् ॥ **जुषी प्रीति-सेवनयोः** ॥ ४४ ॥ जुषते । जुजुषे ॥ **ओविजी भयचलनयोः** ॥ ४५ ॥ प्रायेणायमुत्पूर्वः । उद्विजते ॥

**विज इट् १ । २ । ६२ ॥**

विजः पर इडादिप्रत्ययो ङिद्वत्स्यात् । उद्विजिता ॥

* इति तुदादिप्रकरणम् ॥ ६ ॥ *

# अथ रुधादिप्रकरणम् ।

**रुधिर् आवरणे ॥ १ ॥**

**रुधादिभ्यः श्नम् ३ । १ । ७८ ॥**

शपोऽपवादः । रुणद्धि । श्नसोरल्लोपः । रुन्धः । रुन्धन्ति । रुणत्सि । रुन्धः । रुन्ध । रुणध्मि । रुन्ध्वः । रुन्ध्मः । रुन्धे । रुन्धाते । रुन्धते । रुन्त्से । रुन्धाथे । रुन्ध्वे । रुन्धे । रुन्ध्वहे । रुन्ध्महे । रुरोध-रुरुधे । रोद्धासि-रोद्धासे । रोत्स्यति-रोत्स्यते । रुणद्धु-रुन्धात् । रुन्धाम् । रुन्धन्तु । रुन्धि । रुणधानि । रुणधाव ।

'अनुदात्तङितः' 'शदेः शितः' इत्येताभ्यां 'तङ्' इति 'शित' इति चानुवर्त्याह-शितश्चेति । 'गाङ्कुटादिभ्यः' इत्यतः 'ङित' इत्यनुवर्त्याह-ङिद्वदिति । अपवाद इति । 'कर्तरि शप्' इत्यनेन प्राप्तस्य शपोऽपवादोऽयमित्यर्थः ।

१ विज् से परे जो इडादि प्रत्यय सो ङिद्वत् हो ।

२ रुधादि गण पठित धातुओं से श्नम् प्रत्यय हो, कर्त्रर्थक सार्वधातुक परे रहते ।

रुणधाम । रुन्धाम् । रुन्धातात् । रुन्धताम् । रुन्त्स्व । रुणधै । रुणधावहै । रुणधामहै । अरुणत्-अरुणद् । अरुन्धाम् । अरुन्धन् । अरुणः-अरुणत्-अरुणद् । अरुन्ध । अरुन्धाताम् । अरुन्धत । अरुन्धाः । रुन्ध्यात् रुन्धीत । रुध्यात्-रुत्सीष्ट । अरुधत्-अरौत्सीत् । अरुद्ध । अरुत्साताम् । अरुत्सत । अरोत्स्यत् अरोत्स्यत । **भिदिर् विदारणे ॥२॥ छिदिर् द्वैधीकरणे ॥३॥ युजिर् योगे ॥४॥ रिचिर् विरेचने ॥५॥** रिणक्ति-रिङ्क्ते । रिरेच । रेक्ता । रेक्ष्यति । अरिणक् । अरिचत्-अरैक्षीत् । अरिक्त ॥ **विचिर् पृथग्भावे ॥ ६ ॥** विनक्ति-विङ्क्ते । **क्षुदिर् सम्पेषणे ॥ ७ ॥** क्षुणत्ति क्षुन्ते । क्षोत्ता । अक्षुदत्-अक्षौत्सीत्-अक्षुत्त । **उच्छृदिर् दीप्तिदेवनयोः ॥ ८ ॥** छृणत्ति-छृन्ते । चच्छर्द । सेऽसिचीति वेट् । चच्छृदिषे-चच्छृत्से । छर्दिता । छर्दिष्यति-छर्त्स्यति । अच्छृदत्-अच्छर्दीत् । अच्छर्दिष्ट । अच्छर्दिष्यत ॥ **उतृदिर् हिंसानादरयोः ॥९॥** तृणत्ति तृन्ते ॥ **कृती वेष्टने ॥ १० ॥** कृणत्ति । **तृह हिसि हिंसायाम् ॥ ११-१२ ॥**

**[१] तृणह इम् ७ । ३ । ९२ ॥**

तृहः श्नमि कृते इमागमः स्याद्धलादौ पिति । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् ॥

**[२] श्नान्नलोपः । ६ । ४ । २३ ॥**

'नाभ्यस्तस्याचि' 'उतो वृद्धिर्लुकि' इत्यतः 'पिति' 'हलि' चेत्यनुवर्त्याह-**हलादौ पितीति ।**

---

१ तृह धातु को श्नम् कर लेने पर इम् का आगम हो हलादि पित् परे रहते ।
२ श्नम् से परे नकार का लोप हो ।

श्नमः परस्य नस्य लोपः स्यात् । हिनस्ति । जिहिंस । हिंसिता ॥

**तिप्यनस्तेः[1] । ८ । २ । ७३ ॥**

पदान्तस्य सस्य दः स्यात्तिपि न त्वस्तेः । ससजुषो रुरित्यस्यापवादः । अहिनत्-अहिनद् । अहिंस्ताम् । अहिंसन् ॥

**सिपि धातो रुर्वा[2] । ८ । २ । ७४ ॥**

पदान्तस्य धातोः सस्य रुः स्याद्वा [ सिपि ] । पक्षे दः । अहिनः-अहिनत्-अहिनद् ॥ **उन्दी क्लेदने** ॥ १३ ॥ उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार । औनत् । औनद् । औन्ताम् । औन्दन् । औनः-औनत्-औनद् । औनदम् ॥ **अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु** ॥ १४ ॥ अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ-आनङ्क्थ । अञ्जिता-अङ्क्ता । अङ्ग्धि । अनजानि । आनक् ॥

**अञ्जेः सिचि[3] । ७ । २ । ७१ ॥**

अञ्जः सिचो नित्यमिट् स्यात् । आञ्जीत् । **तञ्चू सङ्कोचने** ॥ १५ ॥ तनक्ति । तञ्चिता-तङ्क्ता ॥ **ओविजी भयचलनयोः** ॥ १६ ॥ विनक्ति । विङ्क्तः । विज इडिति ङित्त्वम् ।

'पदस्य' 'ससजुषो.' वसुस्रंसु' 'इत्येभ्य. 'पदस्ये'ति 'स' इति 'द' इति चानुवर्त्याह-पदान्तस्येति ॥

'पदस्ये'त्यधिक्रियते । 'ससजुषो' इत्यतः 'स' इत्यनुवर्तते । सूत्रे 'वा' शब्दः-समुच्चये । तेन 'वसुस्रंसु' इत्यतोऽनुवृत्तस्य दस्य समुच्चय इत्याह-**पदान्तस्येति** । 'इडत्यर्तिव्ययतीनाम्' इत्यत 'इट्' इत्यनुवर्त्तते । तदाह **नित्यमिडिति** । ङित्वान्न गुणः ।

१ पदान्त जो सकार उसको दकार हो तिप् परे रहते । अस् धातुको छोड़कर ।

२ धातु का जो पदान्त सकार उसको रु हो विकल्प करके सिप् परे रहते ।

३ अञ्जि धातु से परे जो सिच् उसको नित्य इट् हो ।

विविजिथ । विजिता । अविनक् । अविजीत् ॥ **शिऌ विशेषणे** ॥ १७ ॥ शिनष्टि । शिष्टः । शिषन्ति । शिनक्षि । शिशेष । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः । शिण्ड्ढि । शिनषाणि । अशिनट् । शिष्यात् । शिष्यात् । अशिषत् ॥ एवं **पिऌ सञ्चूर्णने** ॥ १८ ॥ **भञ्जो आमर्दने** ॥ १९ ॥ श्नान्नलोपः भनक्ति । बभञ्जिथ–बभङ्क्थ । भङ्क्ता । भङ्ग्धि । अभाङ्क्षीत् ॥ **भुज पालनाभ्यवहारयोः** ॥२०॥ भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् ॥

**[1]भुजोऽनवने । १ । ३ । ६६ ॥**

तङानौ स्तः । ओदनं भुङ्क्ते । अनवने किम् ? । महीं भुनक्ति । **ञिइन्धी दीप्तौ** ॥२१॥ इन्धे । इन्धाते । इन्धते । इन्त्से । इन्ध्वे । इन्धाञ्चक्रे । इन्धिता । इन्धाम् । इन्धाताम् । इनधै । ऐन्ध । ऐन्धाताम् । ऐन्धाः ॥ **विद विचारणे** ॥ २२ ॥ विन्ते । वेत्ता ॥

* इति रुधादिप्रकरणम् ॥ ७ ॥ *

# अथ तनादिप्रकरणम् ।

**तनु विस्तारे** ॥ १ ॥

**[2]तनादिकृञ्भ्य उः । ३ । १ । ७९ ॥**

[तनादेः कृञश्च उप्रत्ययः स्यात्कर्त्रर्थे सार्वधातुके परे] । शपोऽपवादः ।

'अनुदात्तङितः' इत्यतः 'आत्मनेपद' मित्यनुवर्त्याह **तङानाविति** । **तनादीति** । तनादित्वादेव सिद्धे पुनः कृञ्ग्रहणं 'गणकार्यमनित्य'मिति परि-

१ पालन भिन्न ( भोजन ) अर्थ में भुज धातु से तङ् और आन होता है ।

२ तनादिगणपठित जो धातु और कृञ् धातु इनसे उप्रत्यय हो कर्त्रर्थक सार्वधातुक परे रहते ।

तनोति-तनुते। ततान-तेने। तनितासि-तनितासे। तनिष्यति-तनिष्यते। तनोतु-तनुताम्। अतनोत्-अतनुत। तनुयात्-तन्वीत। तन्यात्-तनिषीष्ट। अतानीत्-अतनीत्॥

**तनादिभ्यस्तथासोः[1]। २। ४। ७९॥**

तनादेः सिचो वा लुक् स्यात्तथासोः॥ अतत-अतनिष्ट। अतथाः-अतनिष्ठाः। अतनिष्यत्-अतनिष्यत॥

**षणु दाने॥ २॥** सनोति-सनुते।

**ये विभाषा[2]। ६। ४। ४३॥**

जनसनखनामात्वं वा स्याद्यादौ क्ङिति। सायात् सन्यात्।

**जनसनखनां सञ्झलोः[3] ६। ४। ४२॥**

एषामाकारोऽन्तादेशः स्यात् सनि झलादौ क्ङिति। असात-असनिष्ट। असाथाः-असनिष्ठाः॥ **क्षणु हिंसायाम्॥ ३॥** क्षणोति-क्षणुते। ह्मयन्तेति न वृद्धिः। अक्षणीत्-अक्षत-अक्षणिष्ट। अक्षथाः-अक्षणिष्ठाः॥ **क्षिणु च॥ ४॥** उप्रत्यये लघूपधस्य गुणो वा। क्षेणोति-क्षिणोति। क्षेणिता। अक्षेणीत्-

भाषाज्ञापनार्थम्। तेन न 'विश्वसेदविश्वस्त'मित्यादिसिद्धमिति प्राञ्चः।

'गातिस्थाघुपाभूभ्यः' इत्यतः 'ण्यक्षत्रियार्षे'त्यतश्च 'सिच'इति 'लुक्'इति चानुवर्त्तते। तदाह-**सिच इति**। 'विड्वनोरनुनासिकस्यात्' 'जनसनखना सञ्झलो.' इत्येनाभ्यां 'आत्' इति 'जनसनखनाम्' इति चानुवर्तते। तदाह-**जनेति**। 'विड्वनोरनुनासिकस्यात्' 'अनुदात्तोपदेश' इत्याभ्यां 'आत्' इति 'क्ङिति' इति चानुवर्त्याह-**आकारोऽन्तेति**। **गुणोवेति**। 'संज्ञापूर्वको

१ तनादि से परे सिच् का लुक् हो विकल्प से त और थास् परे रहते।

२ जन सन और खन् धातु को आत्व हो यादि कित् ङित् परे रहते।

३ जन सन और खन धातु को आकारान्तादेश हो सन् परे रहते और झलादि कित् ङित् परे रहते।

अक्षित–अक्षेणिष्ट ॥ **तृणु अदने** ॥ ५ ॥ तृणोति–तर्णोति । तृणुते – तर्णुते ॥ **डुकृञ् करणे** ॥ करोति ॥

**अत उत्सार्वधातुके** । ६ । ४ । ११० । उप्रत्ययान्तस्य कृञोऽकारस्य उः स्यात् । कुरुतः ॥

**न भकुर्छुराम्** ८ । २ । ७९ ॥

[1]भस्य कुर्छुरोश्चोपधाया दीर्घो न स्यात् । कुर्वन्ति ॥

**नित्यं करोतेः** ॥ ६ । ४ । १०८ ॥

[2]करोतेः प्रत्ययोकारस्य नित्यं लोपः स्यान्म्वोः परयोः । कुर्वः । कुर्मः । कुरुते । चकार–चक्रे । कर्तासि । कर्त्तासे । करिष्यति–करिष्यते । करोतु । कुरुताम् । अकरोत् । अकुरुत ॥

**ये च** ६ । ४ । १०९ ॥

[3]कृञ उलोपः स्याद्यादौ प्रत्यये परे । कुर्यात्–कुर्वीत । क्रियात्–कृषीष्ट । अकार्षीत्–अकृत । अकरिष्यत्–अकरिष्यत ॥

**[4]सम्परिभ्यां करोतौ भूषणे** ६ । १ । १३७ ॥

**समवाये च** ६ । १ । १३८ ॥

विधिरनित्यः' इति वचनात्कचिल्लघूपधगुणः, क्वचिन्नेत्याशयः ।

'वोरुपधाया दीर्घ इकः'इत्यतः 'उपधायाः' इत्यनुवर्त्याह–**उपधायाः** इति । 'उतश्च प्रत्ययात्' 'लोपश्चास्यान्यतरस्याम्' इत्येताभ्यां 'प्रत्ययात्' 'लोपः' 'म्वोः' इति चानुवर्त्याह–**प्रत्ययोकारस्येति** ।

'नित्यं करोतेः' इत्यतः 'करोतेः इत्यनुवर्त्याह–**कृञ इति** ।

---

१ भसंज्ञक जो कुर् और छुर् उनकी उपधा को दीर्घ नहीं हो ।

२ करोति का जो प्रत्ययभूत उकार उसका नित्य लोप हो वकार मकार परे रहते ।

३ कृञ् के उकार का लोप हो यादिप्रत्यय परे रहते ।

४ सम् परि पूर्वक कृञ् धातु को सुट् हो भूषण और संघात अर्थ में ।

सम्परिपूर्वस्य करोतेः सुट् स्याद् भूषणे सङ्घाते चार्थे । संस्करोति । अलङ्करोतीत्यर्थः । संस्कुर्वन्ति । सङ्घीभवन्तीत्यर्थः । सम्पूर्वस्य क्वचिद् भूषणेऽपि सुट्, 'संस्कृतं भक्षा' इति ज्ञापनात् ।

[1]उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च ६ । १ । १३९ ॥

उपात्कृञः सुट् स्यादेष्वर्थेषु, चात्प्रागुक्तयोरर्थयोः । प्रतियत्नो गुणाऽऽधानम् । विकृतमेव वैकृतं—विकारः । वाक्याध्याहारः—आकाङ्क्षितैकदेशपूरणम् । उपस्कृता कन्या । उपस्कृता ब्राह्मणाः । एधोदकस्योपस्कुरुते । उपस्कृतं भुङ्क्ते । उपस्कृतं ब्रूते ॥ वनु याचने ॥ ७ ॥ वनुते । ववने ॥ मनु अवबोधने ॥८॥ मनुते । मेने । मनिता । मनिष्यते । मनुताम् । अमनुत । मन्वीत । मनिषीष्ट । अमत　अमनिष्ट । अमनिष्यत । इति तनादयः ॥ ८ ॥

## अथ क्र्यादिप्रकरणम् ।

डुक्रीञ् द्रव्यविनिमये ॥ १ ॥

[2]क्र्यादिभ्यः श्ना ३ । १ । ८१ ॥

[ एभ्यः श्ना स्यात्कर्त्रर्थे सार्वधातुके परे ] । शपोऽपवादः ।

'सुट् कात्पूर्वः' इत्यतः 'सुट्' इत्यनुवर्त्याह—सुट् स्यादिति ।

'सुट् कात्पूर्वः' 'सम्परिभ्यां करोतौ भूषणे' 'समवाये च' इत्येतेभ्योऽनुवृत्तेराह—कृञ इत्यादि ।

१ उप से परे जो कृञ् धातु उसको सुट् हो प्रतियत्न वैकृत और वाक्याध्याहार इन अर्थों में । चात्पूर्वकथित अर्थों में भी सुट् होय ।

२ क्र्यादि धातुओं से श्ना प्रत्यय हो कर्त्रर्थक सार्वधातुक परे रहते ।

क्रीणाति। ईहल्यघोः। क्रीणीतः। श्नाभ्यस्तयोरातः। क्रीणन्ति। क्रीणासि। क्रीणीथः। क्रीणीथ। क्रीणामि। क्रीणीवः। क्रीणीमः। क्रीणीते। क्रीणाते। क्रीणते। क्रीणीषे। क्रीणाथे। क्रीणीध्वे। क्रीणे। क्रीणीवहे। क्रीणीमहे। चिक्राय। चिक्रियतुः। चिक्रियुः। चिक्रयिथ–चिक्रेथ। चिक्रिये। क्रेता। क्रेष्यति–क्रेष्यते। क्रीणातु–क्रीणीतात्। क्रीणीताम्। अक्रीणात्–अक्रीणीत। क्रीणीयात्–क्रीणीत। क्रीयात्–क्रेषीष्ट। अक्रैषीत्–अक्रेष्ट। अक्रेष्यत्–अक्रेष्यत॥ **प्रीञ् तर्पणे कान्तौ च॥२॥** प्रीणाति–प्रीणीते। **श्रीञ् पाके॥३॥** श्रीणाति–श्रीणीते॥ **मीञ् हिंसायाम्॥४॥**

**हिनुमीना ८।४।१५॥**

उपसर्गस्थान्निमित्तात्परस्यैतयोर्नस्य णः स्यात्[1]। प्रमीणाति–प्रमीणीते। 'मीनाती'त्यात्वम्। ममौ। मिम्यतुः। ममिथ–ममाथ। मिम्ये। माता। मास्यति। मीयात्–मासीष्ट। अमासीत्। अमासिष्टाम्। अमास्त॥ **षिञ् बन्धने॥५॥** सिनाति। सिनीते। सिषाय सिष्ये। सेता॥ **स्कुञ् आप्लवने॥६॥**

**अक्रैषीदिति।** अक्रैषीत्, अक्रैष्टाम्, अक्रैषुः। अक्रैषीः, अक्रैष्टम्, अक्रैष्ट। अक्रैषम्, अक्रैष्व, अक्रैष्म। **तर्पण**=तृप्तिः, कान्तिः=कामना। गुरु प्रीणाति, तर्पयतीत्यर्थः। धनं प्रीणाति। कामयते इत्यर्थः। **पाकः**=श्रपणम्। ( सिझाना )। **निमित्तात्**=रेफषकाररूपात्। **एतयोः**='हिनु' इत्यस्य 'मीना' इत्यस्य। मिम्यतुरित्यादावतुसः कित्वादेज्निमित्तत्वाभावेन नात्वम्, किन्तु एरनेकाच इति यण्। **ममिथेति।** भारद्वाजमते इट्, अन्येषान्तु अजन्ततया नेट्। इट्पक्षे–आतो लोप इत्यालोपः। ममिथ–ममाथेति।

**बन्धन इति।** वत्सं सिनाति। बध्नातीत्यर्थः। **आप्लवनम्**-उत्प्लवन-

१ उपसर्ग में स्थित जो निमित्त [ रेफ षकार ] उससे परे जो हिनु और मीना–इनका नकार उसको णकार हो।

**[1]स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च ३ । १ । ८२ ॥**

[ एभ्यः श्नुः स्यात् ] । चात् श्ना । स्कुनोति-स्कुनाति । स्कुनुते-स्कुनीते । चुस्काव । चुस्कुवे । स्कोता । अस्कौषीत्-अस्कोष्ट ॥ स्तन्भ्वादयश्चत्वारः सौत्राः । सर्वे रोधानार्थाः परस्मैपदिनः ॥

**[2]हलः श्नः शानज्झौ ३ । १ । ८३ ॥**

हलः परस्य श्नः शानजादेशः स्याद्धौ परे । स्तभान ॥

**जॄस्तन्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ३ । १ । ५८ ॥**

एभ्यश्च्लेरङ् वा स्यात् ॥

**[3]स्तन्भेः ८ । ३ । ६७ ॥**

स्तन्भेः सौत्रस्य सस्य षः स्यात् । व्यष्टभत् । अस्तम्भीत् ॥

**युञ् बन्धने ॥७॥** युनाति-युनीते । योता ॥ **क्नूञ् शब्दे ॥८॥** क्नूनाति । क्नूनीते । क्नविता ॥ **द्रूञ् हिंसायाम् ॥९॥** द्रूणाति-द्रूणीते ॥ **दॄ विदारणे ॥ १० ॥** दृणाति-दृणीते ॥

**पूञ् पवने ॥ ११ ॥**

मुद्धरणं च । ( कूदना, ऊपर उठाना )। चत्वारः=स्तन्भु स्तुन्भु-स्कन्भु-स्कुन्भु-धातवः । **सौत्राः**=सूत्रपठिताः, न धातुपाठपठिताः ।

**रोधनार्थाः**=अवरोधनार्थाः । ('स्तम्भित करना' 'रोकना')।

**हलः**-पञ्चम्यन्तं, **श्नः**-षष्ठ्यन्तं, **शानच्**-प्रथमान्तं, हौ-सप्तम्यन्तम् । 'च्लेः सि'जित्यतः, 'अस्यतिवक्ती'त्यतः, 'इरितो वे'त्यतश्च यथायथमनुवर्त्य व्याचष्टे-च्लेरिति ।

१ स्तन्भु-स्तुन्भु-स्कन्भु-स्कुन्भु-और स्कुञ् इनसे परे श्नु प्रत्यय होय चकार से श्ना प्रत्यय भी हो ।

२ हल् से परे जो श्ना उसको शानच् आदेश हो हि परे रहते ।

३ स्तन्भ सौत्र धातु उसके सकार को षकारादेश हो ।

**प्वादीनां ह्रस्वः ७ । ३ । ८० ॥**[1]

पूञ्-लूञ्-स्तॄञ्-कॄञ्-वॄञ्-धूञ्-शॄ-पॄ-वॄ-भॄ-मॄ-दॄ-जॄ-झॄ-धॄ-नॄ-कॄ-ऋॄ-गॄ-ज्या-री-ली-व्ली-प्लीनां चतुर्विंशतेः शिति ह्रस्वः स्यात् । पुनाति-पुनीते । पविता ॥ **लूञ् छेदने** ॥१२॥ लुनाति-लुनीते ॥ **स्तॄञ् आच्छादने** ॥१३॥ स्तृणाति । **शर्पूर्वाः खयः** । तस्तार । तस्तरतुः । तस्तरुः । तस्तरे । स्तरीता-स्तरिता । स्तृणीयात् । स्तृणीत । स्तीर्यात् ॥

**लिङ्सिचोरात्मनेपदेषु ७ । २ । ४२ ॥**[2]

वृङ्वृञ्भ्यामॄदन्ताच्च परयोर्लिङ्सिचोरिड्वा स्यात्तङि ॥

**न लिङि ७ । २ । ३९ ॥**[3]

वॄत इटो लिङि न दीर्घः । स्तरिषीष्ट । उश्चेति कित्त्वम् । स्तीर्षीष्ट । **सिचि च परस्मैपदेषु** । अस्तारीत् । अस्तारिष्टाम् । अस्तारिषुः । अस्तरीष्ट अस्तरिष्ट-अस्तीर्ष्ट ॥ **कॄञ् हिंसायाम्** ॥१४॥ कृणाति कृणीते । चकार चकरे ॥ **वृञ् वरणे** ॥१५॥ वृणाति -वृणीते । ववार -वव्रे । वरिता वरीता । उदोष्ठ्येत्युत्वम् । वूर्यात् । वरिषीष्ट-वूर्षीष्ट अवारीत् । अवारिष्टाम् । अवरिष्ट-अवरीष्ट-अवूर्ष्ट ॥ **धूञ् कम्पने** ॥ १६ ॥ धुनाति-

---

छेदनं=कर्त्तनम् । (काटना) । ऋच्छत्यॄतामिति गुण. । हलि चेति दीर्घः । **सिचि चेति** । परस्मैपदपरे सिचि वॄत इटो दीर्घो नेत्यर्थकेन दीर्घनिषेध

१ पूञ्-लूञ्-स्तॄञ्-कॄञ्-वॄञ्-धूञ्-शॄ-पॄ-वॄ-भॄ-मॄ-दॄ-जॄ-झॄ-धॄ-नॄ-कॄ-ऋॄ-गॄ-ज्या-री-ली-व्ली इन चौबीस धातुओं को ह्रस्व हो शित् परे रहते ।

२ वृङ्-वृञ् और ॠदन्त से परे जो लिङ्-सिच्, उसको इट् हो विकल्प से तङ् परे रहते ।

३ वृङ्-वृञ् और ॠदन्त धातु के इट् को दीर्घ नहीं हो लिङ् परे रहते ।

धुनीते । धविता- धोता । अधावीत् । अधविष्ट- अधोष्ट । **ग्रह उपादाने ॥ १७ ॥** गृह्णाति । गृह्णीते । जग्राह । जगृहे ॥

**[1]ग्रहोऽलिटि दीर्घः ७ । २ । ३७ ॥**

एकाचो ग्रहेर्विहितस्येटो दीर्घो न तु लिटि । ग्रहीता । गृह्णातु ॥ **हलः श्नः शानज्झौ** ।विति श्नः शानजादेशः । गृहाण । गृह्णात् । ग्रहीषीष्ट ॥ ह्मयन्तेति न वृद्धिः । अग्रहीत् । अग्रहीष्टाम् । अग्रहीष्ट । अग्रहीषाताम् ॥ **कुष निष्कर्षे ॥ १८ ॥** कुष्णाति । कोषिता ॥ **अश भोजने ॥ १९ ॥** अश्नाति । आश । अशिता । अशिष्यति । अश्नातु । अशान ॥ **मुष स्तेये ॥ २० ॥** मोषिता । मुषाण । **ज्ञा अवबोधने ॥२१॥** जज्ञौ । **वृङ् सम्भक्तौ ॥२२॥** वृणीते । ववृषे । ववृढ्वे । वरिता-वरीता । अवरीष्ट-अवरिष्ट-अवृत ॥

इति क्र्यादयः ॥ ९ ॥

---

इत्यर्थः । **धोतेति** । 'स्वरती'ति वेट् । **अधावीदिति** । 'स्तुसुधूञ्भ्य' इति नित्यमिट् । **अधोष्टेति** । 'स्वरती'ति वेट् ।

**उपादान**=ग्रहणम् ।

निष्कर्षो-निष्कोषणम् । ( निकालना, कुरेदना, खुरचना ) । **स्तेयः**=चौर्यम् । **सम्भक्तिः**=स्वीकारः ।'वृतो वे'ति वा दीर्घः । **अवृतेत्यत्र**'ह्रस्वादङ्गा'दिति सिज्लोपः' 'उश्चे'ति कित्त्वम् ।

**इति क्र्यादयः** ।

---

१ एकाच् ग्रह धातु से विहित जो इट् उसको दीर्घ हो । लिट् परे रहते नहीं हो ।

# अथ चुरादयः ।

चुर स्तेये ॥ १ ॥

**सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् ३ । १ । २५ ॥**

एभ्यो णिच् स्यात् । चूर्णान्तेभ्यः 'प्रातिपदिकाद्धात्वर्थे' इत्येव सिद्धे तेषामिह ग्रहणं प्रपञ्चार्थम् । चुरादिभ्यस्तु स्वार्थे । 'पुगन्ते' ति गुणः । 'सनाद्यन्ता' इति धातुत्वम् । तिप्शबादि । गुणाऽयादेशौ । चोरयति ॥

**णिचश्च १ । ३ । ७४ ॥**

णिजन्तादात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले । चोरयते । चोरयामास । चोरयिता । चोर्यात् । चोरयिषीष्ट । णिश्रीति चङ् । णौ चङीति ह्रस्वः । चङीति द्वित्वम् । हलादिः शेषः । दीर्घो लघोरित्यभ्यासस्य दीर्घः । अचूचुरत् । अचूचुरत ॥

**कथ वाक्यप्रबन्धे ॥ २ ॥** अल्लोपः ॥

---

**चूर्णान्तेभ्यः**=सत्यापेत्यारभ्य चूर्णशब्दपर्यन्तेभ्यः । **सिद्धे**=णिचि सिद्धे । **तेषां**=सत्यापादिचूर्णान्तानाम् । **इह**=सूत्रे । **प्रपञ्चार्थं**=शिष्यबुद्धिवैशद्यार्थम् । **स्वार्थे**—स्वार्थे एव णिच्, 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ती' त्युक्तेः । **गुणः**=णिज्निमित्तक उकारस्य गुणः ।

**गुणायादेशौ** शब्निमित्तको णगुणः, ततोऽयादेशश्च ।

**वाक्यप्रबन्धः**=कथनम् । अकारान्तोऽयं धातुः । ततश्चार्धधातुकविवक्षायामतो लोप इत्यल्लोपः, तदाह—**अल्लोप इति** ।

१ सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-और चुरादि गणपठित जो धातु उनसे णिच् हो स्वार्थ में ।

२ णिजन्त धातु से आत्मनेपद हो यदि कर्तृगामी क्रियाफल हो तो ।

अचः परस्मिन्पूर्वविधौ[1] । १ । १ । ५७ ॥

अल्विध्यर्थमिदम् । परनिमित्तोऽजादेशः स्थानिवत्स्यात्स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । इति स्थानिवत्त्वान्नोपधावृद्धिः । कथयति । अग्लोपित्वाद्दीर्घसन्वद्भावौ न । अचकथत् ।

गण संख्याने ॥ २ ॥ गणयति ॥

ई[2] च गणः ७ । ४ । ९७ ॥

गणयतेरभ्यासस्य ईत्स्याच्चङ्परे णौ । चादत् । अजीगणत् । अजगणत् ।

इति चुरादयः ॥ १० ॥

# अथ णयन्तप्रक्रिया ।

स्वतन्त्रः[3] कर्ता १ । ४ । ५४ ॥

क्रियाया स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥

इति=इति सूत्रेण, स्थानिवत्त्वात्=परनिमित्ताजादेशस्य=णिज्निमित्तकाल्लोपस्य स्थानिवत्त्वात्, उपधावृद्धिः='अत उपधायाः' इति णिज्निमित्तकः ककारोत्तराकारस्य आकारो वृद्धिः, न=न भवति । अकारस्योपधात्वाभावात्, अकारेण व्यवधानादिति भावः । संख्यानं=गणनम् । ( गिनना ) ।

इति चुरादयः ।

१ परनिमित्त जो अजादेश वह स्थानिवत् हो स्थानिभूत अच् से पूर्वत्वेन जो दृष्ट है उसको विधि करना हो तो ।

२ गणधातु के अभ्यास को ईकार हो । चकार से अकार भी हो चङ्परक णि परे रहते ।

३ अपनी क्रिया में स्वतन्त्रता से विवक्षित जो अर्थ वह कर्तृसञ्ज्ञक हो ।

तत्प्रयोजको हेतुश्च १ । ४ । ५५ ॥

कर्तुः प्रयोजको हेतुसंज्ञः कर्तृसंज्ञश्च स्यात् ॥

हेतुमति च ३ । १ । २६ ॥

प्रयोजकव्यापारे प्रेषणादौ वाच्ये धातोर्णिच् स्यात् । भवन्तं प्रेरयति भावयति ।

ओः पुयण्ज्यपरे ७ । ४ । ८० ॥

सनि परे यदङ्गं तदवयवाभ्यासोकारस्य इत्स्यात् पवर्गयण्-

तदिति । तच्छब्देन 'स्वतन्त्रः कर्ते'ति सूत्रोपात्तः कर्ता परामृश्यते । तस्य=कर्तुः, प्रयोजकः=प्रेरकः, तद्व्यापारानुकूलव्यापारवानिति यावत् । चकार एकसञ्ज्ञाऽधिकारबाधनार्थस्तदाह–कर्तृसञ्ज्ञश्चेति । हेतुः कर्तुः प्रयोजकः,–स्वनिष्ठाधारतानिरूपिताऽऽधेयतासम्बन्धेन यत्र तिष्ठति स हेतुमान्= प्रयोजकव्यापारः, तस्मिन् वाच्ये णिजित्यर्थः । तदाह–प्रयोजकेति । प्रेषणा= आज्ञा । भवन्तमिति । देवदत्तो भवति । भवतीति–भवन् । भवन्तं देवदत्तं यज्ञदत्तादि प्रयोजकः–प्रेरयति,–इत्यर्थवाग्विवक्षायां–देवदत्तं यज्ञदत्तो भावयति । भूधातोरकर्मकतया गतिबुद्धीति सूत्रेणाऽण्यन्तावस्थाकर्तुः कर्मत्वम् । एवं–देवदत्तो भवति, भवतीति भवन्, भवन्तं देवदत्तं चैत्रमैत्रौ प्रेरयतः– इत्यर्थवाग्विवक्षायां–देवदत्तं चैत्रमैत्रौ भावयतः । एवं–देवदत्तो भवति, भवतीति भवन्, भवन्तं देवदत्तं चैत्र–मैत्र–पुष्यमित्राः प्रेरयन्ति–इत्यर्थवाग्विवक्षाया देवदत्तं चैत्र–मैत्र–पुष्यमित्रा भावयन्ति । देवदत्तो भवति, भवतीति भवन्, भवन्तं देवदत्तं त्वं प्रेरयसि–इत्यर्थवाग्विवक्षाया–देवदत्तं त्वं भावयसि । एवमग्रेऽपि भवन्तं देवदत्तमहं प्रेरयामीति–अहं देवदत्तं भावयामीत्यादिरीत्या बोध्यम् ।

ओः षष्ठ्यन्तं, पुयण्जि–सप्तम्यन्तम्, अपरे–सप्तम्यन्तम् । अत्र पुश्च

१ कर्ता का जो प्रयोजक वह कर्तृसञ्ज्ञक और हेतुसञ्ज्ञक हो ।

२ प्रयोजक के व्यापार प्रेषणा-अन्वेषणा अध्येषणा आदि वाच्य हों तो धातु से णिच् प्रत्यय हो ।

३ सन् परे रहते जो अङ्ग तदवयव जो अभ्यास का उकार उसको इकारादेश हो अवर्णपरक पवर्ग यण् जकार परे रहते ।

जकारेष्ववर्णपरेषु परतः । अबीभवत् ॥ [4] णौ गतिनिवृत्तौ ॥

**अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ७ । ३ । ३६ ॥**

स्थापयति ॥

**तिष्ठतेरित् ७ । ४ । ५ ॥** [2]

उपधाया इदादेशः स्याच्चङ्परे णौ । अतिष्ठिपत् ।

घट चेष्टायाम् ॥

**मितां ह्रस्वः ६ । ४ । ९२ ॥** [3]

घटादीनां ज्ञपादीनां चोपधाया ह्रस्वः स्याण्णौ । घटयति ॥

ज्ञप ज्ञाने ज्ञापने च ॥ ज्ञपयति । अजिज्ञपत् ॥

इति ण्यन्तप्रक्रिया ॥ १ ॥

## अथ सन्नन्तप्रक्रिया ।

**धातोः कर्मणः समानकर्तृकादिच्छायां वा ३ । १ । ७ ॥** [4]

इषिकर्मण इषिणैककर्तृकाद्धातोः सन्प्रत्ययो वा स्यादिच्छा-

यण् च जू च एषा समाहारः-पुयण्ज्, तस्मिन्-पुयण्जि । अः परो यस्मा-दसौ-अपर, तस्मिन्-अपरे । 'अत्र लोपोऽभ्यासस्य' 'मुचामित्' 'सन्यत.' इत्यतोऽनुवर्त्याह-सनीति । 'अङ्गस्ये'त्यधिकृतम् ।

*इति ण्यन्तप्रक्रिया*

**इषिकर्मण इति ।** इच्छायामित्यस्य श्रुततया तदपेक्षमेवेह कर्तृत्वं कर्म-त्वञ्च ग्राह्यमित्याशयः । 'गुप्ति'जित्यतः सनित्यनुवर्त्तते, तदाह-**सनिति** ।

१ अर्ति-ह्री-व्ली री क्नूयी-क्ष्मायी इन धातुओं को पुक् का आगम हो णि परे रहते ।

२ स्था धातु की उपधा को इकारादेश को चङ्परक णि परे रहते ।

३ घटादि-और ज्ञपादि धातुओं की उपधा को ह्रस्व हो णि परे रहते ।

४ इच्छा क्रिया का कर्म हो इच्छा क्रिया का जो कर्ता वही कर्ता है जिसका ऐसा जो धातु उससे सन् प्रत्यय हो विकल्प करके ।

याम् । पठ व्यक्तायां वाचि ॥

**[1]सन्यङोः ६ । १ । ९ ॥**

सन्नन्तस्य यङन्तस्य च धातोरनभ्यासस्य प्रथमस्यैकाचो द्वे स्तोऽजादेस्तु द्वितीयस्य । सन्यतः । पठितुमिच्छति पिपठिषति । कर्मणः किम् ? । गमनेनेच्छति । समानकर्तृकात् किम् ? शिष्याः पठन्त्वितीच्छति गुरुः । वा ग्रहणाद्वाक्यमपि ॥ लुङ्सनोर्घस्लृ ॥

**[2]सः स्यार्धधातुके ७ । ४ । ४९ ॥**

सस्य तः स्यात्सादावार्धधातुके । अत्तुमिच्छति जिघत्सति । 'एकाच' इति नेट् ॥

**[3]अज्झनगमां सनि ६ । ४ । १६ ॥**

अजन्तानां हन्तेरजादेशगमश्च दीर्घो झलादौ सनि ॥

**[4]इको झल् १ । २ । ९ ॥**

इगन्ताज्झलादिः सन् कित् स्यात् । ऋत इद्धातोः । कर्तु-

**पिपठिषतीति** । एकनिष्ठा पाठविषयिणी वर्तमानकालिका इच्छेत्यर्थः । **गमनेनेति** । गमनं हि करणं न कर्मेत्याशयः । **शिष्या इति** । इषिकर्माऽत्र शिष्यपठनम्, इषिकर्ता च गुरुरिति इषिणा समानकर्तृकत्वविरहः, पठनस्य हि कर्त्तारः शिष्याः, इच्छाकर्त्ता च गुरुरिति वैषम्यादित्याशयः ।

सः-षष्ठ्यन्तं, सि-सप्तम्यन्तम्, आर्धधातुके-सप्तम्यन्तम् । आर्धधातुके इत्यधिक्रियते । 'यस्मिन्विधि'रिति तदादिविधिस्तदाह-**सादाविति** ।

१ सन्नन्त और यङन्त धातु का जो प्रथम एकाच् उसको द्वित्व हो और अजादि धातु के द्वितीय एकाच् को द्वित्व हो ।

२ सकार को तकारादेश हो सादि आर्धधातुक परे रहते ।

३ अजन्त जो धातु और हन् धातु और अजादेश गम् धातु उसको दीर्घ हो झलादि सन् परे रहते ।

४ इगन्त से परे जो झलादि सन् वह कित् हो ।

मिच्छति चिकीर्षति ।

**सनि ग्रहगुहोश्च ७ । २ । १२ ॥**

ग्रहेर्गुहेरुगन्ताच्च सन इण् न स्यात् । बुभूषति ॥

इति सन्नन्तप्रक्रिया ॥ २ ॥

## अथ यङन्तप्रक्रिया

**धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ३।१।२२॥**

पौनःपुन्ये भृशार्थे च द्योत्ये धातोरेकाचो हलादेर्यङ् स्यात् ॥

**गुणो यङ्लुकोः ७ । ४ । ८२ ॥**

अभ्यासस्य गुणो यङि यङ्लुकि च परतः । ङिदन्तत्वादात्मनेपदम् । पुनः पुनरतिशयेन वा भवति बोभूयते । बोभूयाञ्चक्रे । अबोभूयिष्ट ॥

**नित्यं कौटिल्ये गतौ ३ । १ । २३ ॥**

गत्यर्थात्कौटिल्य एव यङ् स्यान्न तु क्रियासमभिहारे ॥

भवितुमिच्छति-बुभूषति । इति सन्नन्तप्रक्रिया ।

**बोभूयते इति ।** भूधातोः सकाशात्क्रियासमभिहारे 'धातोरेकाच' इति यङि 'सन्यङो'रिति द्वित्वेऽभ्याससञ्ज्ञायामभ्यासकार्ये 'गुणो यङ्लुको'रिति गुणे 'सनाद्यन्ता' इति बोभूये'त्यस्य धातुत्वे लटि ङित्वादात्मनेपदे 'टित आत्मनेपदाना'

१ ग्रह-गुह और उगन्त धातु से परे जो सन् उसको इट् नहीं हो ।

२ पौन पुन्य और भृशार्थ द्योत्य हो तो एकाच् हलादि धातु से यङ् हो ।

३ अभ्यास को गुण हो यङ् परे रहते और यङ्लुक् के विषय में ।

४ गत्यर्थक धातुओं से कौटिल्य अर्थ में ही यङ् हो । क्रियासमभिहार अर्थ में नहीं हो ।

**दीर्घोऽकितः[1] ७ । ४ । ८३ ॥**

अकितोऽभ्यासस्य दीर्घस्याद्यङ्यङ्लुकोः । कुटिलं व्रजति वाव्रज्यते ॥

**यस्य हलः[2] ६ । ४ । ४९ ॥**

यस्येति सङ्घातग्रहणम् । हलः परस्य 'य'शब्दस्य लोपः स्यादार्धधातुके । आदेः परस्य । अतो लोपः । वाव्रजाञ्चक्रे । वाव्रजिता ॥

**रीगृदुपधस्य च[3] ७ । ४ । ९० ॥**

ऋदुपधस्य धातोरभ्यासस्य रीगागमो यङ्यङ्लुकोः । वरीवृत्यते । वरीवृताञ्चक्रे । वरीवर्तिता ॥

**क्षुभ्नादिषु च[4] ८ । ४ । ३९ ॥**

णत्वं न । नरीनृत्यते । जरीगृध्यते ॥

इति यङन्तप्रक्रिया ॥ ३ ॥

मित्येत्वे 'वोभूयते' इत्यस्य सिद्धिः । यशब्दस्य=अकारघटितस्य 'य्—अ' इति समुदायस्य । 'आदेः परस्ये'ति परिभाषाबलाद्यकारसमुदायघटकस्यादिभूतस्य यकारस्य केवलस्य लोपः । अकारस्य तु 'अतो लोप' इत्यनेन लोप इत्याशयः ।

**इति यङन्तप्रक्रिया ।**

१ कित् भिन्न जो अभ्यास उसको दीर्घ हो यङ् परे रहते और यङ्लुक् के विषय में ।

२ हल् से परे य शब्द का लोप हो आर्धधातुक परे रहते ।

३ ऋत् है उपधा मे जिसके ऐसा जो धातु उसके अभ्यास को रीक् का आगम हो यङ् परे रहते और यङ्लुक् के विषय मे ।

४ क्षुभ्नादिगणपठितों धातुओं के नकार को णत्व नहीं हो ।

# अथ यङ्लुक्प्रक्रिया ।

## यङोऽचि च २ । ४ । ७४ ॥

यङोऽचि प्रत्यये लुक् स्यात्, चकारात्तं विनाऽपि क्वचित् । अनैमित्तिकोऽयमन्तरङ्गत्वादादौ भवति । ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वम् । अभ्यासकार्यम् । धातुत्वाल्लडादयः । 'शेषात्कर्तरी'ति परस्मैपदम् । 'चर्करीतं चे'त्यदादौ पाठाच्छपो लुक् ॥

## यङो वा ७ । ३ । ९४ ॥

यङ्लुगन्तात्परस्य हलादेः पितः सार्वधातुकस्येड् वा स्यात् । 'भूसुवो'रिति गुणनिषेधो यङ्लुकि भाषायां न, 'बोभूतु तेतिक्ते' इति च्छन्दसि निपातनात् । बोभवीति-बोभोति । बोभूतः । अदभ्यस्तात् । बोभुवति । बोभवाञ्चकार । बोभवामास । बोभविता । बोभविष्यति । बोभवीतु-बोभोतु-बोभूतात् । बोभूताम् । बोभुवतु । बोभूहि । बोभवानि । अबोभवीत् अबोभोत् । अबोभूताम् । अबोभवुः । बोभूयात् । बोभूयाताम् । बोभूयुः । बोभूयात् । बोभूयास्ताम् । बोभूयासुः । 'गातिस्थे'ति सिचो लुक् । 'यङो वे'-

यङ इति । यङ्साहचर्यादच् प्रत्यय एव, न प्रत्याहारः । 'ण्यक्षत्रिये' त्यतो लुगित्यनुवर्त्तते, तदाह—लुगिति । अन्तरङ्गत्वादिति । चकाराद्विनाऽपि अच्प्रत्ययं यङो लुग्विधानादनैमित्तिकोऽयं यङ्लुक् 'सन्यङो'रिति सनिमित्तकद्वित्वाद्यपेक्षयाऽन्तरङ्ग इति प्रत्ययसापेक्षबहिरङ्गद्वित्वाद्यपेक्षयाऽऽदावेव भवति, ततः प्रत्ययलक्षणेन यङन्तत्वमादाय 'सन्यङो'रिति द्वित्वं, ततोऽभ्यासकार्यं, 'गुणो यङ्लुको'रिति गुणः, 'सनाद्यन्ता' इति धातुत्वं, 'शेषा'दिति लस्य

१ यङ् प्रत्यय का लुक् हो अच्प्रत्यय परे रहते । कहीं अच् प्रत्ययके विना भी लुक् हो ।

२ यङ्लुगन्त से परे जो हलादि पित् सार्वधातुक उसको इट् विकल्प से हो ।

तीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक् । अबोभूवीत्---अबोभोत् । अबोभूताम् । अबोभूवुः । अबोभविष्यत् ॥

इति यङ्लुक्प्रक्रिया ॥

## अथ नामधातवः ।

[1]सुप आत्मनः क्यच् ३ । १ । ८ ॥

इषिकर्मण एषितुः सम्बन्धिनः सुबन्तादिच्छायामर्थे क्यच्-प्रत्ययो वा स्यात् ॥

[2]सुपो धातुप्रातिपदिकयोः २ । ४ । ७१ ॥

एतयोरवयवस्य सुपो लुक् ॥

[3]क्यचि च ७ । ४ । ३३ ॥

अवर्णस्य ईत्स्यात् । आत्मनः पुत्रमिच्छति पुत्रीयति ॥

परस्मैपदं, शप्, तस्य अदादिपाठाल्लुक्, 'यङो वे'तीड्विकल्पः । गुणावादेशौ । तेन बोभवीतीति सिद्धम् । **नित्यत्वादिति** । कृताऽकृतप्रसङ्गित्वेन वुको नित्यत्वं, गुणस्य तु वुकि सत्यप्राप्त्याऽनित्यत्वमिति परगुणापेक्षया नित्यो वुगेव भवति । अतएव 'भुवो वुको नित्यत्वा'दिति ''इन्धिभवती'ति सूत्रस्थं भाष्यं सङ्गच्छते ।

इति यङ्लुगन्तप्रक्रिया ।

धातोः कर्मण इत्यत इच्छायामिति वेति चानुवर्त्तते, ततश्च सन्निधानादिच्छाकर्मण एव ग्रहणमित्याह **इषिकर्मण इति** ।

परस्य पुत्रमिच्छतीत्यत्राऽतिप्रसङ्गवारणाय सूत्रे स्वशब्दपर्याय आत्मशब्द उपात्तः । स्वपदेन च इषिसन्निधानादिच्छाकर्त्तैव ग्राह्य इत्याशयेनाह- **एषितुरिति** । इच्छाकर्त्तुरित्यर्थः । एवञ्च परसम्बन्धिपुत्रादेर्न क्यच् । सुबन्तस्य चैतद्विशेषणद्वयमर्थद्वारकं बोध्यम् । पुत्रमात्मन इच्छतीत्यत्र, पुत्रमिति सुबन्तं

१ इच्छाते का जो कर्म हो, एषिता [ इच्छा के कर्त्ता ] का जो सम्बन्धी हो तद्वाचक जो सुबन्त उससे इच्छा अर्थ में क्यच् प्रत्यय विकल्प से हो ।

२ धातु और प्रातिपदिक का अवयव जो सुप् उसका लुक् हो ।

३ अवर्ण को ईकारादेश हो क्यच परे रहते ।

**नः क्ये १ । ४ । १५ ॥**[1]

क्यचि क्यङि च नान्तमेव पदं नाऽन्यत् । नलोपः । राजीयति । नान्तमेवेति किम् ? । वाच्यति । हलि च । गीर्यति । पूर्यति । धातोरित्येव । नेह—दिवमिच्छति दिव्यति ॥

**क्यस्य विभाषा ६ । ४ । ५० ॥**[2]

हलः परयोः क्यच्क्यङोर्लोपो वाऽऽर्धधातुके । आदेः परस्य । अतो लोपः । तस्य स्थानिवत्त्वाल्लघूपधगुणो न । समिधिता । समिध्यिता ॥

**काम्यच्च ३ । १ । ९ ॥**[3]

उक्तविषये काम्यच् स्यात् । पुत्रमात्मन इच्छति पुत्रकाम्यति । पुत्रकाम्यिता ॥

**उपमानादाचारे ३ । १ । १० ॥**[4]

उपमानात्कर्मणः सुबन्तादाचारेऽर्थे क्यच् । पुत्रमिवाचरति

हि इच्छायाः कर्म, इच्छाकर्तुर्देवदत्तादेः सम्बन्धि चेति भवति ततः क्यजिति भावः। **नलोप इति**। पदत्वात् 'नलोपः प्रातिपदिकान्तस्ये'ति नलोप इत्यर्थः । 'वाच्यती'त्यत्र नान्तत्वविरहात्पदत्वाभावेन 'चोः कु'रिति कुत्वं न भवति ।

**आदेरिति** । 'आदेः परस्ये'त्यनेन यकारलोप इत्यर्थः । **तस्येति** । **तस्य**=अकारलोपस्य, **स्थानिवत्त्वात्**='अचः परस्मि'न्निति स्थानिवत्त्वात्।

**गुणो नेति** । इकारस्योपधात्वविरहादिति **भावः** ।

**उक्तविषये**=इषिकर्मण एषितुः सम्बन्धिनः सुबन्तादिच्छायामर्थे ।

'पुत्रीयति छात्र' मित्यत्र पुत्र उपमानं, छात्र उपमेयभूतः। एवञ्च उपमा-

१ क्यच् और क्यङ् परे रहते नान्त ही की पदसञ्ज्ञा होय—अन्य की न हो ।

२ हल् से परे जो क्यच् और क्यङ् उसका लोप हो विकल्प से आर्धधातुक परे रहते ।

३ इच्छति का जो कर्ता हो, एषिताका जो सम्बन्धी हो तद्वाचक सुबन्त से इच्छा अर्थ में काम्यच् हो विकल्प से ।

४ उपमानवाचक जो कर्मसञ्ज्ञक सुबन्त उससे आचार अर्थ में क्यच् होय ।

पुत्रीयति छात्रम् । विष्णूयति द्विजम् ॥ [1]सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः । अतो गुणे । कृष्ण इवाचरति कृष्णति । स्व इवाचरति स्वति । सस्वौ ॥

**अनुनासिकस्य क्विझलोः क्ङिति ६ । ४ । १५ ॥**[2]

अनुनासिकान्तस्योपधाया दीर्घः स्यात्क्वौ झलादौ च क्ङिति । इदमिवाचरति इदामति । राजेव राजानति । पन्था इव पथीनति ॥

**[3]कष्टाय क्रमणे ३ । १ । १४ ॥**

चतुर्थ्यन्तात्कष्टशब्दादुत्साहेऽर्थे क्यङ् स्यात् । कष्टाय क्रमते कष्टायते । पापं कर्तुमुत्सहत इत्यर्थः ॥

**[4]शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ३ । १ । १७ ॥**

एभ्यः कर्मभ्यः करोत्यर्थे क्यङ् स्यात् । शब्दं करोति शब्दा-

नात्कर्मसंज्ञकात्सुबन्तात्पुत्रशब्दात्क्यचि पुत्रीयतीति रूपमित्याशयः । 'विष्णूयती'त्यत्राऽकृत्सार्वेति दीर्घः । **सर्वप्रातिपदिकेभ्यः**=प्रातिपदिकमात्रात्-आचारेऽर्थे क्विब्वेत्यर्थः । कृष्ण इवाचरतीत्यत्र कृष्णेति प्रातिपदिकात्क्विपि सर्वापहारिलोपे सनाद्यन्ता इति धातुत्वे लटि तिपि शपि 'अतो गुणे' इति पररूपे कृष्णतीति सिध्यति । कृष्णेत्यस्य सुबन्तत्वविरहेणाऽपदत्वं स्पष्टमेवेति तत्पम् ।

कष्टशब्दोऽत्र पापार्थक इत्याशयेनाह **पापमिति** ।

शब्दायते=कोलाहलं करोति । आह्वयतीति वा ('चिल्लाता है' 'बुलाता है')।

१ प्रातिपदिक मात्र से परे क्विप् होय विकल्प से आचार अर्थ में ।

२ अनुनासिकान्त जो धातु उसकी उपधा को दीर्घ हो क्वि और झलादि कित्ङित परे रहते ।

३ चतुर्थ्यन्त कष्ट शब्द से उत्साह अर्थ में क्यङ् हो ।

४ शब्द वैर कलह अभ्र कण्व और मेघ-ये-कर्मसञ्ज्ञक उपपद रहते करोति अर्थ में क्यङ् हो ।

यते ॥ (ग.सू.) [1]तत्करोति तदाचष्टे—इति णिच्। (ग.सू.) [2]प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च। प्रातिपदिकाद्धात्वर्थे णिच् स्यात्. इष्ठे यथा प्रातिपदिकस्य पुंवद्भाव रभाव—टिलोप—विन्मतुब्लोप—यणादिलोप—प्रस्थस्फाद्यादेश—भसंज्ञास्तद्वण्णावपि स्युः। इत्यल्लोपः। घटं करोत्याचष्टे वा—घटयति ॥

इति नामधातवः ॥ ५ ॥

## अथ कण्ड्वादयः।

### [3]कण्ड्वादिभ्यो यक् ३।१।२७॥

एभ्यो धातुभ्यो नित्यं यक् स्यात्स्वार्थे। कण्डूञ् गात्रविघर्षणे ॥ १ ॥ कण्डूयति। कण्डूयते—इत्यादि ॥

इति कण्ड्वादयः ॥

तदिति। द्वितीयान्तात्करोतीत्यर्थे, द्वितीयान्तादाचष्टे इत्यर्थे च णिच्स्यादित्यर्थः। णिच्=घटादिशब्दाण्णिच्। 'प्रातिपदिकाद्धात्वर्थे' इति अल्लोपः। 'सनाद्यन्ता' इति धातुत्वम्। नामधातवः=प्रातिपदिका सन्तो धातुसंज्ञकाः।

१ द्वितीयान्त स करोति इस अर्थ में, और द्वितीयान्त से आचष्टे इस अर्थ में णिच् हो।

२ प्रातिपदिक से धात्वर्थ में णिच् हो बहुलता से। और वह इष्ठवत् हो। अर्थात् इष्ठन् प्रत्यय परे रहते जो जो कार्य हों वे णिच् परे रहते भी हों।

३ कण्ड्वादिगणपठित जो धातु उनसे नित्य यक् होय स्वार्थ में।

# अथात्मनेपदप्रक्रिया

## [1] कर्तरि कर्मव्यतिहारे १।३।१४॥

क्रियाविनिमये द्योत्ये कर्तर्यात्मनेपदम्। व्यतिलुनीते। अन्यस्य योग्यं लवनमन्यः करोतीत्यर्थः॥

## [2] न गतिहिंसार्थेभ्यः १।३।१५॥

व्यतिगच्छन्ति। व्यतिघ्नन्ति॥

## [3] नेर्विशः १।३।१७॥

निविशते॥

## [4] परिव्यवेभ्यः क्रियः १।३।१८॥

परिक्रीणीते। विक्रीणीते। अवक्रीणीते॥

## [5] विपराभ्यां जेः १।३।१९॥

कर्माऽत्र–क्रिया। तदाह–कर्मेति। अन्यस्येति। शूद्रादियोग्यं सस्यलवनादिकं क्षत्रियादिः करोतीत्यर्थः।

न गतीति। अर्थशब्दः प्रत्येकं सम्बध्यते। कर्मव्यतिहारे गत्यर्थकेभ्यो हिंसार्थकेभ्यश्चात्मनेपदं नेत्यर्थः। अर्थग्रहणसामर्थ्याद्ये शब्दान्तरमनपेक्ष्य गतिहिंसयोर्वर्त्तन्ते ते एव धातवोऽत्र गृह्यन्ते, अन्येषान्तु नेह ग्रहणं, तेन 'सम्प्रहरन्ते राजान' इत्यत्रात्मनेपद कर्मव्यतिहारे भवत्येव। 'हरतेरप्रतिषेध' इति वार्तिकञ्चतद्बोधकमेवेति ज्ञानेन्द्रभिक्षुकाः। नेरिति। निपूर्वाद्विशतेरात्मनेपदं स्यात्।

परीति। परिव्यवपूर्वात्क्रीणातेरात्मनेपदमित्यर्थः।

विपरेति। विपराभ्या जयतेरात्मनेपदं स्यात्।

१ क्रिया का विनिमय ( अदला बदला ) द्योत्य–हो तो धातु से आत्मनेपद हो कर्ता में।

२ कर्मव्यतिहार अर्थ में गत्यर्थक और हिंसार्थक धातुओं से आतमनेपद नहीं हो।

३ नि उपसर्गपूर्वक जो विश् धातु उससे आत्मनेपद होय।

४ परि–वि और अव उपसर्ग से परे जो क्रीञ् धातु उससे आत्मनेपद हो।

५ वि और परा से परे जो जिधातु उससे आत्मनेपद हो।

विजयते । पराजयते ॥

**[1] समवप्रविभ्यः स्थः १ । ३ । २२ ॥**

सन्तिष्ठते । अवतिष्ठते । प्रतिष्ठते । वितिष्ठते ॥

**[2] अपह्नवे ज्ञः १ । ३ । ४४ ॥**

शतमपजानीते । अपलपतीत्यर्थः ॥

**[3] अकर्मकाच्च १ । ३ । ४५ ॥**

सर्पिषो जानीते । सर्पिषोपायेन प्रवर्तते इत्यर्थः ॥

**[4] उदश्चरः सकर्मकात् १ । ३ । ५३ ॥**

धर्ममुच्चरते । उल्लङ्घ्य गच्छतीत्यर्थः ॥

**[5] समस्तृतीयायुक्तात् १ । ३ । ५४ ॥**

रथेन सञ्चरते ॥

**[6] दाणश्च सा चेच्चतुर्थ्यर्थे १ । ३ । ५५ ॥**

सम्पूर्वाद्दाणस्तृतीयान्तेन युक्ताद्युक्तं स्यात्, तृतीया चेच्चतुर्थ्यर्थे । दास्या संयच्छते कामी ॥

**समवेति** । समवप्रविभ्यः परस्य तिष्ठतेरात्मनेपदं स्यादित्यर्थः । **अपेति** । जानातेरात्मनेपदं स्यादपलापे इत्यर्थः । ( अपह्नव=छिपाना ) ।

**अकर्मेति** । जानातेरकर्मकादात्मनेपदमित्यर्थः ।

**उद इति** । उत्पूर्वाच्चरतेः सकर्मकादात्मनेपदं स्यादित्यर्थः ।

**सम इति** । तृतीयान्तेन युक्तात्सम्पूर्वाच्चरतेरात्मनेपदं स्यादित्यर्थः ।

१ सम्–अव–प्र और वि–इनसे परे स्थाधातु से आत्मनेपद हो ।

२ अपह्नव ( छिपाना ) अर्थ में ज्ञा धातु से आत्मनेपद हो ।

३ अकर्मक ज्ञा धातु से आत्मनेपद हो ।

४ उत्पूर्वक सकर्मक जो चर् धातु उससे आत्मनेपद हो ।

५ तृतीयान्त से युक्त जो सम्पूर्वक दाण् धातु–उससे आत्मनेपद हो यदि तृतीया चतुर्थी के अर्थ में हो तो ।

**पूर्ववत्सनः[1] १ । ३ । ६२ ॥**

सनः पूर्वो यो धातुस्तेन तुल्यं सन्नन्तादप्यात्मनेपदं स्यात् । एदिधिषते ॥

**हलन्ताच्च[2] १ । २ । १० ॥**

इक्समीपाद्धलः परो झलादिः सन् कित्स्यात् । निविविक्षते ॥

**गन्धनाऽवक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः[3] १ । ३ । ३२ ॥**

गन्धनं—सूचनम् । उत्कुरुते । सूचयतीत्यर्थः । अवक्षेपणं—भर्त्सनम् । श्येनो वर्तिकामुत्कुरुते । भर्त्सयतीत्यर्थः । हरिमुपकुरुते । सेवते इत्यर्थः । परदारान्प्रकुरुते । तेषु सहसा प्रवर्तते । एधो दकस्योपस्कुरुते । गुणमाधत्ते । कथाः प्रकुरुते । प्रकथयतीत्यर्थः । शतं प्रकुरुते । धर्मार्थं विनियुङ्क्ते । एषु किम् ? । कटं करोति ।

**भुजोऽनवने[4] १ । ३ । ६६ ॥**

कामातुरः स्वधर्मपत्नीं परित्यज्य दास्यै ददातीत्यर्थः । अत्र 'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीये'ति चतुर्थ्यर्थे तृतीया । दासीकर्मकं सम्प्रदानं हि अशिष्टव्यवहारः ।

**निविविक्षते इति ।** सनः कित्त्वात्पुगन्तेति गुणो न । **गन्धनेति** । एष्वर्थेषु करोतेरात्मनेपदमित्यर्थः । **साहसिक्यं**=सहसा प्रवृत्तिः, बलात्कार इत्यर्थः । **एधोदकस्योपस्कुरुते इति ।** एधः=काष्ठ । दकस्य=जलस्य । काष्ठविशेषयोगाज्जलं रक्तवर्णं नानागुणकं च भवतीत्यर्थः । **अनवने**=भोजनेऽर्थे भुजेरात्मनेपदं

१ सन् से पूर्व जो धातु उसकी तुल्य सन्नन्त से भी आत्मनेपद हो ।

२ इक् समीप हल् से परे जो झलादि सन् वह कित् हो ।

३ गन्धन—अवक्षेपण—सेवन—साहसिक्य—प्रतियत्न—प्रकथन—उपयोग—इन अर्थों में कृधातु से आत्मनेपद हो ।

४ पालन से भिन्न ( भोजन ) अर्थ में भुज् धातु से आत्मनेपद हो ।

ओदनं भुङ्क्ते । अनवने किम् ? महीं भुनक्ति ॥

इत्यात्मनेपदप्रक्रिया ॥ ६ ॥

# अथ परस्मैपदप्रक्रिया ।

अनुपराभ्यां कृञः[1] १ । ३ । ७९ ॥

[ अनुपराभ्यां कृञः ] कर्तृगे च फले गन्धनादौ च परस्मैपदं स्यात् । अनुकरोति । पराकरोति ॥

अभिप्रत्यतिभ्यः क्षिपः[2] १ । ३ । ८० ॥

क्षिप प्रेरणे । स्वरितेत् । अभिक्षिपति ॥

प्राद्वहः[3] १ । ३ । ८१ ॥

प्रवहति ॥

परेर्मृषः[4] १ । ३ । ८२ ॥

परिमृष्यति ॥

स्यात् । अवनं=पालनम्, अनवनं-तद्भिन्नं भोजनम् ।

* इत्यात्मनेपदप्रक्रिया *

अनुपराभ्यामिति । आभ्यां कृञः परस्मैपदं स्यात् । अभीति । एभ्यः परस्मात् क्षिपः परस्मैपदम् । प्राद्वह इति । प्राद्वहतेः परस्मैपदं स्यात् । परेर्मृष इति । परिपूर्वान्मृषतेः परस्मैपदं स्यात् ।

१ क्रिया का फल कर्ता को प्राप्त होता हो और गन्धनादि अर्थ द्योत्य हों तो भी अनु और परा उपसर्ग से परे कृधातु से परस्मैपद ही हो ।

२ अभि—प्रति—अति—इन उपसर्ग से परे क्षिप्-धातु से परस्मैपद हो ।

३ प्र उपसर्ग से परे वह धातु से परस्मैपद हो ।

४ परि उपसर्ग से परे जो मृष् धातु उससे परस्मैपद हो ।

व्याङ्परिभ्यो रमः[1] १ । ३ । ८३ ॥

रमु क्रीडायाम् । विरमति ॥

उपाच्च[2] १ । ३ । ८४ ॥

यज्ञदत्तमुपरमति । उपरमयतीत्यर्थः । अन्तर्भावितण्यर्थोऽयम् ॥

* इति परस्मैपदप्रक्रिया * ॥ इति पदव्यवस्था ॥

## अथ भावकर्मप्रक्रिया

भावकर्मणोः[3] १ । ३ । १३ ॥

[भावे कर्मणि च धातोः—] लस्यात्मनेपदम् ॥

सार्वधातुके यक्[4] ३ । १ । ६७ ॥

धातोर्यक् भावकर्मवाचिनि सार्वधातुके । भावः—क्रिया । सा च भावार्थकलकारेणानूद्यते । युष्मदस्मद्भ्यां सामानाधिकरण्याऽभावात्प्रथमः पुरुषः । तिङ्वाच्यक्रियाया अद्रव्यरूपत्वेन द्वित्वा-

व्याङिति । एभ्या रमतः परस्मैपदं स्यात् ।

उपाच्चेति । उपाद्रमतेः परस्मैपदं स्यादित्यर्थः ।

*इति परस्मैपदप्रक्रिया ।*

'धातोरेकाचः' इत्यतो'धातो'रिति 'चिण्भावकर्मणो'रित्यतो'भावकर्मणो'रित्यनुवर्त्तते, तदाह—भावकर्मेति। सामानाधिकरण्याभावादिति। कर्तृकर्माभिधायिनो लस्यैव युष्मदस्मद्भ्यां सामानाधिकरण्यं सम्भवति, न भावाऽभिधायिनः, युष्मदस्मद्भ्यां कर्तृकर्मणोरभिधानेऽपि लकारेण कर्तृकर्मणोरनभिधानात्। लकारेण हि क्रियामात्रस्यैवाऽभिधानादित्याशयः।अद्रव्येति। लिङ्गसङ्ख्यान्वया-

१ वि—आङ् और परि उपसर्ग से परे जो रम् धातु उससे परस्मैपद हो।

२ उप उपसर्ग से परे जो रम् धातु उससे भी परस्मैपद हो ।

३ भाव और कर्म में जो लकार उसके स्थान में आत्मनेपद हो ।

४ धातु से यक् प्रत्यय हो भावकर्मवाची सार्वधातुक परे रहते ।

धप्रतीतेर्न द्विवचनादि, किं त्वेकवचनमेवोत्सर्गतः । त्वया मया अन्यैश्च भूयते । बभूवे ॥

स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झन-ग्रहदृशां वा चिण्वदिट् च ६ । ४ । ६२ ॥

उपदेशे योऽच् तदन्तानां हनादीनां च चिणीवाऽङ्गकार्यं वा स्यात्स्यादिषु भावकर्मणोर्गम्यमानयोः, स्यादीनामिडागमश्च । चिण्व-

नर्हत्वेनेत्यर्थः । लिङ्गसङ्ख्यान्वितं हि द्रव्यं । द्रव्यं सत्त्वमिति च पर्यायशब्दौ । सत्त्वभिन्नञ्च असत्त्वम् । एवञ्च लिङ्गसङ्ख्यान्वयानर्हत्वमेवाऽसत्त्वमिति फलितन्त-दाह—द्वित्वाद्यप्रतीतेरिति ।

ननु तिङ्वाच्यभावनाया असत्त्वरूपत्वेन द्वित्वाद्यप्रतीतेरिवैकत्वाऽप्रतीतेरे-कवचनमपि न स्यादत आह उत्सर्गत इति । 'द्व्येकयो'रित्यत्र 'बहुषु' इत्यत्र च 'एकवचनम्' 'द्विबह्वोर्द्विवचनबहुवचने' इति न्यासेन एकवचन-मौत्सर्गिकं, द्वित्वविवक्षायां द्विवचनं, बहुत्वविवक्षाया बहुवचनमित्यर्थस्य लाभे-नैकवचनस्यौत्सर्गिकत्वलाभात् । औत्सर्गिकत्वञ्च—एकत्वमुत्सृज्य द्विबहुवचना-न्यविषये विहितत्वेनैकत्वानपेक्षणादेवेति भावः । भावे लकारे कर्त्तुस्तिङ्वाच्य-त्वाऽभावेनानभिहितत्वादनभिहिते कर्त्तरि तृतीया, तदाह—त्वयेति ।

यद्यप्यजादयो द्वन्द्वेन निर्दिष्टास्तथापि 'उपदेश' इति अच एव विशेषणं, नेतरेषाम्, अव्यभिचारात् । तदाह—उपदेशे योऽजिति । 'चिण्व'दिति सप्तम्यन्ताद्वतिः, प्रतियोगिनि उपमेये 'स्यसिच्तासि'ष्विति-सप्तमीदर्शनात्, तदाह—चिणीवेति । चिणि परे यथाऽङ्गकार्यं वृद्ध्यादिकं भवति तद्वत्स्यादिषु परेष्वपि स्यादित्यर्थः । अङ्गस्येत्यधिकारादङ्गकार्यमिति लभ्यते ।

'भावकर्मणो'रिति विषयसप्तमी, तदाह भावकर्मणोर्गम्यमानयो-रिति । परसप्तम्या 'भावकर्मवाचिषु स्यादिषु परेषु' इति तु नार्थः, स्यसिच्-

१ उपदेश में जो अच्, तदन्त जो धातु और हन् ग्रह् दृश धातु—इन को चिण् की तरह ( चिण् परे रहते जो कार्य होता हो वह— ) अङ्गकार्य हो विकल्प से स्य—सिच्—सीयुट् और और तास् परे रहते, भाव और कर्म गम्यमान होतो । और स्य सिच्—सीयुट् को इडागम हो ।

द्भावपक्षेऽयमिट् । चिण्वद्भावाद्वृद्धिः । भाविता—भविता । भाविष्यते—भविष्यते । भूयताम् । अभूयत । भाविषीष्ट—भविषीष्ट ॥

## चिण्[1] भावकर्मणोः ३ । १ । ६६ ॥

च्लेश्चिण् स्याद्भावकर्मवाचिनि तशब्दे परे । अभावि । अभाविष्यत—अभविष्यत ।

अकर्मकोऽप्युपसर्गवशात्सकर्मकः । अनुभूयते आनन्दश्चैत्रेण त्वया मया च । अनुभूयेते । अनुभूयन्ते । त्वमनुभूयसे । अहमनुभूये । अन्वभावि । अन्वभाविषाताम्—अन्वभविषाताम् ।

णिलोपः । भाव्यते । भावयाञ्चक्रे । भावयाम्बभूवे । भावयामासे । चिण्वदिट् । आभीयत्वेनाऽसिद्धत्वाण्णिलोपः । भाविता—भावयिता । भाविष्यते—भावयिष्यते । अभाव्यत । भाव्येत । भाविषीष्ट—भावयिषीष्ट । अभावि । अभाविषाताम्—अभावयिषाताम् ॥ बुभूष्यते ।

तासीनां भावकर्मवाचित्वाऽभावात्, लुङादरेव तथात्वात् । 'भावकर्मवाचिनि प्रत्यये परतो ये स्यादय' इत्यपि नार्थः सम्भवति, सीयुडागमविशिष्टस्यैव लिङो भावकर्मवाचकतया केवलस्य सीयुटो भावकर्मवाचकप्रत्ययपरत्वाभावात् ।

इड्विधौ स्यसिच्सीयुट्तासिष्विति सप्तमी षष्ठ्या विपरिणम्यते, तदाह—**स्यादीनामिति** ।

'च्लेः सिच्' 'चिण् ते पदः' इत्येताभ्यां 'चिण्' इति 'च्ले'रिति चानुवर्त्याह **च्लेरिति । सकर्मक इति** । तेन कर्मणि प्रत्यये युष्मदस्मदोर्लकारवाच्यकारकवाचित्वात्तिङ् सामानाधिकरण्येन द्वित्वबहुत्वसङ्ख्यासम्बन्धोऽपि भवतीति पुरुषवचनादिव्यवस्थाऽपि कर्मणि लकारे भवति । **भाव्यत इति** । अकर्मका अपि ण्यन्ताः सकर्मका भवन्ति । तेन तेभ्यः कर्मण्येव प्रत्ययः ।

**बुभूष्यत इति**। अकर्मकाः सकर्मका वा सन्नन्ता यथायथमकर्मकाः सकर्मका

1 च्लि के स्थान में चिण हो भावकर्मवाचि तशब्द पर रहते ।

बुभूषाञ्चक्रे । बुभूषिता । बुभूषिष्यते ॥ बोभूय्यते । बोभूयते ॥

**अकृत्सार्वधातुकयोर्दीर्घः** । स्तूयते विष्णुः । स्ताविता—स्तोता । स्ताविष्यते स्तोष्यते । अस्तावि । अस्ताविषाताम्—अस्तोषाताम् ॥

**ऋ गतौ** । गुणोऽर्तीति गुणः । अर्यते । **स्मृ स्मरणे** । स्मर्यते । सस्मरे । उपदेशग्रहणाच्चिण्वदिट् । आरिता—अर्ता । स्मारिता—स्मर्ता । अनिदितामिति नलोपः । स्रस्यते । इदितस्तु नन्द्यते । सम्प्रसारणम्—इज्यते ॥

**तनोतेर्यकि[1] ६ । ४ । ४४ ॥**

[तनोतेर्यकि] आकारोऽन्तादेशो वा स्यात् । तायते—तन्यते ।

**तपोऽनुतापे च[2] ३ । १ । ६५ ॥**

तपश्च्लेश्चिण् न स्यात् कर्मकर्तर्यनुतापे च । अन्वतप्त पापेन । घुमास्थेतीत्वम् । दीयते । धीयते । ददे ॥

**आतो युक् चिण्कृतोः[3] ७ । ३ । ३३ ॥**

आदन्तानां युगागमः स्याच्चिणि ञ्णिति कृति च ।

वा भवन्ति । तेभ्यस्तथैव भावे कर्मणि च प्रत्ययः । बोभूय्यते इति । यङ्-लुकोस्तु प्रकृतिवत्सकर्मकाऽकर्मतेति बोध्यम् ।

'विड्वनोरनुनासिकस्यात्' 'ये विभाषा' इत्येताभ्यां 'विभाषेति' 'आत्' इति च पदद्वयमनुवर्त्याह—**आकार इति** ।

'च्ले: सिच्' 'चिण् ते पदः' 'अचः कर्मकर्तरि' 'न रुधः' इत्येतेभ्यो यथायथमनुवर्त्याह-**च्लेरिति** । 'अचो ञ्णिती'त्यतो 'ञ्णिती'त्यनुवर्त्याह

१ तन् धातु को आकार अन्तादेश हो विकल्प से यक् परे रहते ।

२ तप् धातु से परे जो च्लि उसके स्थान में चिण् नहीं हो कर्मकर्त्ता में, व अनु-ताप अर्थ गम्यमान हो तो ।

३ आदन्त धातुओं को युक् का आगम हो चिण् परे रहते और ञित् णित् कृत् परे रहते ।

दायिता—दाता । दायिषीष्ट—दासीष्ट । अदायि । अदायिषाताम् ॥ भज्यते ॥

[1]भञ्जेश्च चिणि ६ । ४ । ३३ ॥

नलोपो वा स्यात् । अभाजि—अभञ्जि ॥ लभ्यते ॥

[2]विभाषा चिण्णमुलोः ७ । १ । ६९ ॥

लभेर्नुमागमो वा स्यात् । अलम्भि—अलाभि ॥

इति भावकर्मप्रक्रिया ॥ ७ ॥

## अथ कर्मकर्तृप्रक्रिया ।

यदा कर्मैव कर्तृत्वेन विवक्षितं तदा सकर्मकाणामप्यकर्मकत्वात्कर्तरि भावे च लकारः ॥

[3]कर्मवत्कर्मणा तुल्यक्रियः ३ । १ । ८७ ॥

---

भञ्जेरिति । 'श्नान्नलोपः' 'जान्तनशां विभाषे' त्येताभ्यां 'नलोपः' इति 'विभाषा' इति चानुवर्तते, तदाह— नलोप इति ।

विभाषेति । 'इदितो नुम् धातोः' 'लभेश्चे'त्येताभ्यां 'लभे'रिति 'नुम्' इति चानुवर्तते ।

यदेति । कर्म='कालः फलं पचती'त्यादौ फलादि रूपं कर्म । विवक्षितं= 'कालः किं पचति, फलं स्वयमेव पच्यते' इत्यादिरीत्या फलादिरूप कर्म कर्तृत्वेन विवक्षितम् । सकर्मकाणां=पचादीनाम् । लकार इति । 'अकर्मकेभ्यो भावे कर्त्तरि चे'त्युक्तेः ।

---

१ भञ्ज धातु के नकार का लोप हो विकल्प से चिण् परे रहते ।

२ लभ् धातु को नुम् का आगम हो विकल्प से चिण् और णमुल् परे रहते ।

३ कर्मस्था जो क्रिया—उस क्रिया से तुल्य है क्रिया जिसकी ऐसा जो कर्ता वह कर्मवत् हो ।

कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत्स्यात् । कार्यातिदेशोऽयम् । तेन यगात्मनेपदचिण्चिण्वदिटः स्युः । पच्यते फलम् । भिद्यते काष्ठम् । अपाचि । अभेदि । भावे—भिद्यते काष्ठेन ॥

इति कर्मकर्तृप्रक्रिया ॥ ८ ॥

# अथ लकारार्थप्रक्रिया ।

## अभिज्ञावचने लृट् ३ । २ । ११२ ॥

स्मृतिबोधिन्युपपदे भूतानद्यतने धातोर्लृट् । लङोऽपवादः ॥ वस निवासे । स्मरसि कृष्ण गोकुले वत्स्यामः ? । एवं 'बुध्यसे' 'चेतयसे' इत्यादिप्रयोगेऽपि ।

## न यदि ३ । २ । ११३ ॥

यद्योगे उक्तं न । अभिजानासि कृष्ण ! यद्वने अभुञ्ज्महि ? ॥

'कर्तरि शप्' इत्यत॰ 'कर्तरि' इति पदमनुवर्तते, सूत्रे कर्मपदञ्च कर्मस्थक्रियापरमित्यत आह—**कर्मस्थयेति** । कर्मकारकस्थयेत्यर्थः । शास्त्रस्यापि कार्यार्थत्वान्मुख्यत्वेन प्रकृते कार्यातिदेश एवेति भावः ।

तत्र कर्त्तरि उदाहरति **पच्यते इति** । कर्तुरुक्तत्वात्तद्वाचकात्प्रथमा, तदाह—**फलमिति** । काष्ठेनेति कर्त्तरि तृतीया, भावे लकारे कर्तुरनुक्तत्वात् । एवं–पच्यते फलेनेत्यप्यवधेयम् । इति कर्तृकर्मप्रक्रिया ॥ ८ ॥

**अभिज्ञा**= स्मृतिः, सा उच्यते बोध्यतेऽनेनेति अभिज्ञावचनं, तस्मिन्–अभिज्ञावचने इति विग्रहस्तदाह—**स्मृतीति** । **उपपदे**=समीपोच्चरिते सति । 'भूते' इत्यधिकृतम्, 'अनद्यतने लङ्' इत्यतोऽनद्यतने इत्यनुवर्त्तते, तदाह **भूते इति** । लङः='अनद्यतने लङ्' इत्यनेन विहितस्य ।

'**प्रयोगेऽपि**' इत्यस्य–'लृट्' इति शेषः । तेषामपि प्रकरणादिवशेन स्मृतौ वृत्तिसम्भवेन स्मृतिबोधकत्वादिति भावः । **उक्तम्**–'अभिज्ञावचने लृट्' इति

१ स्मृतिबोधक उपपद रहते भूत अनद्यतन अर्थ में धातु से लृट् लकार हो ।

२ स्मृतिबोधक धातु उपपद रहने पर भी यदि यत्-शब्द का योग हो तो धातु से लृट् लकार न हो ।

## १लट् स्मे ३ । २ । ११८ ॥

लिटोऽपवादः । यजति स्म युधिष्ठिरः ॥

## २वर्तमानसामीप्ये वर्तमानवद्वा ३ । ३ । १३१ ॥

वर्तमाने ये प्रत्यया उक्तास्ते वर्तमानसामीप्ये भूते भविष्यति च वा स्युः । कदाऽऽगतोऽसि ? । अयमागच्छामि, अयमागमं वा । कदा गमिष्यसि ? । एष गच्छामि, गमिष्यामि वा ॥

## ३हेतुहेतुमतोर्लिङ् ३ । ३ । १५६ ॥

[ हेतुहेतुमतोर्लिङ् ] वा स्यात् । कृष्णं नमेच्चेत्सुखं यायात् ।

लट् । 'अभुञ्जमही'त्यत्र लङेव, न लट्, यद्योगात् । लडिति । 'स्मे'त्यव्ययं, तद्योगे लिड्विषये (भूतानद्यतनपरोक्षार्थवृत्तेर्धातोः–) लडित्यर्थः । वर्तमानेति । समीपमेव सामीप्यं, चतुर्वर्णादेराकृतिगणत्वात्स्वार्थे ष्यञ् । 'वर्तमाने लडि'त्यारभ्य तृतीयाध्यायद्वितीयपादसमाप्तिपर्यन्तं 'वर्तमाने' इत्यधिक्रियते, तस्मिन्नधिकारे याभ्यः प्रकृतिभ्यो येनोपाधिना ये प्रत्यया उक्तास्ते तथैव (तेनोपाधिना ताभ्य एव प्रकृतिभ्यः)वर्तमानसमीपे भूते भविष्यति च वा स्युरित्यर्थः । तत्फलितमाह **वर्तमाने इति** ।

हेतुः=कारणम्, हेतुमत्–फल, कार्यमिति यावत् । एवञ्च हेतुभूते

१ स्म के योग में लिट् के विषय में भूत अनद्यतन परोक्षार्थवृत्ति धातु से लट् लकार हो ।

२ 'वर्तमाने लट्' यहाँ से लेकर तृतीयाध्याय के द्वितीय-पाद की समाप्ति पर्यन्त, 'वर्तमाने' इसके अधिकार में जिस प्रकृति से–जिस उपाधि से जितने प्रत्यय कहे गये हैं वे सब उसी उपाधि और उसी प्रकृति से वर्तमान समीप–भूत और वर्तमान समीप भविष्यत् अर्थ में भी विकल्प से हों ।

३ हेतुहेतुमद्भाव अर्थ में वर्तमान जो धातु उससे भविष्यत् अर्थ में लिङ् लकार हो विकल्प से ।

कृष्णं नंस्यति चेत्सुखं यास्यति । भविष्यत्येवेष्यते । नेह— हन्तीति पलायते ।

'विधिनिमन्त्रणे'ति लिङ् । विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्तनम् । यजेत ॥ निमन्त्रणं नियोगकरणम्, आवश्यके श्राद्धभोजनादौ दौहित्रादेः प्रवर्तनम् । इह भुञ्जीत ॥ आमन्त्रणं कामचारानुज्ञा । इहाऽऽसीत ॥ अधीष्टं सत्कारपूर्वको व्यापारः । पुत्रमध्यापयेद्भवान् ॥ सम्प्रश्नः—सम्प्रधारणम् । किं भो वेदमधीयीय उत तर्कम् ? । प्रार्थनं याञ्चा । भो भोजनं लभेय । एवं लोट् ॥

इति लकारार्थप्रक्रिया ॥ ९ ॥ इति तिङन्तप्रकरणम् ॥

# अथ कृदन्ते कृत्यप्रक्रिया ।

## धातोः ३ । १ । ९१ ॥

आ तृतीयाध्यायसमाप्तेर्ये प्रत्ययास्ते धातोः परे स्युः । कृदतिङिति कृत्संज्ञा ॥

फलभूते वाऽर्थे वर्त्तमानाद्धातोर्भविष्यति लिङ् वा स्यात्, पक्षे लृट् । 'कृष्णं नमे चे'दित्यत्र च कृष्णनतिः कारणं, सुखलाभ फलम् । हेतुभूतेऽर्थे वर्त्तमानश्च नम्धातु, फलभूतेऽर्थे वर्त्तमानश्च याधातु । एवञ्च ततोऽत्र लिङ् ।

भविष्यत्येवेति । लिङित्यनुवर्त्तमाने पुनर्लिङ्ग्रहणादिति भावः। हन्तीति । अत्र वर्त्तमानकालिकहननाद्धेतोः पलायते इत्यर्थः । इतिर्हेतौ ।

व्यापारः=प्रवर्त्तनम् । सम्प्रधारणं=इदं करणीयमिदं वेति निश्चयः । करणीयावधारणमिति यावत् । * इति लकारार्थप्रक्रिया *

धातोरिति । तृतीयाध्यायसमाप्ति पर्यन्तं ये प्रत्ययास्तव्यदादयो वक्ष्यन्ते ते धातोः परे स्युरित्यर्थः ।

१ धातोः इस सूत्र से लेकर तृतीयाध्याय की समाप्ति पर्यन्त जो तव्यदादि प्रत्यय कहे जायेंगे वे सब प्रत्यय धातु से परे हों ।

**१ वाऽसरूपोऽस्त्रियाम् ३ । १ । ९४ ॥**

अस्मिन्धात्वधिकारेऽसरूपोऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात्, स्त्र्यधिकारोक्तं विना ॥

**२ कृत्याः ३ । १ । ९५ ॥**

'ण्वुल्तृचा'वित्यतः प्राक् कृत्यसंज्ञाः स्युः ॥

**३ कर्तरि कृत् ३ । ४ । ६७ ॥**

कृत्प्रत्ययः कर्तरि स्यात् । इति प्राप्ते

**४ तयोरेव कृत्यक्तखलर्थाः ३ । ४ । ७० ॥**

एते भावकर्मणोरेव स्युः ॥

**५ तव्यत्तव्यानीयरः ३ । १ । ९६ ॥**

धातोरेते प्रत्ययाः स्युः । एधितव्यम्, एधनीयं त्वया । भावे

**वासरूपेति** । परिभाषेयम्, अधिकारत्वं तु नाऽस्य, स्वरितत्वकल्पनागौरवप्रसङ्गात् । 'असरूप'इति च लिङ्गम् । यत्र असरूपःप्रत्ययो विधीयते तत्र 'वा' इत्युपतिष्ठते । 'बाधक' इति शेषः । तदाह-**अस्मिन्निति** । स्त्र्यधिकारे तु असरूपः प्रत्यय उत्सर्गस्य नित्यमेव बाधकः । यथा-चिकीर्षा । अत्र हि 'स्त्रियां क्ति'न्निति क्तिनमकारप्रत्ययो नित्यं बाधते । भावे उदाहरति **एधितव्यमिति** । त्वत्कर्तृका वर्द्धनक्रियेत्यर्थः । ननु भावस्याऽसत्त्वरूपत्वेन तत्र लिङ्गसङ्ख्यान्वयविरहाद्भावे प्रत्यये कथमेकत्वं क्लीवत्वञ्चेत्याशङ्क्याह **भावे इति** ।

१ धातोः' इसके अधिकार में असरूप अपवाद जो प्रत्यय वह उत्सर्ग का बाधक विकल्प से हो । स्त्रियाम्-इस अधिकार को छोड़कर ।

२ ण्वुल्तृचौ इस से पहले जो प्रत्यय उनकी कृत्य-सञ्ज्ञा हो ।

३ कृत् सञ्ज्ञक जो प्रत्यय वह कर्ता में हो ।

४ कृत्य क्त और खलर्थ प्रत्यय भाव और कर्म में ही हों ।

५ धातु से तव्यत्-तव्य और अनीयर् प्रत्यय हों ।

औत्सर्गिकमेकवचनं क्लीबत्वं च । चेतव्यश्चयनीयो वा धर्मस्त्वया ।

*केलिमर[1] उपसंख्यानम् । पचेलिमा माषाः । पक्तव्या इत्यर्थः । भिदेलिमाः सरलाः । भेत्तव्या इत्यर्थः । कर्मणि प्रत्ययः ॥

**कृत्यल्युटो[2] बहुलम् ३ । ३ । ११३ ॥**

**क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।**
**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥१॥**

स्नात्यनेनेति स्नानीयं चूर्णम् । दीयतेऽस्मै दानीयो विप्रः ॥

**अचो[3] यत् ३ । १ । ९७ ॥**

अजन्ताद्धातोर्यत् स्यात् । चेयम् ॥

**ईद्यति[4] ६ । ४ । ६५ ॥**

यति परे आत ईत्स्यात् । देयम् । ग्लेयम् ॥

कर्मण्युदाहरति–**चेतव्य इति** । **केलिमर इति** । धातोः केलिमर् प्रत्ययः स्याद्भावकर्मणोरित्यर्थः । **सरलाः**=वृक्षभेदाः ।

वृत्तिकारस्तु 'कर्मकर्त्तरि चायमिष्यते'इत्याह, तन्न युक्तं, 'भिदेलिमा' इत्यस्य भेत्तव्या इति विवरणस्य भाष्ये दर्शनात्, तदाह–**कर्मणीति** ।

**क्वचिदिति** । विधेः–क्वचित्प्रवृत्तिः, क्वचिन्नैव प्रवृत्तिः, क्वचिच्च **विभाषा**= विकल्पेन प्रवृत्तिः, क्वचिच्च वैपरीत्येन=सर्वोपाधिव्यभिचारेण प्रवृत्तिः, इत्थं **विधेः**=विधिशास्त्रकर्त्तृकं विधानं, **बहुधा**=नानाप्रकारं वीक्ष्य–विधिविधानविदो विद्वांसश्चतुर्विधं बाहुलकमाहुरित्यर्थः । **स्नानीयं**=स्नानोपयोगि चूर्णादि । ( 'सोडा' 'बेसन' 'साबुन' ) । चेतुं योग्य चेयम् । चेतुं शक्यं वा चेयम् । दातुं योग्यं देयम् । दाधातोरात ईत्वे 'सार्वधातुकार्धधातुकयो'रित्य-

[1] धातु से केलिमर् प्रत्यय हो ।
[2] कृत्य प्रत्यय और ल्युट् प्रत्यय बहुलता से हों ।
[3] अजन्त धातु से यत् प्रत्यय हो ।
[4] यत् प्रत्यय परे रहते आदन्त धातु के आकार को ईकार आदेश हो ।

## पोरदुपधात्[1] ३ । १ । ९८ ॥

पवर्गान्तादुपधाद्यत्स्यात् । ण्यतोऽपवादः । शप्यम् । लभ्यम् ॥

## एतिस्तुशास्वृदृजुषः क्यप्[2] ३ । १ । १०९ ॥

एभ्यः क्यप् स्यात् ॥

## ह्रस्वस्य पिति कृति तुक्[3] ६ । १ । ७१ ॥

इत्यः । स्तुत्यः ॥ शासु अनुशिष्टौ ॥

## शास इदङ्हलोः[4] ६ । ४ । ३४ ॥

शास उपधाया इत्स्यादङि हलादौ क्ङिति । शिष्यः । वृत्यः । आदृत्यः । जुष्यः ॥

## मृजेर्विभाषा[5] ३ । १ । ११३ ॥

नेन गुणः । एवं रलेयमित्यत्रापि । शप्तुं योग्यं-शप्यं चैत्रकुलम् । 'शप आक्रोशे' इत्यतः कर्मणि प्रत्ययः । लब्धुं योग्यं-लभ्यम् । डुलभष् प्राप्तावित्यस्मात्कर्मणि यत् ।

एभ्यः='इण् गतौ' 'ष्टुञ् स्तुतौ' 'शासु अनुशिष्टौ' 'वृञ् वरणे' 'दृङ् आदरे' 'जुषी प्रीतिसेवनयो'रित्येतेभ्यो धातुभ्यः ।

एतुं योग्यः-इत्यो गुरुः । स्तोतुं योग्यः स्तुत्यः शिवः । शासितुं योग्यः-शिष्यः=छात्रः । वरीतुं योग्यः-वृत्यः । आदर्तुं योग्यः-आदृत्यः । जोषितुं योग्यः-जुष्यः सेवनीयः ।

मार्ष्टुं योग्यः मृज्यः=शोधनीयः पटः । मृजू शुद्धावादादिकः । कर्तुं

---

१ अत् उपधा में जिसके ऐसा जो पवर्गान्त धातु उससे यत् प्रत्यय हो ।

२ इण्-ष्टुञ्-शासु-वृञ्-दृङ्-जुष इन धातुओं से परे क्यप् प्रत्यय हो ।

३ ह्रस्व को तुक् का आगम हो पित् कृत् प्रत्यय परे रहते ।

४ शास् धातु की उपधा को इकार आदेश हो अङ् परे रहते और हलादि कित् ङित् परे रहते ।

५ मृज् धातु से क्यप् प्रत्यय हो विकल्प से ।

मृजेः क्यब्वा स्यात् । मृज्यः ॥

**[1] ऋहलोर्ण्यत् ३ । १ । १२४ ॥**

ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत् । कार्यम् । हार्यम् । धार्यम् ॥

**[2] चजोः कु घिण्ण्यतोः ७ । ३ । ५२ ॥**

चजोः कुत्वं स्याद् घिति ण्यति च परे ॥

**[3] मृजेर्वृद्धिः ७ । २ । ११४ ॥**

मृजेरिको वृद्धिः स्यात्सार्वधातुकार्धधातुकयोः । मार्ग्यः ॥

**[4] भोज्यं भक्ष्ये ७ । ३ । ६९ ॥**

भोग्यमन्यत् ॥ इति कृत्यप्रक्रिया ॥

# अथ पूर्वकृदन्तम्

**[5] ण्वुल्तृचौ ३ । १ । १३३ ॥**

धातोरेतौ स्तः । 'कर्तरि कृ'दिति कर्त्रर्थे ॥

**[6] युवोरनाकौ ७ । १ । १ ॥**

योग्यं-कार्यम् । कर्मणि ण्यत् । एवं हार्यं, धार्यमित्यादि । भोक्तुं-योग्यं-भोज्यम्=अन्नम् । अन्यत्=दारधनादिकम् ।

* इति कृत्यप्रक्रिया *

१ ऋवर्णान्त जो धातु और हलन्त जो धातु उनसे ण्यत् प्रत्यय हो ।

२ जकार और चकार को कुत्व हो घित् और ण्यत् परे रहते ।

३ मृज् धातु के इक् को वृद्धि हो सार्वधातुक आर्धधातुक परे रहते ।

४ भक्ष्य अर्थ में भोज्य ऐसा ( कुत्वाऽभाव ) निपातन हो, (अन्य अर्थ हो तो भोग्य यही होता है ) ।

५ धातु से ण्वुल् और तृच् प्रत्यय हों ।

६ यु और वु को अन और अक आदेश क्रम से हों ।

'युु' 'वु' एतयोरनाऽकौ स्तः । कारकः । कर्ता ॥

[1] नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३ । १ । १३४ ॥

नन्द्यादेर्ल्युः, ग्रहादेर्णिनिः, पचादेरच् स्यात् । नन्दयतीति नन्दनः । जनमर्दयतीति जनार्दनः । लवणः । ग्राही । स्थायी । मन्त्री । पचादिराकृतिगणः ॥

[2] इगुपधज्ञाप्रीकिरः कः ३ । १ । १३५ ॥

एभ्यः कः स्यात् । वुधः । कृशः । ज्ञः । प्रियः । किरः ॥

[3] आतश्चोपसर्गे ३ । १ । १३६ ॥

प्रज्ञः । सुग्लः ॥

[4] गेहे कः ३ । १ । १४४ ॥

गेहे कर्तरि ग्रहेः कः स्यात् । गृहम् ॥

कारक इति । करोतीति कारकः=कर्ता । नन्दनः=पुत्रः । जनं=समुद्रस्थ राक्षसवर्गम्-अर्दयतीति पीडयतीति जनार्दनः-विष्णुः । अर्द गतौ याचने चेति भौवादिकाण्ण्यन्ताल्ल्युः । लुनातीति लवणः । अत्रैव गणे निपातनाण्णत्वम् । गृह्णातीति-ग्राही । तिष्ठतीति स्थायी । मन्त्रयते=इति-मन्त्री=अमात्यः। 'मत्रि गुप्तपरिभाषणे'-चौरादिक आकुस्मीय आत्मनेपदी । वुध्यते इति-वुधः पण्डितः । 'वुध-अवगमने' दैवादिक आत्मनेपदी । कृश्यतीति कृशः=स्वल्पः । 'कृश तनूकरणे' दैवादिकः । जानातीति ज्ञः=पण्डित । प्रीणातीति प्रियः । किरतीति किरः=विक्षेपकः,सूकरश्च । 'भूदारः सूकरः किरिश्चे'ति कोशः । 'कॄ विक्षेपे' तुदादिः ।

प्रजानातीति-प्रज्ञः=पण्डितः । सुग्लायतीति सुग्लः । धान्यादिकं गृह्णा-

१ नन्यादि से ल्यु प्रत्यय हो ग्रहादि से णिनि प्रत्यय हो और पचादि से अच् प्रत्यय हो ।

२ इक् उपधा में जिसके ऐसा जो धातु और ज्ञा प्री-कॄ-इन धातु इनसे क प्रत्यय हो ।

३ उपसर्गपूर्वक जो आदन्त धातु उससे कप्रत्यय हो ।

४ ग्रहधातु से कप्रत्यय हो गेह कर्ता हो तो ।

**[१]कर्मण्यण् ३ । २ । १ ॥**

कर्मण्युपपदे धातोरण् प्रत्ययः स्यात् । कुम्भं करोतीति कुम्भकारः ।

**[२]आतोऽनुपसर्गे कः ३ । २ । ३ ॥**

आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात् । अणोऽपवादः । आतो लोप इटि च ॥ गोदः । धनदः । कम्बलदः । अनुपसर्गे किम्? । गोसन्दायः । *मूलविभुजादिभ्यः कः । मूलानि विभुजति मूलविभुजो रथः । आकृतिगणोऽयम् । महीध्रः । कुध्रः ।

**[३]चरेष्टः ३ । २ । १६ ॥**

अधिकरण उपपदे । कुरुचरः ।

**[४]भिक्षासेनादायेषु च ३ । २ । १७ ॥**

भिक्षाचरः । सेनाचरः । 'आदाय'इति ल्यबन्तम् । आदायचरः ॥

**[५]कृञो हेतुताच्छील्यानुलोम्येषु ३ । २ । २० ॥**

तीति गृहम् ।

कुम्भ अस् कारस्त्यलौकिकं विग्रहवाक्यम् । कुम्भकार=कुलालः । गां ददातीति गोदः । मही धरतीति महीध्रः=पर्वतः । एवं कुः=पृथ्वी, कुध्रोऽपि पर्वतः ।

चरेरिति । अधिकरणे उपपदे चरेष्टः स्यादित्यर्थः । कुरुषु देशविशेषेषु चरति=गच्छतीति कुरुचरः । भिक्षां चरतीति भिक्षाचरः । आदाय=गृहीत्वा चरतीति—आदायचरः । 'चर गतिभक्षणयोः' ।

१ कर्म उपपद रहते धातु से अण् प्रत्यय हो ।

२ कर्म उपपद रहते अनुपसृष्ट आदन्त धातु से क प्रत्यय हो ।

३ अधिकरण उपपद रहते चर् धातु से टप्रत्यय हो ।

४ भिक्षा-सेना और आदाय—ये कर्म उपपद रहते चरधातु से ट प्रत्यय हो ।

५ हेतु ताच्छील्य और आनुलोम्य ये अर्थ द्योत्य हों तो कृधातु से ट प्रत्यय हो ।

एषु धात्वेषु करोतेष्टः स्यात् ॥

[1] अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ८ । ३ । ४६ ॥

आदुत्तरस्याऽनव्ययस्य विसर्गस्य समासे नित्यं सादेशः स्यात्करोत्यादिषु परेषु । यशस्करी विद्या । श्राद्धकरः । वचनकरः ॥

[2] एजेः खश् ३ । २ । २८ ॥

ण्यन्तादेजेः खश् स्यात् ॥

[3] अरुर्द्विषदजन्तस्य मुम् ६ । ३ । ६७ ॥

अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात्खिदन्ते परे, न त्वव्ययस्य । शित्त्वाच्छबादिः । जनमेजयतीति जनमेजयः ॥

[4] प्रियवशे वदः खच् ३ । २ । ३८ ॥

प्रियंवदः । वशंवदः ॥

**आत्**=अवर्णात् । यशः करोति—यशस्करी । यशोहेतुरित्यर्थः । श्राद्धं करोति तच्छीलः—श्राद्धकरः । वचनं करोति—वचनकरः । अनुकूल इत्यर्थः । आनुलोम्ये इदम् ।

**शित्वात्**=खशः शित्वेन सार्वधातुकत्वात्, **शबादिः**=यथायथं शप्श्यनादिः । जनमेजयति=शत्रुवर्गं कम्पयतीति—जनमेजयः=राजविशेषः । **प्रियेति** । अनयोरुपपदयोर्वदेः खच् स्यात् । प्रियं वदतीति **प्रियंवदः** । प्रियभाषी । वशं वदतीति **वशंवद** =अनुकूलः । खित्वान्मुम् ।

१ अवर्ण से उत्तर अव्ययभिन्नसम्बन्धी जो विसर्ग उसको नित्य सकारादेश हो समास में, कृ कमि कंस कुम्भ पात्र कुशा कर्णी ये परे रहते ।

२ ण्यन्त जो एज् धातु उससे खश् प्रत्यय हो ।

३ अरुष्–द्विषत्, और अजन्त जो धातु उनको मुम् का आगम हो खिदन्त परे रहते । अव्यय को मुम् का आगम न हो ।

४ प्रिय और वश उपपद रहते वद् धातु से खच् प्रत्यय हो ।

**अन्येभ्योऽपि दृश्यन्ते ३ । २ । ७५ ॥**

मनिन् क्वनिप् वनिप् विच् एते प्रत्यया धातोः स्युः[1] ।

**नेड्वशि कृति ७ । २ । ८ ॥**[2]

वशादेः कृत इण् न स्यात् ॥ **शॄ हिंसायाम्** ॥ सुशर्मा । प्रातरित्वा ॥

**विड्वनोरनुनासिकस्याऽऽत् ६ । ४ । ४१ ॥**[3]

अनुनासिकस्याऽऽत्स्यात् । विजायते इति विजावा ॥ **ओणृ अपनयने** ॥ अवावा । विच् ॥ **रुष रिष हिंसायाम्** ॥ रोट् । रेट् । सुगण् ॥

**क्विप् च ३ । २ । ७६ ॥**[4]

अयमपि दृश्यते । उखास्रत् । पर्णध्वत् । वाहभ्रट् ॥

**सुप्यजातौ णिनिस्ताच्छील्ये ३ । २ । ७८ ॥**[5]

अजात्यर्थे सुपि धातोर्णिनिस्ताच्छील्ये द्योत्ये । उष्णभोजी ॥

सुशृणातीति सुशर्मा । मनिनन्तः । प्रातरेतीति-**प्रातरित्वा**=प्रातर्यायी। क्वनिवन्तोऽयम् । **विडिति**। विट्प्रत्यये वन्प्रत्यये च परतोऽनुनासिकस्याऽऽत्स्यादित्यर्थः। विजावा-वनिवन्तः। ओणतीति-**अवावा**=ब्राह्मणी। **विजिति**। विजन्तमुदाहरतीत्यर्थः। रुष्यतीति **रोट्**=हिंसक । विजन्तोऽयम्। **उखायाः**=स्थाल्याः सकाशात् स्रंसते-प्रपततीति-**उखास्रत्**=ओदनः । पर्णात् ध्वसते इति **पर्णध्वत्** । एवं वाहभ्रट् । उष्णमुङ्क्ते तच्छीलः-उष्ण**भोजी** ।

१ मनिन् क्वनिप्-वनिप्-विच्-ये प्रत्यय धातु से हों ।

२ वशादि जो कृत् उसको इट् का आगम नहीं हो ।

३ अनुनासिक के स्थान में आकारादेश हो विट् और वन् प्रत्यय परे रहते।

४ धातु से क्विप् प्रत्यय भी हो ।

५ जातिवाचकसे भिन्न सुबन्त उपपद रहते धातु से णिनि प्रत्यय हो ताच्छील्य द्योत्य हो तो ।

मनः[1] ३ । २ । ८२ ॥

सुपि मन्यतेर्णिनिः स्यात् । दर्शनीयमानी ॥

आत्ममाने खश्च[2] ३ । २ । ८३ ॥

स्वकर्मके मनने वर्त्तमानान्मन्यतेः सुपि खश् स्यात् । चाण्णिनिः । पण्डितमात्मानं मन्यते पण्डितंमन्यः । पण्डितमानी ॥

खित्यनव्ययस्य[3] ६ । ३ । ६६ ॥

खिदन्ते परे पूर्वपदस्य ह्रस्वः । ततो मुम् । कालिम्मन्या ॥

करणे यजः[4] ३ । २ । ८५ ॥

करणे उपपदे भूतार्थे यजेर्णिनिः स्यात्कर्तरि । सोमेनेष्टवान् सोमयाजी । अग्निष्टोमयाजी ॥

दृशेः क्वनिप्[5] ३ । २ । ९४ ॥

कर्मणि भूते । पारं दृष्टवान् पारदृश्वा ॥

राजनि युधिकृञः[6] ३ । २ । ९५ ॥

क्वनिप्स्यात् । युधिरन्तर्भावितण्यर्थः । राजानं योधितवान्

दर्शनीय मन्यते—दर्शनीयमानी—चैत्रः ।

आत्मान कालीं मन्यते कालिम्मन्या । अग्निष्टोमेनेष्टवान्—अग्निष्टोम-

१ सुबन्त उपपद रहते मन् धातु से णिनि प्रत्यय हो ।

२ स्वकर्मक मनन में वर्तमान जो मन् धातु उससे खश् प्रत्यय हो सुबन्त उपपद रहते । चकार से णिनि प्रत्यय भी हो ।

३ अव्ययभिन्न जो पूर्वपद उसको ह्रस्व हो खिदन्त परे रहते ।

४ करण उपपद रहते भूत अर्थ में यज् धातु से णिनि प्रत्यय हो कर्ता में ।

५ कर्म उपपद रहते भूत अर्थ में दृश् धातु से क्वनिप् प्रत्यय हो ।

६ कर्मसंज्ञक राजन् शब्द उपपद रहते युध् धातु और कृञ् धातु से भूतकाल में क्वनिप् प्रत्यय हो ।

राजयुध्वा । राजकृत्वा ॥

**[1] सहे च ३ । २ । ९६ ॥**

'कर्मणी'ति निवृत्तम् । सह योधितवान् सहयुध्वा । सहकृत्वा ॥

**[2] सप्तम्यां जनेर्डः ३ । २ । ९७ ॥**

**[3] तत्पुरुषे कृति बहुलम् ६ । ३ । १४ ॥**

ङेरलुक् । सरसिजम् । सरोजम् ॥

**[4] उपसर्गे च संज्ञायाम् ३ । २ । ९९ ॥**

'प्रजा स्यात्सन्ततौ जने' ॥

**[5] क्तक्तवतू निष्ठा १ । १ । २६ ॥**

एतौ निष्ठासंज्ञौ स्तः ॥

**[6] निष्ठा ३ । २ । १०२ ॥**

भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् । तत्र 'तयोरेवे'ति भावकर्मणोः क्तः । 'कर्तरि कृ'दिति कर्तरि क्तवतुः । उकावितौ । स्नातं मया ।

याजी । 'राजयुध्वन्'-शब्दो नान्तः । राजानं कृतवान्-राजकृत्वा । 'ह्रस्वस्य पिती'ति तुक् । **सहे चेति** । सहे उपपदे युध्यतेः क्वनिप्स्यात् ।

**सप्तम्यामिति** । सप्तम्यन्ते उपपदे जनेर्डः स्यात् ।

**ङेरलुगिति** । कृदन्ते उत्तरपदे सप्तम्या बहुलमलुक् स्यात्तत्पुरुषे इत्यर्थः । फलितमाह-**ङेरिति** । उपसर्गे उपपदे जनेर्डः स्यात्संज्ञायाम् । प्रजायते इति प्रजा । **तत्र**=क्तक्तवत्वोर्मध्ये । अस्नायि-इति स्नातम् । भावे क्तः । अस्तावि-

१ सह उपपद रहते युध् धातु से क्वनिप् हो ।

२ सप्तम्यन्त उपपद रहते जन् धातु से डप्रत्यय हो ।

३ कृदन्त उत्तरपद परे रहते ङि का बहुलता से अलुक् हो तत्पुरुष में ।

४ उपसर्ग उपपद रहते जन् धातु से डप्रत्यय हो सञ्ज्ञा में ।

५ क्त-और क्तवतु की निष्ठा सञ्ज्ञा हो ।

६ भूतार्थवृत्ति धातु से निष्ठासञ्ज्ञक प्रत्यय हों ।

स्तुतस्त्वया विष्णुः । विश्वं कृतवान् विष्णुः ॥

**रदाभ्यां[1] निष्ठातो नः पूर्वस्य च दः ८ । २ । ४२ ॥**

रदाभ्यां परस्य निष्ठातस्य नः स्यात्, निष्ठापेक्षया पूर्वस्य धातोर्दस्य च ॥ शॄ हिंसायाम् ॥ ॠत इत् । रपरः । णत्वम् । शीर्णः । भिन्नः । छिन्नः ॥

**संयोगादेरातो धातोर्यण्वतः[2] ८ । २ । ४३ ॥**

निष्ठातस्य नः स्यात् । द्राणः । ग्लानः ॥

**ल्वादिभ्यः[3] ८ । २ । ४४ ॥**

एकविंशतेर्ल्वादिभ्यः प्राग्वत् । लूनः ॥ ज्या धातुः । ग्रहिज्येति संप्रसारणम् ॥

**हलः[4] ६ । ४ । २ ॥**

अङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्तस्य दीर्घः । जीनः ॥

इति स्तुतः । कर्मणि क्तः । अकार्षीदिति कृतवान् ।

**रदाभ्यां**=रेफदकाराभ्याम् । 'दस्य चे'त्यस्य 'नकार' इति शेषः । अशारि इति शीर्णः । अभेदि—इति भिन्नः । अच्छेदि—इति—छिन्नः । कर्मणि क्तः ।

अद्रासीदिति द्राणः । द्रा कुत्सायां गतौ । गत्यर्थाकर्मकेति कर्त्तरि क्तः । अग्लासीदिति ग्लानः । प्राग्वत्—निष्ठातस्य नः स्यात् । अलावि—इति लूनः= छिन्नः । अज्यासीत् इति **जीनः**=वृद्धः । अकर्मकत्वात्कर्त्तरि क्तः । अभौक्षी-

१ रेफ और दकार से परे जो निष्ठा का तकार उसको नकार आदेश हो, और निष्ठा की अपेक्षा से पूर्व जो धातु का दकार उसको भी नकार हो ।

२ संयोगादि यण्वान् जो आदन्त धातु उससे परे जो निष्ठा, का तकार उसको नकार हो ।

३ एकविंशति (२१) जो ल्वादि, उनसे परे जो निष्ठाका तकार उसको नकार आदेश हो ।

४ अङ्गका अवयव जो हल् उससे परे जो संप्रसारण तदन्त को दीर्घ हो ।

**[1]ओदितश्च ८ । २ । ४५ ॥**

भुजो—भुग्नः । टुओश्वि । उच्छूनः ॥

**[2]शुषः कः ८ । २ । ५१ ॥**

निष्ठातस्य कः ॥ शुष्कः ॥

**[3]पचो वः ८ । २ । ५२ ॥**

पक्वः ॥ क्षै क्षये ॥

**[4]क्षायो मः ८ । २ । ५३ ॥**

क्षामः ॥

**[5]निष्ठायां सेटि ६ । ४ । ५२ ॥**

णेर्लोपः । भावितः । भावितवान् ॥ दृह हिंसायाम् ॥

**[6]दृढः स्थूलबलयोः ७ । २ । २० ॥**

स्थूले बलवति च निपात्यते ॥

दिति भुग्नः । 'भुजो कौटिल्ये' तुदादि । उदश्वत्—इति उच्छूनः । **टुओश्वि** 'गतिवृद्ध्योः'—भौवादिकः । ततः कर्त्तरि क्तः । **उच्छूनः**=वृद्धिङ्गतः । ( सूजा हुआ, फूला हुआ )।

अशुषत् इति शुष्कः । 'शुष शोषणे' दिवादिः ।

अपाचीति पक्वः—कर्मणि क्तः ।

अक्षासीदिति—क्षामः । 'क्षै क्षये' 'आदेच उपदेशे'इत्यात्वम् । निष्ठातस्य मः । कर्त्तरि क्तः । **निष्ठायामिति** । सेण्निष्ठाया परतो णेर्लोपः स्यादित्यर्थः । अभावीति—भावितः । **दृढ इति** । स्थूले बलवति च'दृढ'इति निपात्यते इत्यर्थः ।

१ ओदित् जो धातु उससे परे जो निष्ठा का तकार उसको नकारादेश हो ।

२ शुष् धातु से परे जो निष्ठा का तकार उसको क आदेश हो ।

३ पच् धातु से परे जो निष्ठा का तकार उसको वकार आदेश हो ।

४ क्षै धातु से परे जो निष्ठा का तकार उसको मकारादेश हो ।

५ सेट् निष्ठा परे रहते णि का लोप हो ।

६ स्थूल अर्थ में—और बलवान् अर्थ में दृढ यह निपातन हो ।

**दधातेर्हिः ७ । ४ । ४२ ॥**

तादौ किति । हितम् ॥

**दो दद् घोः ७ । ४ । ४६ ॥**

घुसंज्ञकस्य 'दा' इत्यस्य 'दथ्' स्यात् तादौ किति । चर्त्वम् । दत्तः ॥

**लिटः कानज्वा ३ । २ । १०६ ॥**

**क्वसुश्च ३ । २ । १०७ ॥**

लिटः कानच् क्वसुश्च वा स्तः । तङानावात्मनेपदम् । चक्राणः ॥

**म्वोश्च ८ । २ । ६५ ॥**

मान्तस्य धातोर्नत्वं म्वोः परतः । जगन्वान् ॥

**लटः शतृशानचावप्रथमासमानाधिकरणे ३।२।१२४॥**

अप्रथमान्तेन समानाधिकरणे लट एतौ वा स्तः । शबादि । पचन्तं चैत्रं पश्य ॥

अदर्हीदिति द७। 'दह दहि वृद्धौ' भौवादिकः। दधातेरिति। तादौ किति परे दधातेर्हि· स्यात्। अधायि–इति–हितम्। कर्मणि क्तः। चक्रे इति चक्राणः। एवं–जगामेति जगन्वान्। क्वसुप्रत्ययान्तोऽयम्।

शबादीति। शतृशानचोः शित्त्वात्सार्वधातुकतया'कर्त्तरि श'वित्यादिना

१ धा धातु को हि आदेश हो तादि कित् परे रहते।

२ घुसञ्ज्ञक जो दा धातु उसको दथ् आदेश हो तादि परे रहते।

३ लिट् के स्थान में कानच् और क्वसुप्रत्यय विकल्प से हों।

४ मान्त धातु को नकार आदेश हो मकार-वकार परे रहते।

५ अप्रथमान्त के साथ सामानाधिकरण्य हो तो लट् के स्थान में शतृ और शानच् प्रत्यय होते हैं।

## [1]आने मुक् ७ । २ । ८२ ॥

अदन्ताऽङ्गस्य मुगागमः स्यादाने परे । पचमानं चैत्रं पश्य । 'ल'डित्यनुवर्तमाने पुनर्लड्ग्रहणात्प्रथमासामानाधिकरण्येऽपि क्वचित् । सन् द्विजः ॥

## विदेः शतुर्वसुः[2] ७ । १ । ३६ ॥

वेत्तेः परस्य शतुर्वसुरादेशो वा । विदन् । विद्वान् ॥

## तौ सत्[3] ३ । २ । १२७ ॥

तौ=शतृशानचौ सत्संज्ञौ स्तः ॥

## लृटः सद्वा[4] ३ । ३ । १४ ॥

[ लृटः शतृशानचौ वा स्तः ] । व्यवस्थितविभाषेयम् । तेनाऽप्रथमासामानाधिकरण्ये प्रत्ययोत्तरपदयोः सम्बोधने लक्षणहेत्वोश्च नित्यम् । करिष्यन्तं करिष्यमाणं पश्य ॥

## आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु[5] ३ । २ । १३४ ॥

यथायथं गवादीत्यर्थः । पचन्त चैत्रमित्यादौ द्वितीयान्तादिना समानाधिकरण्याल्लटः शत्रादेशः । अस्तीति सन् । श्नसोरल्लोप. । सन्, सन्तौ, सन्तः । इत्यादिरूपाणि । वेत्तीति **विदन्** ।

अप्रथमासमानाधिकरणे उदाहरति-**करिष्यन्तमिति** । **प्रत्यये**-करिष्यतोऽपत्यं कारिष्यत. । **उत्तरपदे**-करिष्यद्भक्तिः । **सम्बोधने** हे करिष्यन् । **लक्षणहेत्वोः**-अर्जयिष्यन् वसति । अर्जनलक्षणस्तद्धेतुको वा वास इत्यर्थः ।

१ अदन्त अङ्ग को मुम् का आगम हो आन परे रहते ।

२ विद्धातु से परे शतृ के स्थान में वसु आदेश हो विकल्प करके ।

३ शतृ और शानच् की सत्सञ्ज्ञा हो ।

४ लृट् के स्थान में सत्सञ्ज्ञक प्रत्यय ( शतृ शानच् ) विकल्प से हों ।

५ क्विप् प्रत्यय तक जो प्रत्यय कहेंगे वे तच्छील आदि अर्थ में होते हैं ।

क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलादिषु कर्तृषु बोध्याः ॥

[1] तृन् ३ । २ । १३५ ॥

कर्ता कटान् ॥

[2] जल्पभिक्षकुट्टलुण्टवृङः षाकन् ३ । २ । १५५ ॥

[3] षः प्रत्ययस्य १ । ३ । ६ ॥

प्रत्ययस्याऽऽदिः ष इत्संज्ञः स्यात् । जल्पाकः । भिक्षाकः । कुट्टाकः । लुण्टाकः । वराकः । वराकी ॥

[4] सनाशंसभिक्ष उः ३ । २ । १६८ ॥

चिकीर्षुः । आशंसुः । भिक्षुः ॥

[5] भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ३ । २ । १७७ ॥

विभ्राट् । भाः ॥

क्विपम्=भ्राजभासेत्यादिक्विपम् । कटानिति । 'न लोके'ति षष्ठीनिषेधात्कर्मणि द्वितीयैव । जल्पेति । एभ्यः षाकन् प्रत्ययः स्यात्तच्छीलादिषु । जल्पतीति जल्पाकः बहुगर्ह्यवाक् । भिक्षते तच्छीलो भिक्षाकः । कुट्टति तत्साधुकारी–कुट्टाकः । लुण्टति तच्छीलो लुण्टाकः=चोरः । (लुटेरा) । वृणीते इति वराकः । षित्वात् 'षिद्गौरादिभ्यश्चे'ति ङीष् । वराकी । सनेति । एभ्य उप्रत्ययः स्यात् । विभ्राजते इति विभ्राट् । भासते इति भाः । धुर्वतीति धूः । धुर्वी

१ धातु से तृन् प्रत्यय हो तच्छीलादि अर्थ में ।

२ जल्प–भिक्ष–कुट्ट–लुण्ट् और वृङ् इन धातुओं से परे षाकन् प्रत्यय हो तच्छीलादि अर्थ में ।

३ प्रत्यय का आदि भूत जो षकार उसकी इत्सञ्ज्ञा हो ।

४ सन्नन्त, आशंस् और भिक्ष्–धातु से उप्रत्यय हो ।

५ भ्राज्, भास्, धुर्व, द्युत–जि पॄ–जु–और ग्रावपूर्वक स्तु–इन धातुओं से क्विप् हो ।

**[1]राल्लोपः ६ । ४ । २१ ॥**

रेफाच्छ्वोर्लोपः क्वौ झलादौ क्ङिति । धूः । विद्युत् । ऊर्क् । पूः । दृशिग्रहणस्याऽपकर्षाज्जवतेर्दीर्घः । जूः । ग्रावस्तुत् ।
*[2]क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणञ्च ॥ वक्तीति वाक् ॥

**च्छ्वोः [3]शूडनुनासिके च ६ । ४ । १९ ॥**

सतुक्कस्य छस्य वस्य च क्रमात् 'श्' 'ऊठ्' इत्यादेशौ स्तोऽनुनासिके क्वौ झलादौ च क्ङिति । पृच्छतीति प्राट् । आयतं स्तौतीति आयतस्तूः । कटं प्रवते कटप्रूः । जूरुक्तः । श्रयति हरिं श्रीः ॥

**[4]दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ३ । २ । १८२ ॥**

दाबादेः ष्ट्रन् स्यात्करणेऽर्थे । दात्यनेन । दात्रम् । नेत्रम् ॥

हिंसायाम् । राल्लोप इति वलोपः । विद्योतते इति विद्युत् । ऊर्जतीति ऊर्क्=अन्नम् । पिपर्त्तीति—पूः, पुरौ । दृशीति । 'अन्येभ्योऽपि दृश्यते' इत्यग्रिमसूत्रात् 'दृश्यते' इत्यस्याऽपकर्षादित्यर्थः । कटप्रूरित्यत्र 'प्रुङ् गतौ' भ्वादिः । जूरुक्तः=दृशिग्रहणाज्जवतेर्दीर्घः जूः' इत्यादिनाऽनुपदमेवोक्तः ।

दावादेः=दाप् लवने' 'णीञ् प्रापणे' 'शसु हिंसायाम्' 'यु मिश्रणाऽमिश्रणयो' 'युजिर् योगे' 'ष्टुञ् स्तुतौ' 'तुद व्यथने', षिञ् बन्धने' षिच क्षरणे' 'मिह सेचने' 'पत्लृ पतने' 'दंश दशने' 'णह बन्धने' इत्येतेभ्यः ।

१ रेफ से परे जो छकार और वकार उनका लोप हो क्विप् परे रहते और झलादि कित् ङित् परे रहते ।

२ वच्यादि से क्विप् हो, दीर्घ हो, और सम्प्रसारण का अभाव भी हो ।

३ तुक् विशिष्ट जो छकार और वकार उनको क्रम से श् और ऊठ् ये आदेश हों अनुनासिक परे रहते, और क्विप् एवं झलादि कित् ङित् परे रहते ।

४ दावादि जो धातु उनसे ष्ट्रन् प्रत्यय हो करण अर्थ में ।

तितुत्रतथसिसुसरकसेषु च ७ । २ । ९ ॥[1]

एषां दशानां कृत्प्रत्ययानामिण् न । शस्त्रम् । योत्रम् । योक्त्रम् । स्तोत्रम् । तोत्रम् । सेत्रम् । सेक्त्रम् । मेढ्रम् । पत्रम् । दंष्ट्रा । नद्ध्री ॥

अर्तिलूधूसूखनसहचर इत्रः ३ । २ । १८४ ॥[2]

[ अर्त्यादिभ्यः ष्ट्रन् स्यात्करणेऽर्थे ] अरित्रम् । लवित्रम् । धुवित्रम् । सवित्रम् । खनित्रम् । सहित्रम् । चरित्रम् ॥

पुवः सञ्ज्ञायाम् ३ । २ । १८५ ॥[3]

[ करणे पुवः ष्ट्रन्स्यात्संज्ञायाम् ] पवित्रम् ॥ *इति पूर्वकृदन्तम्*

# अथोणादयः ।

कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥ १ ॥[4] करोतीति कारुः । वातीति वायुः । पायुर्गुदम् । जायुरौषधम् । मायुः पित्तम् ।

**योत्रं योक्त्रञ्च**–'जोता' इति प्रसिद्धं काष्ठ, बन्धनरज्जुर्वा । **स्तोत्रं**–स्तुतिसाधनम् । **तोत्रं**–'चाबुक' इति प्रसिद्धं ताडनसाधनम् । **सेत्रं**–बन्धनरज्जुः । **सेक्त्रं**=सेचनपात्रम् । **मेढ्रं**=मेहनम् । **पत्रं**=वाहनम् । **दंष्ट्रा**=दंष्ट्रिका । ( 'जाड' ) **नद्ध्री**=चर्मरज्जुः । **अरित्रं**–केनिपातनम् । (डांडा) **लवित्रं**=छेदनशस्त्रम् । **धुवित्रं**=मृगचर्ममयं व्यजनम् । कुटादित्वान्ङित्त्वेन गुणाऽभावः । **सवित्रं**=सवनसाधनम् । **खनित्रं**=खननसाधनम् । ('खनती, फरसा') । '**पवित्रं**=कुशनिर्मितं पवनसाधनम् । (पवित्री) । *इति पूर्वकृदन्तम्* ।

**कारुः**=शिल्पी । **साधुः** सज्जनः ।

१ ति-तु-त्र-त-थ-सि-सु-स-र-और कस् इन दश कृत्प्रत्ययों को इट् न हो ।

२ ऋ धातु-लू-धू-सू-खन्-सह और चर् इन धातुओं से इत्र प्रत्यय हो करण में ।

३ करण अर्थ में पूञ् धातु से इत्र प्रत्यय हो सञ्ज्ञा में ।

४ कृ-वा-पा-जि-मि-स्वदि-साधि और अश् धातु से उण् प्रत्यय हो ।

स्वादुः । साध्नोति परकार्यमिति साधुः । आशु शीघ्रम् ॥

**उणादयो**[1] **बहुलम् ३ । ३ । १ ॥**

एते वर्तमाने संज्ञायां च बहुलं स्युः । केचिदविहिता अप्यूह्याः ।

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।

कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥

❋ इत्युणादयः ❋

# अथोत्तरकृदन्तम्

**तुमुन्ण्वुलौ**[2] **क्रियायां क्रियार्थायाम् ३ । ३ । १० ॥**

क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टुं याति । कृष्णं दर्शको याति ॥

**कालसमयवेलासु**[3] **तुमुन् ३ । ३ । १६७ ॥**

कालार्थेषूपपदेषु तुमुन् स्यात् । कालः समयो वेला वा भोक्तुम् ॥

**भावे**[4] **३ । ३ । १८ ॥**

ऊहनप्रकारमेवाह—**संज्ञास्विति** । संज्ञाशब्देषु डित्थडवित्थादिषु धातुरूपाणि वेद्यानि, ततो धातोः परे प्रत्ययाश्चोहनीयाः, गुणाऽभावादिकार्यं दृष्ट्वा **अनुबन्धम्**=ककाराद्यनुबन्धञ्च विद्यात् । **एतत्**=एतावदेव, उणादिषु, **शास्त्रम्**=अनुशासनमस्तीत्यर्थः । यथा क्षिपेः रक्—क्षिप्रमिति । इति—**उणादयः** ।

१ उणादि जो प्रत्यय वे वर्तमान में बहुलता से हों सञ्ज्ञा में ।

२ क्रियार्थ जो क्रिया [ तद्वाचक जो धातु ] वह उपपद रहते भविष्यत्-अर्थ मे धातु से तुमुन् और ण्वुल् प्रत्यय हों ।

३ कालार्थक उपपद रहते धातु से तुमुन् प्रत्यय हो ।

४ सिद्धावस्थापन्न धात्वर्थ वाच्य हो तो धातु से घञ् प्रत्यय हो । [ भाव दो प्रकार का होता है १ साध्यावस्थापन्न और २ सिद्धावस्थापन्न । ]

सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् । पाकः ॥

**[१]अकर्तरि च कारके संज्ञायाम् ३ । ३ । १९ ॥**

कर्तृभिन्ने कारके घञ् स्यात् ॥

**[२]घञि च भावकरणयोः ६ । ४ । २७ ॥**

रञ्जेर्नलोपः स्यात् । रागः । अनयोः किम् ? । रज्यत्यस्मिन्निति रङ्गः ॥

**निवासचितिशरीरोपसमाधानेष्वादेश्च कः[३] ३ । ३ । ४१ ॥**

एषु चिनोतेर्घञ् आदेश्च ककारः । उपसमाधानं राशीकर-

**भाव इति** । भावो द्विविधः, साध्यावस्थापन्नः, सिद्धावस्थापन्नश्च । तत्र साध्यावस्थापन्नः क्रियान्तराकाङ्क्षानुत्थापकः, यथा पचतीत्यादौ । सिद्धावस्थापन्नश्च 'पाक' इत्यादौ । अत्र हि सत्त्वभूतो भावः, लिङ्गसंख्यान्वययोग्यत्वात् । 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इत्युक्तेः । पचनं पाक इति विग्रहः । **संज्ञायामिति** । घञन्तेन चेत्संज्ञा गम्यते इत्यर्थः । कर्तृभिन्नं कारकं च कर्मकरणादिकम् । **नलोप इति** । भावकरणयोरर्थयोर्विहिते घञि परतो रञ्जेर्नस्य लोप इत्यर्थः । रञ्जनं रागः । 'भावे' इति घञ् । रज्यतेऽनेनेति वा रागः । 'अकर्तरि च कारके' इति घञ् । (रागः=रङ्ग) । रज्यति लोकोऽस्मिन्निति रङ्गः=रङ्गस्थलम् । ( नाटक का स्टेज ) । अधिकरणे घञ् ।

**उपसमाधानमिति** । उपसमाधानं हि धात्वर्थः, निवासादयस्तु प्रत्य-

१ कर्तृभिन्न कारक में घञ् हो, घञन्त से यदि संज्ञा गम्यमान हो तो ।

२ भाव और करण अर्थ में विहित जो घञ् प्रत्यय वह परे रहते रञ्ज् धातु के नकार का लोप हो ।

३ निवास, चिति शरीर और उपसमाधान इन अर्थों में चिञ् धातु से घञ् प्रत्यय हो । और चिञ् धातु का जो आदिभूत चकार उसको ककार आदेश हो ।

णम्। निकायः। कायः। गोमयनिकायः॥

**एरच् ३।३।५६॥**

इवर्णान्तादच्। चयः। जयः॥

**ऋदोरप् ३।३।५७॥**

ऋवर्णान्तादुवर्णान्ताच्चाऽप्। करः। गरः। यवः। लवः। स्तवः। पवः। *घञर्थे कविधानम्। प्रस्थः। विघ्नः॥

**ड्वितः क्त्रिः ३।३।८८॥**

**क्त्रेर्मम् नित्यम्। ४।४।२०॥**

क्त्रिप्रत्ययान्तान्मप्स्यान्निर्वृत्तेऽर्थे। पाकेन निर्वृत्तं पक्त्रिमम्। डुवप् उप्त्रिमम्॥

यार्थस्य कारकस्योपाधिभूताः। निचीयते इति **निकायः**=निवासः। **चितौ तु**-'आकायमग्निं चिन्वीत' इत्युदाहर्तव्यम्। आचीयन्तेऽस्मिन् इष्टका **इति-आकायम्**=अग्निस्थलविशेषः, तं चित्या सम्पादयेदित्यर्थः। **शरीरे**-चीयतेऽस्मिन्नस्थ्यादिकमिति कायः। अधिकरणे घञ्। **उपसमाधाने**-गोमयनिकायः। निचयनं निकायः। निचीयन्तेऽस्मिन्निति वा निकायः। अधिकरणे भावे घञ्।

चयनं चयः, चीयतेऽसौ वा चयः। जयनं जयः। भावादावच्। करणं करः। गरणं गरः। यूयते इति यवः। लूयते इति लवः। स्तवनं स्तवः। पवनं पवः। भावेऽकर्त्तरि च कारकेऽप्। घञर्थे भावे अकर्त्तरि कारके च। प्रतिष्ठन्ते जना धान्यादिकं वा अत्रेति-**प्रस्थः**=परिमाणभेदः, सानुर्वा। अधिकरणे कः। आलोपः। विघ्नन्ति मनांस्यत्र विघ्नः। अधिकरणे कः। 'गमहन' इत्युपधालोपः। होहन्तेरिति कुत्वम्। **ड्वित इति**। 'डु' इद्यस्यासौ ड्वित्, तस्मात्-ड्वितः। ड्वितो धातोः क्त्रिः स्याद्भावे। वापेन निर्वृत्तम्-उप्त्रिमम्।

१ इवर्णान्त जो धातु उससे अच् प्रत्यय हो।
२ ऋवर्णान्त उवर्णान्त जो धातु उनसे अप् प्रत्यय हो।
३ घञर्थ ( भाव और कर्त्तृभिन्नकारक ) में क प्रत्यय हो।
४ डु इत्सञ्ज्ञक जिसको ऐसी जो धातु उससे क्त्रि प्रत्यय हो भाव में।
५ क्त्रिप्रत्ययान्त जो धातु उससे मप् प्रत्यय हो निर्वृत्त अर्थ में।

**इच्छा[1] ३ । ३ । १०१ ॥**

इषेर्निपातोऽयम् ॥

**अ प्रत्ययात्[2] ३ । ३ । १०२ ॥**

प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारः प्रत्ययः स्यात् । चिकीर्षा । पुत्रकाम्या ॥

**गुरोश्च हलः[3] ३ । ३ । १०३ ॥**

गुरुमतो हलन्तात्स्त्रियामकारः प्रत्ययः स्यात् । ईहा ॥

**ण्यासश्रन्थो युच्[4] ३ । ३ । १०७ ॥**

अकारस्यापवादः । कारणा । हारणा ॥

**नपुंसके भावे क्तः[5] ३ । ३ । ११४ ॥**

**ल्युट् च[6] ३ । ३ । ११५ ॥**

हसितम् । हसनम् ॥

---

तूरित्यादि । इच्छेति । इषेर्भावे शप्रत्ययो यगभावश्च निपात्यते । एषणम्-इच्छा । कर्त्तुमिच्छा-चिकीर्षा । पुत्रस्येच्छा पुत्रकाम्या ।

ईहनम्-ईहा=चेष्टा ।

अकारस्येति । अप्रत्यया'दिति, 'गुरोश्च हल' इति च विहितस्याकारस्याऽपवादोऽयमित्यर्थः । कारणेत्यत्र णिप्रत्ययान्तत्वात्, आसनेत्यत्र गुरुमत्त्वाच्च अप्रत्ययः प्राप्तः ।

ल्युट्चेति । योगविभाग उत्तरार्थः ।

१ इष् धातु से भाव अर्थ में शप्रत्यय हो, यक् का अभाव भी निपातन से हो ।

२ प्रत्ययान्त जो धातु उससे अकार प्रत्यय हो स्त्रीलिङ्ग भाव में ।

३ गुरुमान् हलन्त जो धातु उससे अकार प्रत्यय हो स्त्रीलिङ्ग भाव में ।

४ ण्यन्त-आस्-श्रन्थ धातुओं से युच् प्रत्यय हो ।

५ धातु से क्त प्रत्यय हो नपुंसकलिङ्ग भाव में ।

६ धातु से ल्युट् प्रत्यय भी हो नपुंसक भाव में ।

**पुंसि संज्ञायां घः प्रायेण ३ । ३ । ११८ ॥**

**छादेर्घेऽद्व्युपसर्गस्य । ६ । ४ । ९६ ॥**

द्विप्रभृत्युपसर्गस्य छादेर्ह्रस्वो घे परे । दन्तास्छाद्यन्तेऽनेन दन्तच्छदः । आकुर्वन्त्यस्मिन्नित्याकरः ॥

**अवे तॄस्त्रोर्घञ् । ३ । ३ । १२० ॥**

अवतारः कूपादेः । अवस्तारो जवनिका ।

**हलश्च । ३ । ३ । १२१ ॥**

हलन्ताद्घञ् । घापवादः । रमन्ते योगिनोऽस्मिन्निति रामः । अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः ॥

**ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् । ३ । ३ । १२६ ॥**

करणाधिकरणयोरिति निवृत्तम् । एषु दुःखसुखार्थेषूपपदेषु खल् । तयोरेवेति भावे कर्मणि च । कृच्छ्रे-दुष्करः कटो भवता ।

प्रायेण धातोर्घः स्यात्पुंसि सञ्ज्ञायाम् । 'करणाधिकरणयो'रित्यनुवर्त्तते । एत्य कुर्वन्त्यस्मिन्व्यवहारमिति **आकरः** । 'खनिः स्त्रियामाकरः स्या' दित्यमरः । **अव इति** । अव उपपदे आभ्यां करणाधिकरणयोः पुंसि सञ्ज्ञायां घञ्स्यात् । घस्यापवादः । अवतरन्त्यनेन **अवतारः** अवतरण-मार्गः । अवस्तृणात्यनेन-अवस्तारः-आच्छादनपटः । **हलश्चेति** । हलन्ताद्घञ् स्यात्पुंसि सञ्ज्ञायां करणाऽधिकरणयोः ।

एषु=ईषदादिषु त्रिषु । अकर्मकेभ्यो भावे, सकर्मकेभ्यस्तु कर्मणीति विवेकः ।

१ धातु से घप्रत्यय हो पुलिङ्ग में, सञ्ज्ञा में, प्राय करके ।

२ द्विप्रभृति उपसर्ग रहित जो छादि-धातु उसको ह्रस्व हो घपरे रहते ।

३ अव उपपद रहते तॄ और स्तॄ धातु से करण और अधिकरण अर्थ में घञ्-प्रत्यय हो सञ्ज्ञा में पुलिङ्ग में ।

४ हलन्त धातुओं से घञ् प्रत्यय हो करण और अधिकरण अर्थ में ।

५ दुःख सुखार्थक ईषत् दुष्-सु-ये उपपद रहने कृच्छ्र और अकृच्छ्र अर्थ में धातु से खल् प्रत्यय हो ।

अकृच्छ्रे—ईषत्करः । सुकरः ॥

## [1]आतो युच् । ३ । ३ । १२८ ॥

खलोऽपवादः । ईषत्पानः सोमो भवता । दुष्पानः । सुपानः ।

## [2]अलङ्खल्वोः प्रतिषेधयोः प्राचां क्त्वा । ३ । ४ । १८ ॥

प्रतिषेधाऽर्थयोरलङ्खल्वोरुपपदयोः क्त्वा स्यात् । प्राचांग्रहणं पूजार्थम् । अमैवाऽव्ययेनेति नियमान्नोपपदसमासः । दो दद्धोः । अलं दत्त्वा । घुमास्थेतीत्त्वम् । पीत्वा खलु । अलङ्खल्वोः किम् ? । मा कार्षीत् । प्रतिषेधयोः किम् ? । अलङ्कारः ॥

## [3]समानकर्तृकयोः पूर्वकाले ३ । ४ । २१ ॥

समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । भुक्त्वा व्रजति । द्वित्वमतन्त्रम् । भुक्त्वा पीत्वा व्रजति ॥

**भवतेति** । न लोकेति षष्ठीनिषेधात्कर्त्तरि तृतीया । **आतो युजिति** । आदन्ताद्धातोर्युच्स्यादीषदादिषूपपदेषु । ईषत्पीयते इति **ईषत्पानः** । **प्राचामिति** । 'अलं रुदित्वा' 'अलं रोदनेने'ति रूपद्वयस्य 'वाऽसरूपोऽस्त्रिया'मिति सूत्रेणैव सिद्धे प्राचांग्रहणस्य विकल्पार्थकत्वाऽभावादित्यर्थः ।

**अमैवेति** । अमैव तुल्यविधानं यदुपपदं तदेवाऽव्ययेन सह समस्यते इति तदर्थः । अलङ्खल्वोरमा (णमुला) सह उपपदसञ्ज्ञायास्तुल्यविधानाऽभावान्नात्र क्त्वान्तेन तयोरुपपदसमास इत्यर्थः । **अलं दत्त्वेति** । अपात्रे न देयमित्यर्थः । **अलङ्कार इति** । अलमित्यस्यात्र भूषणमर्थः ।

**भुक्त्वेति** । भोजनव्रजनयोर्धात्वर्थयोरेक एव देवदत्तः कर्त्ता, तत्र पूर्वकालिकक्रिया भोजनमिति तद्वाचकाद्धातोः क्त्वाप्रत्ययः । क्त्वाप्रत्ययश्च—'अव्ययकृतो भावे' इति भावे । **अतन्त्रमिति** । 'समानकर्तृकयो'रित्यत्र द्वित्वमविवक्षित-

१ आदन्त धातु से युच् प्रत्यय हो ईषदादि उपपद रहते ।

२ प्रतिषेधार्थक जो अलं और खलु ये उपपद रहते धातु से क्त्वा प्रत्यय हो ।

३ समानकर्तृक जो धात्वर्थ उनमें जो पूर्वकालिक क्रिया उसमें विद्यमान धातु से क्त्वा प्रत्यय हो ।

[1] न क्त्वा सेट् १ । २ । १८ ॥

सेट् क्त्वा किन्न स्यात् । शयित्वा । सेट् किम् ? । कृत्वा ॥

[2] रलो व्युपधाद्धलादेः संश्च १ । २ । २६ ॥

इवर्णोवर्णोपधाद्धलादे रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः । द्युतित्वा-द्योतित्वा । लिखित्वा-लेखित्वा । व्युपधात्किम् ? । वर्तित्वा । रलः किम् ? । सेवित्वा । हलादेः किम् ? । एषित्वा । सेट् किम् ? । भुक्त्वा ॥

[3] उदितो वा ७ । २ । ५६ ॥

उदितः परस्य क्त्व इड्वा स्यात् । शमित्वा-शान्त्वा । देवित्वा-द्यूत्वा । दधातेर्हिः । हित्वा ॥

[5] जहातेश्च क्त्वि ७ । ४ । ४३ ॥

हित्वा । हाङस्तु हात्वा ॥

[6] समासेऽनञ्पूर्वे क्त्वो ल्यप् ७ । १ । ३७ ॥

मित्यर्थः । तेन बहूना समानकर्तृकाणा क्रियाणा सर्वेऽपि पूर्वकालिकक्रियावृत्ते-र्धातोः क्त्वाप्रत्ययो भवतीत्याशय । **किन्नेति** । तेन शयित्वेत्यत्र 'सार्वधातुकार्ध-धातुकयो'रिति गुणो भवत्येव । **रल इति** । उश्च इश्च वी, वी उपधे यस्यासौ व्युपधः, तस्मात्-व्युपधात् । **शमित्वेति** । 'शमु उपशमे' दिवादि॰ परस्मैपदी । **द्यूत्वेति** । 'च्छ्वोः शूड्'िति वस्योठ् । हित्वा=त्यक्त्वा । 'गच्छती'ति शेष । हात्वा=गत्वा । 'पठती'ति शेषः ।

१ सेट् क्त्वा कित् नहीं हो ।

२ इवर्ण-उवर्ण उपधा में है जिसके ऐसा जो हलादि रलन्त धातु उससे परे जो सेट् क्त्वा और सन् ये विकल्प से कित् हों ।

३ उदित् धातु से परे जो क्त्वा उसको इट् हो विकल्प से ।

४ धा धातु को हि आदेश हो तादि कित् परे रहते ।

५ ओहाक् धातु को हि आदेश हो क्त्वा प्रत्यय परे रहते ।

६ अव्यय है पूर्वपद में जिसके ऐसा जो नञ्भिन्न समास उस समास में क्त्वा के स्थान में ल्यप् आदेश हो ।

अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात् । तुक् । प्रकृत्य । अनञ् किम् ? । अकृत्वा ॥

**आभीक्ष्ण्ये णमुल् च ३ । ४ । २२ ॥**

आभीक्ष्ण्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च ॥

**नित्यवीप्सयोः ८ । १ । ४ ॥**

आभीक्ष्ण्ये द्योत्ये वीप्सायां च पदस्य द्वित्वं स्यात् । आभीक्ष्ण्यं तिङन्तेष्वव्ययसंज्ञककृदन्तेषु च । स्मारं-स्मारं नमति शिवम् । स्मृत्वा-स्मृत्वा । पायं-पायम् । भोजं-भोजम् । श्रावं-श्रावम् ।

**अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ३ । ४ । २७ ॥**

एषु कृञो णमुल् स्यात्सिद्धोऽप्रयोगोऽस्य एवंभूतश्चेत् कृञ् । व्यर्थत्वात्प्रयोगानर्ह इत्यर्थः । अन्यथाकारम् । एवङ्कारम् । कथङ्कारम् । इत्थङ्कारं भुङ्क्ते । सिद्धेति किम् ? । शिरोऽन्यथा कृत्वा भुङ्क्ते ।

**इति कृदन्तप्रक्रिया ।**

तुक्=ह्रस्वस्य पिति कृती'ति सूत्रेण ल्यपि परतस्तुक् । **पूर्वविषये** इति । समानकर्तृकयोर्धात्वर्थयोः पूर्वकालिकक्रियावृत्तेर्धातोर्णमुल्स्यादाभीक्ष्ण्ये=पौनःपुन्ये द्योत्ये इत्यर्थः । निङन्तेष्विति । तिङन्तेषु यथा'–पठ–पठे'त्यादौ । अव्ययसञ्ज्ञकृदन्तेषु-'पीत्वा–पीत्वा' स्मारं स्मार'मित्यादौ । एवञ्च द्वित्वसिद्धिः ।

**अन्यथाकारं भुङ्क्ते**=अन्यथा भुङ्क्ते । अत्र कृञः प्रयोगो व्यर्थः । अर्थे विशेषाऽभावात् ।

*** इति उत्तरकृदन्तम् ***

१ आभीक्ष्ण्य अर्थ द्योत्य हो तो क्त्वा के विषय में णमुल् प्रत्यय हो ।

२ पद को द्वित्व हो आभीक्ष्ण्य और वीप्सा द्योत्य हो तो ।

३ अन्यथा' 'एव' 'कथम्' और 'इत्थम्' ये उपपद हों तो कृञ् धातु से णमुल् प्रत्यय हो । सिद्ध है अप्रयोग जिसका ऐसा कृञ् हो तो । अर्थात् कृञ् का प्रयोग यदि व्यर्थ हो तो ।

# अथ विभक्त्यर्थाः

## प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २ । ३ । ४६ ॥

नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये परिमाणमात्रे सङ्ख्या-मात्रे च प्रथमा स्यात् । प्रातिपदिकार्थमात्रे—उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् । लिङ्गमात्रे । तटः—तटी—तटम् । परिमाणमात्रे-द्रोणो

**प्रातिपदिकार्थेति** । प्रातिपदिकार्थश्च लिङ्गश्च परिमाणश्च वचनश्च-प्रातिपदिकार्थलिङ्गपरिमाणवचनानि । तान्येव—प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रं, तस्मिन्—प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे इति विग्रहः । मयूरव्यंसकादित्वात्समास । **नियतेति** । नियता उपस्थितिर्यस्यासौ नियतोपस्थितिकः । यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थ इत्यर्थः । शक्य इति यावत् । **मात्रेति** । तस्य चात्राऽवधारणमर्थः । **प्रत्येकमिति** । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बद्ध्यते' इति न्यायात् । मात्रशब्देन कर्माद्याधिक्ये प्रथमाया वारणेऽपि लिङ्गमात्राधिक्ये परिमाणमात्राधिक्ये च प्रथमा भवत्येव, लिङ्गपरिमाणग्रहणादित्याशयेनाह—**लिङ्गमात्राद्याधिक्ये इति** । अत्र यद्यपि 'लिङ्गमात्रे' 'परिमाणमात्रे' इत्येवाक्षरार्थस्तथापि प्रातिपदिकार्थप्रतीतिं विना लिङ्गादिप्रतीतेरसम्भवाल्लिङ्गमात्राद्याधिक्ये इत्युक्तम् । **अलिङ्गाः**—उच्चैरादय, **नियतलिङ्गाः**—कृष्णादयश्च 'प्रातिपदिकार्थमात्रे' इत्यस्योदाहरणम् । तत्रहि लिङ्गस्यापि नियतोपस्थितिकत्वात् उच्चैरित्यत्र प्रथमोत्पत्त्या च सुबन्तत्वेन पदत्वाद्रुत्वविसर्गादिसिद्धिः । **लिङ्गेति** । अनियतलिङ्गास्तटादयस्तु 'लिङ्गमात्राद्याधिक्ये' इत्यस्योदाहरणमित्यर्थः । **द्रोण इति** । अत्रहि -द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहि-

१ प्रातिपदिकार्थमात्रमें, लिङ्गमात्र का जहाँ आधिक्य हो वहाँ, और परिमाण मात्र में और सङ्ख्यामात्र में प्रथमा हो ।

ीहिः । वचनं सङ्ख्या । एकः । द्वौ । बहवः ॥

**सम्बोधने च २ । ३ । ४७ ॥**

प्रथमा स्यात् । हे राम ॥ इति प्रथमा ।

**कर्तुरीप्सिततमं कर्म १ । ४ । ४९ ॥**

कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् ॥

**कर्मणि द्वितीया २ । ३ । २ ॥**

अनुक्ते कर्मणि द्वितीया स्यात् । हरिं भजति । अभिहिते तु

रित्यर्थः । सुप्रत्ययार्थे परिमाणे द्रोणरूपप्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणम् । सुप्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः । न चेह 'प्रातिपदिकार्थमात्रे' इत्येव प्रथमाऽस्तु इति वाच्यं, तथा सति परिच्छेद्यपरिच्छेदकभावस्य संसर्गविधया भानाऽयोगात् ।

**वचनमिति** । वाच्यवाचकयोः सङ्ख्यावचनयोरभेदाध्यवसायेन सङ्ख्याया वचनशब्दप्रयोग., तथैव पूर्वाचार्यव्यवहारात् । **एक इति** । इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ सूत्रे वचनग्रहणमिति भावः । **संबोधने चेति** । मात्रग्रहणात्सम्बोधनाधिक्ये प्रथमायाः पूर्वेणाऽप्राप्तावेतद्वचनारम्भः ॥ 'कारके' इत्यधिकृतं । 'कर्तु'रिति च 'क्तस्य च वर्त्तमाने' इति कर्त्तरि षष्ठी । एवञ्च कर्त्रा आप्तुमतिशयेनेष्यमाणं कर्मेत्यर्थलाभ. । कर्त्ता च भज्यादिधातूपात्तभजनादिव्यापाराश्रयः । स च केनाप्तुमिच्छतीति कारणाकाङ्क्षायां स्वविशेषणीभूतेन स्वनिष्ठव्यापारेणेत्यर्थाल्लभ्यते । तदाह—**क्रिययेति** । 'अनभिहिते' इत्यधिकारादाह— **अनुक्ते इति** । **अभिहित**=कृदादिना कर्मार्थकलकारादिना चोक्ते । **सेव्यत**

१ प्रातिपदिकार्थ की अपेक्षा से जहाँ सम्बोधन अर्थ अधिक प्रतीत होता हो वहाँ प्रथमा हो ।

२ कर्तृवृत्ति जो व्यापार, तज्जन्य जो फल, तदाश्रयत्वप्रकारिका जो इच्छा उस इच्छा का उद्देश्यताश्रयीभूत जो अर्थ वह कारकसंज्ञक होता हुवा कर्मसंज्ञक हो ।

३ अनुक्त कर्म में द्वितीया होय ।

कर्मादौ प्रथमा—हरिः सेव्यते। लक्ष्म्या सेवितः॥

**अकथितञ्च १।४।५१॥**

अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्॥

**दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।**
**कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्॥१॥**

गां दोग्धि पयः। बलिं याचते वसुधाम्। [अविनीतं विनयं याचते]। तण्डुलानोदनं पचति। गर्गान् शतं दण्डयति।

इति। अत्र कर्मणि लकारेण कर्मण उक्तत्वात्तत्र प्रथमा।

**सेवित इति**। अत्र हरिरूपकर्मणः क्तेनोक्तत्वात्प्रथमैव।

केनाऽकथितमित्याकाङ्क्षायामाह **अपादानादीति**। अपादानं, सम्प्रदानमधिकरणमित्यादिभिर्विशेषैरित्यर्थः। 'कर्मत्वेन च विवक्षित'मिति शेषः। 'कारक' मित्युक्तेश्च 'ब्राह्मणस्य पुत्रं पृच्छती' त्यत्र न ब्राह्मणस्य कर्मता।

ननु 'नटस्य गाथा शृणोति' 'गृहे धान्यं निक्षिपती'त्यादौ नट-गृहादेरपि कर्मत्वापत्तिरत आह—**दुहिति**। कर्मणा युज्यते इति कर्मयुक्। दुहादीना पूर्वार्द्धोपात्ताना द्वादशाना, तथा नीप्रभृतीना चतुर्णा दुग्धादिरूपमुख्यकर्मणा सह क्रियया सम्बध्यमानं गवादिकारकमेवाऽपादानादिविशेषैरविवक्षितं सत् कर्मसञ्ज्ञकं भवति नान्यदिति परिगणनं कर्त्तव्यमित्यर्थः। **गामिति**। अत्र हि पयःकर्मकं गोसम्बन्धि दोहनमर्थः। पयोऽत्र मुख्यं कर्म, कर्तुरीप्सिततमत्वात्। गौस्तु पयोनिमित्ततामात्रेणोपात्ता, तस्या अपादानत्वेनाऽविवक्षाया कर्मसञ्ज्ञा। **याचत इति**। अत्र प्रार्थनार्थस्य याचेर्वसुधा मुख्यं कर्म, तेन कर्मणा युक्तो बलिर्वस्तुतोऽवधिरपि तत्त्वेनाऽविवक्षितोऽनेन कर्मसञ्ज्ञको भवति। **विनयमिति** अनुनयार्थस्य याचेरविनीतो मुख्यं कर्म, अविनीतं विनयायाऽनुनयतीत्यर्थः। तत्र विनयस्य तादर्थ्याऽविवक्षायामकथितञ्चेत्यनेन कर्मता। **पचतीति**। निर्वर्त्तनार्थस्य पचेरोदनो मुख्यं कर्म। ओदनं निर्वर्त्तयतीत्यर्थः। पक्वा एव तण्डुला ओदनपदवाच्याः। तण्डुलानान्तु करणत्वेनाऽविवक्षायामनेन कर्मता।

१ अपादानादि विशेषों से अविवक्षित जो कारक वह कर्मसंज्ञक हो।

व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देवदत्तं शतं मुष्णाति । ग्राममजां नयति हरति कर्षति वहति वा । **अर्थनिबन्धनेयं संज्ञा** । बलिं भिक्षते वसुधाम् । माणवकं धर्मं भाषते अभिधत्ते वक्तीत्यादि ॥

इति द्वितीया ।

**स्वतन्त्रः कर्ता १ । ४ । ५४ ॥**[1]

क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥

**साधकतमं करणम् १ । ४ । ४२ ॥**[2]

क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात् ॥

---

**दण्डयतीति** । ग्रहणार्थस्य दण्डेः शतं मुख्यं कर्म, गर्गाणां त्वपादनत्वाऽविवक्षायामनेन कर्मसञ्ज्ञा ।

**व्रजमिति** । अत्र गौर्मुख्यं कर्म, व्रजस्य चाऽधिकरणत्वेनाऽविवक्षायां कर्मसञ्ज्ञा । **सुधामिति** । अत्र क्षीरनिधेर्गौणकर्मता, सुधाया मुख्यकर्मता ।

**अर्थेति** । दुह्याद्यर्थकधातुमात्रस्येह ग्रहणमित्यर्थः । 'अहमपीदं चोद्यं चोद्ये' इति तद्राजसूत्रभाष्ये पृच्छिपर्यायस्य चुदेरपि द्विकर्मकत्वदर्शनादिति भावः ।

**स्वातन्त्र्येणेति** । प्रधानीभूतधात्वर्थाश्रयत्वं स्वातन्त्र्यम् । स्थाल्यादीनां वस्तुतः स्वातन्त्र्याऽभावेऽपि वक्त्रा स्वातन्त्र्येण विवक्षणात्स्थाली पचतीत्यादयः प्रयोगाः । **प्रकृष्टेति** । यद्व्यापारानन्तरं क्रियायाःफलनिष्पत्तिस्तत्प्रकृष्टम् । तदुक्तं—

'क्रियायाः फलनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥' इति ।

---

१ क्रिया में स्वातन्त्र्य से विवक्षित जो अर्थ उसकी कर्तृ संज्ञा हो।

२ क्रिया की सिद्धि में प्रकृष्ट (अत्यन्त) उपकारक की करण संज्ञा हो।

**[1] कर्तृकरणयोस्तृतीया २ । ३ । १८ ॥**

अनभिहिते कर्तरि करणे च तृतीया स्यात् । रामेण बाणेन हतो वाली ॥

इति तृतीया ।

**[2] कर्मणा यमभिप्रैति स सम्प्रदानम् १ । ४ । ३२ ॥**

दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञः स्यात् ॥

**[3] चतुर्थी सम्प्रदाने २ । ३ । १३ ॥**

[ सम्प्रदाने चतुर्थी स्यात् ] । विप्राय गां ददाति ॥

**[4] नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च २ । ३ । १६ ॥**

एभिर्योगे चतुर्थी । हरये नमः । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि ॥ ॐ इति चतुर्थी । ॐ

**[5] ध्रुवमपायेऽपादानम् १ । ४ । २४ ॥**

हत इति । अत्र रामः कर्ता, बाणः करणम् । दानस्य=दाधात्वर्थस्य । इदमुपलक्षणं क्रियामात्रस्य । एवञ्च यत्किञ्चित्क्रियाकर्मणा कर्ता यमभिप्रैति= सम्बध्नाति, सम्बन्धुमीप्सति वा—तत्कारकं सम्प्रदानमित्यर्थः । तेन 'चैत्रो मैत्राय हितमुपदिशती'त्यादौ सम्प्रदानसञ्ज्ञा सिध्यति ।

१ अनुक्त कर्ता में तृतीया विभक्ति हो ।

२ कर्त्ता दाधातु के कर्म से जिसके साथ सम्बन्ध करने की इच्छा करे वह सम्प्रदानसञ्ज्ञक हो ।

३ सम्प्रदान में चतुर्थी विभक्ति हो ।

४ नमः स्वस्ति स्वाहा स्वधा अलम् और वषट् इनके योग में चतुर्थी विभक्ति हो ।

५ अपाय (विश्लेष) की सिद्धि में जो ध्रुव ( अवधिभूत ) कारक उसकी अपादानसंज्ञा हो ।

१८

अपायो—विश्लेषस्तस्मिन्साध्ये यद्ध्रुवम्=अवधिभूतं कारकं तदपादानं स्यात् ॥

[1]अपादाने पञ्चमी २ । ३ । २८ ॥

[ अपादाने पञ्चमी स्यात् ] । ग्रामादायाति । धावतोऽश्वात्पततीत्यादि ॥ इति पञ्चमी ।

[2]षष्ठी शेषे २ । ३ । ५० ॥

कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः सम्बन्धः शेषस्तत्र षष्ठी । राज्ञः पुरुषः । कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधो दकस्योपस्कुरुते । भजे शम्भोश्चरणयोः ॥ इति षष्ठी ।

[3]आधारोऽधिकरणम् । १ । ४ । ४५ ॥

अपायपदार्थमाह **विश्लेष इति** । ध्रुवं=स्थिरम् । एवञ्च प्रकृतधात्वर्थानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वं ध्रुवत्वमिति लभ्यते । ध्रुवञ्चाऽर्थादवधिरेवेत्यत आह—**अवधिभूतमिति** । तदेवं-प्रकृतधात्वर्थीभूतव्यापारानाश्रयत्वे सति तज्जन्यव्यापाराश्रयत्वमपादानत्वमिति फलितम् ।

उक्तादन्यः शेषः । कर्मादिप्रातिपदिकार्थपर्यन्ताश्च पूर्वमुक्ताः, तेषु द्वितीयादीनां विधानादतो व्याचष्टे **कारकेति** ।

**कर्मादीति** । यथा नीलादिविशेषाऽविवक्षायां रूपवानिति प्रयुज्यते, विशेषविवक्षायान्तु 'नीलः' 'पीतः' इति प्रयुज्यते, तथा कर्मादीनामपि विशेषतोऽविवक्षायां सम्बन्धमात्रविवक्षाया षष्ठीत्यपि बोध्यम् । सत्पुरुषसम्बन्धि गमनमित्यर्थः । एवमग्रेऽपि । **एधः**—कर्तृ, **दकस्य**=उदकस्य । उदकपर्यायो दकशब्दोऽप्यस्ति ।

१ अपादान में पञ्चमी विभक्ति हो ।

२ कारक और प्रातिपदिकार्थ से व्यतिरिक्त जो स्वस्वामीभाव जन्यजनकभाव आदि सम्बन्ध वह शेष कहलाता है, उसमें षष्ठी विभक्ति हो ।

३ कर्तृकर्मद्वारा तन्निष्ठ क्रिया का जो आधार उसकी कारकसञ्ज्ञा होकर अधिकरण सञ्ज्ञा हो ।

कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणं स्यात् ॥

**[1] सप्तम्यधिकरणे च २ । ३ । ३६ ॥**

अधिकरणे सप्तमी स्यात्, चकाराद्दूरान्तिकार्थेभ्यः । औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा । कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छास्ति । सर्वस्मिन्नात्मास्ति । वनस्य दूरे अन्तिके वा ॥ इति सप्तमी । इति विभक्त्यर्थाः ।



# अथ समासाः

## तत्रादौ केवलसमासः ।

समासः पञ्चधा । तत्र समसनं समासः । स च विशेष-

आध्रियतेऽस्मिन्नित्याधारः । सचाऽऽधारः कस्येत्याकाङ्क्षाया- कारकाधिकारात्क्रियाया इति लभ्यते । अत्र हि—साक्षात्क्रियाधारयोः कर्तृकर्मसञ्ज्ञाभ्यां बाधात्परम्परया क्रियाधारस्याऽधिकरणसञ्ज्ञा भवति । तद्याचष्टे—**कर्तृकर्मेति।** प्रकृते 'कटे आस्ते' इत्यादावासनक्रियायाः साक्षादाधारो देवदत्तादिः, तद्द्वाराऽऽसनक्रियाधारस्य कटस्याधिकरणसञ्ज्ञा । 'स्थाल्यां पचती' त्यत्र विक्लित्तिरूपफलाधारौदनद्वारा परम्परया विक्लित्तिरूपफलाश्रयतया स्थाल्या अधिकरणसंज्ञा । 'कटे आस्ते' इत्यौपश्लेषिकाधारोदाहरणम् । उप समीपे श्लेषः—सम्बन्धस्तत्कृत औपश्लेषिक इत्यर्थः ।

वैषयिकाधारमुदाहरति **मोक्ष इति** । **अभिव्यापकाधारस्य** 'सर्वस्मिन्नात्माऽस्ती' त्युदाहरणम् ।

*** इति विभक्त्यर्थाः । ***

समसनं **समासः**=सङ्क्षेपः । एकार्थीभावेन स्वार्थबोधकत्वञ्च तत्त्वम् । **तत्र** पञ्चविधेषु समासेषु । विशेषसञ्ज्ञाभि =अव्ययीभाव—तत्पुरुषादिसञ्ज्ञाभिः, विनिर्मुक्त =रहित', **केवलसमासः** =सामान्यसमास । स च सुप्सुपेत्यादि-

[1] अधिकरण अर्थ में सप्तमी हो, चकारात् दूरार्थ और अन्तिकार्थ से भी हो ।

संज्ञाविनिर्मुक्तः **केवलसमासः** प्रथमः ॥ १ ॥ प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावो द्वितीयः ॥ २ ॥ प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्तृतीयः ॥ तत्पुरुषभेदः **कर्मधारयः** । कर्मधारयभेदो **द्विगुः** ॥ ३ ॥ प्रायेणान्यपदार्थप्रधानो बहुव्रीहिश्चतुर्थः ॥ ४ ॥ प्रायेणोभयपदार्थप्रधानो द्वन्द्वः पञ्चमः ॥ ५ ॥

**समर्थः पदविधिः २ । १ । १ ॥**[1]

पदसम्बन्धी यो विधिः स समर्थाश्रितो बोध्यः ॥

**प्राक्कडारात्समासः २ । १ । ३ ॥**[2]

'कडाराः कर्मधारये' इत्यतः प्राक् 'समास' इत्यधिक्रियते ॥

**सह सुपा २ । १ । ४ ॥**[3]

सुप् सुपा सह वा समस्यते । समासत्वात्प्रातिपदिकत्वेन

विहितः । पूर्वपदार्थः अव्यादिपदार्थः प्रधानं यत्रेति विग्रहः । 'अधिहरी'-त्यादावव्ययीभावे पूर्वपदार्थस्य प्राधान्यं स्फुटमेव । 'उन्मत्तगङ्ग'मित्यादौ पूर्वपदार्थप्राधान्याभावादुक्तं **प्रायेणेति** । 'कृष्णश्रित'इत्यादौ तत्पुरुषे पूर्वपदार्थप्राधान्याव्यभिचारेण प्रायपदोपादानम् । यथा नीलश्च तदुत्पलश्च नीलोत्पलम् । **कर्मधारयभेदेति** । संख्यापूर्वो हि द्विगु । यथा पञ्चमूली । बहुव्रीहिर्यथा चित्रगुरिति । द्वित्रा इत्यादौ व्यभिचारात्प्रायेणेत्युक्तम् । द्वन्द्वो यथा रामकृष्णाविति । 'दन्तोष्ठ' मिति द्वन्द्व उभयपदार्थप्राधान्याऽभावात्प्रायपदोपादानम् ।

पदमुद्दिश्य विधीयमानो विधिः **पदविधिः** । सामर्थ्यञ्चेह एकार्थीभावलक्षणं, तच्च–पृथगर्थानां पदानां विशिष्टैकार्थत्वरूपम् । यथा राजपुरुष-इत्यादौ ।

१ पद सम्बन्धी जो विधि सो समर्थाश्रित जानना ।

२ "कडाराः कर्मधारये" इस सूत्र से पूर्व पूर्व समास का अधिकार है ।

३ सुवन्त सुवन्त के साथ समास को प्राप्त हो विकल्प करके ।

सुपो लुक्। परार्थाभिधानं वृत्तिः। कृत्तद्धितसमासैकशेषसनाद्यन्त-धातुरूपाः पञ्च वृत्तयः। वृत्त्यर्थाऽवबोधकं वाक्यं विग्रहः। स च लौकिकोऽलौकिकश्चेति द्विधा। तत्र पूर्वं भूत इति लौकिकः। पूर्व अम् भूत सु इत्यलौकिकः। भूतपूर्वः। 'भूतपूर्वे चर'डिति निर्देशात्पूर्वनिपातः। [१]इवेन समासो विभक्त्यलोपश्च। वागर्थौ इव वागर्थाविव ॥

इति केवलसमासः ॥ १ ॥

## अथाव्ययीभावसमासः

[२]अव्ययीभावः २। १। ५॥

अधिकारोऽयं प्राक् तत्पुरुषात् ॥

**अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्य-र्थाभावा-ऽत्ययाऽसम्प्रति-शब्दप्रादुर्भाव-पश्चा-द्यथा-**

**सुपो लुक्**=सुपो धातुप्रातिपदिकयो'रिति सुपो लुक्। **परार्थेति**। परस्य शब्दस्य योऽर्थस्तस्य शब्दान्तरेण यत्राऽभिधानं सा वृत्तिरित्यर्थः। यथा 'राजपुरुष' इत्यत्र राजशब्देन वाक्यावस्थायामनुक्तः पुरुषशब्दार्थोऽभिधीयते इति भवति सा वृत्तिः। अन्ये तु प्रत्ययार्थान्तर्भावेन परपदार्थान्तर्भावेन वा यो विशिष्टोऽर्थः स परार्थः, सोऽभिधीयते येन तत्परार्थाभिधानमित्यर्थमाहुः। **वृत्त्यर्थेति**। वृत्त्यर्थविषयकबोधजनकमित्यर्थः। लोकेऽर्थबोधनेच्छया प्रयुज्यमानो लौकिकः। लोकेऽर्थबोधनेच्छयाऽप्रयुज्यमानः शास्त्रप्रक्रियामात्रोपयोगी **अलौकिकः**। **पूर्वनिपातः**=भूतशब्दस्य पूर्वनिपातः।

* इति केवलसमासः *

१ इव के साथ समास हो और विभक्ति का अलोप हो।

२ यह अधिकार सूत्र है।

ऽऽनुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-
साकल्या-ऽन्तवचनेषु २ । १ । ६ ॥

[1]विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह नित्यं समस्यते सोऽव्ययीभावः । प्रायेणाऽविग्रहो नित्यसमासः, प्रायेणाऽस्वपद-विग्रहो वा । विभक्तौ,–'हरि ङि अधि' इति स्थिते ॥

**[2]प्रथमानिर्दिष्टं समास उपसर्जनम् १ । २ । ४३ ॥**

समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात् ॥

**[3]उपसर्जनं पूर्वम् २ । २ । ३० ॥**

समासे उपसर्जनं प्राक्प्रयोज्यम् । इत्यधेः प्राक् प्रयोगः। सुपो लुक् । एकदेशविकृतस्याऽनन्यत्वात्प्रातिपदिकसंज्ञायां स्वाद्युत्पत्तिः । 'अव्ययीभावश्चे'त्यव्ययत्वात्सुपो लुक् । अधिहरि ॥

**अव्ययीभाव इति** । अत्र अव्ययमिति योगो विभज्यते, अव्ययं समर्थेन सह समस्यते सोऽव्ययीभाव इति च तदर्थः । अपदिशमित्युदाहरणम् । दिशयोर्मध्ये इति च विग्रहः । **अविग्रहः**=लौकिकविग्रहरहितः । समस्यमानयावत्पदाऽघटित इत्यर्थः । **'विभक्तौ'**–इत्यस्य 'उदाहरण'मिति शेषः। 'अधी'त्यस्य च विभक्त्यर्थेऽधिकरणे वर्त्तमानतया हरिशब्देन समासः ।

**समासशास्त्र इति**। यथा–प्रकृते समासशास्त्रम्–'अव्ययं विभक्तौ'ति, तत्र प्रथमानिर्दिष्टम्–'अव्यय'मिति–तदुपसर्जनसञ्ज्ञमित्यधीत्यस्योपसर्जनसञ्ज्ञा भवति ।

**प्राक् प्रयोगः**–तस्य समाससञ्ज्ञाविधायकशास्त्रघटकप्रथमान्तपदजन्यबोधविषयतयोपसर्जनत्वादुपसर्जनं पूर्वमिति शास्त्रेण हरिशब्दात्प्राक् प्रयोगः ।

१ विभक्त्यादि अर्थ में वर्त्तमान जो अव्यय सो सुबन्त के साथ नित्यसमास को प्राप्त हो और वह समास अव्ययीभावसंज्ञक हो ।

२ समास शास्त्र में जो प्रथमा निर्दिष्ट उसकी उपसर्जन संज्ञा हो ।

३ समास में उपसर्जन का पूर्वनिपात हो ।

**अव्ययीभावश्च[1] २ । ४ । १८ ॥**

अयं नपुंसकं स्यात् ॥

**नाऽव्ययीभावादतोऽम्त्वपञ्चम्याः[2] २ । ४ । ८३ ॥**

अदन्तादव्ययीभावात्सुपो न लुक्, तस्य पञ्चमीं विना अमादेशश्च स्यात् ॥ गाः पातीति गोपास्तस्मिन्नित्यधिगोपम् ॥

**तृतीयासप्तम्योर्बहुलम्[3] २ । ४ । ८४ ॥**

अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् । अधिगोपम्, अधिगोपेन, अधिगोपे वा । कृष्णस्य समीपम् उपकृष्णम् । मद्राणां समृद्धिः सुमद्रम् । यवनानां व्यृद्धिर्दुर्यवनम् । मक्षिकाणामभावो निर्मक्षिकम् । हिमस्यात्ययोऽतिहिमम् । निद्रा सम्प्रति न युज्यत इत्यतिनिद्रम् । हरिशब्दस्य प्रकाश इतिहरि । विष्णोः पश्चादनुविष्णु । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः ।

कृत्तद्धितसमासाश्चेति प्रातिपदिकसञ्ज्ञायामित्यर्थः । **तस्मिन्**=गोपि । अधिगोपम्, अधिगोपेन । अधिगोपम्, अधिगोप इति रूपाणि ।

**उपकृष्णेति** । कृष्ण ङस् उपेत्यलौकिकविग्रहः । 'मद्र आम्–सु' इत्यलौकिकविग्रहः । 'यवन आम् दुर्' इत्यलौकिकविग्रहः । 'मक्षिका आम् निर्' इत्यलौकिकं वाक्यम् । 'हिम ङस् अति' इत्यलौकिकं वाक्यम् । 'निद्रा ङस् अति' इत्यलौकिकं वाक्यम् । 'हरि ङस् इति' इत्यलौकिकं वाक्यम् ।

'विष्णु ङस् अनु' । 'रूप–ङस्–अनु' । 'अर्थ–अम् प्रति' । 'शक्ति ङस

१ अव्ययीभावसमास नपुंसक हो ।

२ अदन्त अव्ययीभाव समास से परे सुप् का लुक् नहीं हो, किन्तु उसको अमादेश हो, पञ्चमी विभक्ति को छोडकर ।

३ अदन्त अव्ययीभाव से परे तृतीया और सप्तमी को बहुलता करके अम् भाव हो ।

रूपस्य योग्यमनुरूपम् । अर्थमर्थं प्रति प्रत्यर्थम् । शक्तिमनतिक्रम्य यथाशक्ति ॥

[1]अव्ययीभावे चाऽकाले ६ । ३ । ८१ ॥

सहस्य सः स्यादव्ययीभावे न तु काले । हरेः सादृश्यं सहरि । ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् । चक्रेण युगपत् सचक्रम् । सदृशः सख्या ससखि । क्षत्राणां सम्पत्तिः सक्षत्रम् । तृणमप्यपरित्यज्य सतृणमत्ति । अग्निग्रन्थपर्यन्तमधीते साऽग्नि ॥

[2]नदीभिश्च २ । १ । २० ॥

नदीभिः सह संख्या समस्यते । *समाहारे चायमिष्यते । पञ्चगङ्गम् । द्वियमुनम् ॥

[3]तद्धिताः ४ । १ । ७६ ॥

आ पञ्चमसमाप्तेरधिकारोऽयम् ॥

[4]अव्ययीभावे शरत्प्रभृतिभ्यः ५ । ४ । १०७ ॥

शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे । शरदः समीप-

---

यथा' इत्यलौकिकं वाक्यम् ।

'हरि–टा–सह' । 'ज्येष्ठ ङस् अनु' । 'चक्र टा सह' । 'सखि टा सह' । क्षत्र ङस् सह' । तृण टा सहेत्यलौकिकं यथायथं बोध्यम् । अग्नि टा सहेत्यलौकिकम् ।

अयं = नदीभिश्चेति समासः । पञ्चाना गङ्गानां समाहार. पञ्चगङ्गम् । द्वयोर्यमुनयोः समाहार इति विग्रहः । 'पञ्चन् जस् गङ्गा जस्' इति 'द्वि–औ

१ सह को स आदेश हो अव्ययीभाव में । काल में नहीं हो ।

२ नदीवाचक समर्थ सुवन्त के साथ संख्या वाचक समास को प्राप्त हो ।

३ पञ्चमाध्याय की समाप्ति पर्यन्त इसका अधिकार है ।

४ अव्ययीभाव में शरदादिगणपठित शब्दों से समासान्त टच् प्रत्यय हो ।

मुपशरदम्। प्रतिविपाशम्। ॐजरा०य। जरश्च। उपजरसमित्यादि॥

[1]अनश्च ५। ४। १०८॥

अन्नन्तादव्ययीभावाट्टच् स्यात्॥

[2]नस्तद्धिते ६। ४। १४४॥

नान्तस्य भस्य टेर्लोपस्तद्धिते। उपराजम्। अध्यात्मम्

[3]नपुंसकादन्यतरस्याम् ५। ४। १०९॥

अन्नन्तं यत् क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात्। उपचर्मम्। उपचर्म॥

[4]झयः ५। ४। १११॥

झयन्तादव्ययीभावाट्टज्वा स्यात्। उपसमिधम्। उपसमित्॥

इत्यव्ययीभावः॥ २॥

पमुना आ' इति चाऽलौकिकविग्रहः। 'शरद् अस् उपे'त्यलौकिकं वाक्यम्। सामीप्येऽव्ययीभावः। विपाशं विपाशं प्रतीति प्रतिविपाशमित्यत्र वीप्सायामव्ययीभावः। 'विपाश्-अम्-प्रति'इत्यलौकिकं वाक्यम्। **विपाट्**-नदीविशेषः। (व्यासनदी)। जरसः समीपम्-उपजरसम्। एवं-उपराजम्' 'उपसमिध'मित्यादि बोध्यम्। 'आत्मनी'त्यध्यात्मम्। विभक्त्यर्थेऽव्ययीभावः।

* इत्यव्ययीभावसमासः *

१ अनन्त अव्ययीभाव से टच् प्रत्यय हो।

२ नान्त भसंज्ञक की टि का लोप हो तद्धित परे रहते।

३ अन्नन्त जो क्लीव, तदन्त जो अव्ययीभाव, उससे टच् हो विकल्प करके।

४ झयन्त अव्ययीभाव से समासान्त टच् विकल्प से हो।

# अथ तत्पुरुषः

**तत्पुरुषः २ । १ । २२ ॥**[1]

अधिकारोऽयं प्राग्बहुव्रीहेः ॥

**द्विगुश्च २ । १ । २३ ॥**[2]

द्विगुरपि तत्पुरुषसंज्ञकः स्यात् ॥

**द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २ । १ । २४ ॥**[3]

द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते, स च तत्पुरुषः । कृष्णं श्रितः—कृष्णश्रित इत्यादि ॥

**तृतीया तत्कृतार्थेन गुणवचनेन २ । १ । ३० ॥**[4]

तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनाऽर्थेन च सह वा प्राग्वत् । शङ्कुलया खण्डः शङ्कुलाखण्डः । धान्येनाऽर्थो धान्यार्थः । तत्कृतेति किम् ? । अक्ष्णा काणः ॥

**कर्तृकरणे कृता बहुलम् २ । १ । ३२ ॥**[5]

**प्रागिति** । 'शेषो बहुव्रीहि'रित्यतः प्रागित्यर्थः । तत्कृतेति लुप्ततृतीयाकम् । तत्पदेन द्वितीयान्तार्थो गृह्यते । अत्र च वाक्यद्वयम् । 'तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेन सह वा समस्यते' इत्येकं वाक्यम् । तृतीयान्तमर्थशब्देन सह समस्यते' इत्यपरम् ।

---

१ 'शेषो बहुव्रीहिः' इसके पूर्व तक तत्पुरुष का अधिकार है ।

२ द्विगु की भी तत्पुरुष संज्ञा हो ।

३ द्वितीयान्त जो है वह श्रितादिप्रकृतिकसुबन्तसमर्थ के साथ विकल्प करके समास को प्राप्त हो । और वह समास तत्पुरुषसंज्ञक हो ।

४ तृतीयान्त जो है सो तृतीयान्तार्थकृत जो गुणवचन उसके साथ और अर्थ शब्द के साथ समास को प्राप्त हो ।

५ कर्त्ता में व करण में जो तृतीया वह कृदन्त के साथ बहुलता से समास को प्राप्त हो ।

कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् ॥ हरिणा त्रातो हरित्रातः । नखैर्भिन्नो नखभिन्नः । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् । नखनिर्भिन्नः ॥

**चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २ । १ । ३६ ॥**

चतुर्थ्यन्तार्थाय यद्वाचिना, अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत् । यूपाय दारु यूपदारु । *तदर्थेन प्रकृतिविकृतिभाव एवेष्टः । तेनेह न—रन्धनाय स्थाली । *अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् । द्विजार्थः सूपः । द्विजार्था

**प्राग्वत्**=समस्यते स तत्पुरुषः । हरिणेति कर्त्तरि तृतीया । नखैरिति च करणे तृतीया । ननु प्रत्ययग्रहणपरिभाषया कृदन्ततदादेरेव ग्रहणाद्धिश्रादिपदैर्नखादिशब्दाना समासेऽपि निर्भिन्नादिशब्दैः सह समासो न स्यादत आह **कृद्ग्रहणे इति** । एवञ्च 'नि'रित्युपसर्गस्य गतिश्चेति गतित्वेन तत्पूर्वस्यापि 'निर्भिन्न' इत्यस्य कृदन्तत्वेन ग्रहणात्समाससिद्धिः । 'तदर्थे'ति लुप्ततृतीयान्तम् । यूपदार्वित्यत्र—चतुर्थ्यन्तं यूपायेति तदर्थो यज्ञस्तम्भरूपः, तदर्थं यत्-(दारु) काष्ठं, तद्वाचकः शब्दो दारुशब्दः, तेन सह चतुर्थ्यन्तस्य यूपशब्दस्य समास इत्याशय । **तदर्थेति** । तदर्थपदेन च प्रकृतिविकृतिभाव एवेह ग्राह्य', यथा दारुयूपयोरस्ति प्रकृतिविकृतिभावः, दारुणा हि प्रकृतिभूतेन यूपो निर्मीयते । यत्र तु प्रकृतिविकृतिभावो नास्ति तत्र नाऽनेन समासः । यथा—रन्धनार्थं स्थालीति । अत्र हि रन्धनस्थाल्योर्न प्रकृतिविकृतिभावः ।

**विशेष्यलिङ्गता**=विशेष्यलिङ्गानुसारेणैव लिङ्गमत्र भवति । यथा द्विजार्था यवागूरित्यत्र यवागूशब्दस्य विशेष्यस्य स्त्रीलिङ्गतया द्विजार्थेत्यत्रापि स्त्रीलि-

१ चतुर्थ्यन्तार्थ के वास्ते जो हैं तद्वाचक के साथ, और अर्थादि के साथ चतुर्थ्यन्त का समास हो विकल्प से और वह समास तत्पुरुषसञ्ज्ञक हो ।

२ तदर्थ करके प्रकृतिविकृतिभाव ही लिया जाता है ।

३ अर्थ के साथ नित्य समास हो और विशेष्यलिङ्गता भी हो ।

यवागूः । द्विजार्थं पयः । भूतबलिः । गोहितम् । गोसुखम् । गोरक्षितम् ॥

**[1] पञ्चमी भयेन २ । १ । ३७ ॥**

चोराद्भयं चोरभयम् ॥

**[2] स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन २ । १ । ३९ ॥**

**[3] पञ्चम्याः स्तोकादिभ्यः ६ । ३ । २ ।**

अलुगुत्तरपदे । स्तोकान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । कृच्छ्रादागतः ॥

**[4] षष्ठी २ । २ । ८ ॥**

[ षष्ठयन्तं ] सुबन्तेन प्राग्वत् । राजपुरुषः ॥

**[5] पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २ । २ । १ ॥**

ङ्गतेति भावः । अर्थशब्दस्य नित्यपुंस्त्वात 'परवल्लिङ्ग'मिति सूत्रादत्र नित्यपुंलिङ्गता प्राप्ता, तद्बाधनाय च विशेष्यलिङ्गतोक्तिः ।

भूताय बलिः—भूतबलिः । गवे हित गोहितम् । **पञ्चमीति** । पञ्चम्यन्तं भयप्रकृतिकेन सुबन्तेन सह वा समस्यते स तत्पुरुषः । **स्तोकेति** । स्तोकाद्यर्थप्रकृतिकपञ्चम्यन्तं कृच्छ्रप्रकृतिकपञ्चम्यन्त च क्तान्तप्रकृतिकेन सुबन्तेन सह वा समस्यते स तत्पुरुष इत्यर्थः । **पञ्चम्या इति** । एभ्यः पञ्चम्या अलुगुत्तरपदे इत्यर्थः ।

**षष्ठीति** । षष्ठयन्त, सुबन्तेन सह वा समस्यते स तत्पुरुष इत्यर्थः ।

**पूर्वापरेति** । एकदेशिशब्दोऽवयविवाची । एकदेशशब्दस्याऽवयवे रूढ-

१ पञ्चम्यन्त जो है सो भयप्रकृतिक सुबन्त समर्थ के साथ समास को प्राप्त हो विकल्प करके ।

२ स्तोकाद्यर्थप्रकृतिकपञ्चम्यन्त और कृच्छ्रप्रकृतिकपञ्चम्यन्त वह क्तान्तप्रकृतिक सुबन्त के साथ समास को प्राप्त हो विकल्प करके और वह समास तत्पुरुष संज्ञक हो ।

३ स्तोकादिकों से परे जो पञ्चमी उसका अलुक् हो उत्तरपद परे रहते ।

४ षष्ठयन्त जो प्रातिपदिक वह सुबन्त के साथ समास को प्राप्त हो विकल्पसे ।

५ अवयवी के साथ पूर्वादि का समास हो वह अवयवी यदि एकत्व संख्या विशिष्ट हो तो ।

अवयविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी। षष्ठीसमासापवादः। पूर्वं कायस्य पूर्वकायः। अपरकायः। एकाधिकरणे किम्?। पूर्वश्छात्राणाम्॥

अर्धं नपुंसकम्[1] २।२।२॥

समांशवाच्यर्धशब्दो नित्यं क्लीबे, स प्राग्वत्। अर्धं पिप्पल्याः अर्धपिप्पली॥

सप्तमी शौण्डैः[2] २।१।४०॥

सप्तम्यन्तं शौण्डादिभिः प्राग्वत्। अक्षेषु शौण्डः अक्षशौण्ड इत्यादि। द्वितीया-तृतीयेत्यादियोगविभागादन्यत्रापि तृतीयादिविभक्तीनां प्रयोगवशात्समासो ज्ञेयः॥

दिक्संख्ये संज्ञायाम्[3] २।१।५०॥

'संज्ञायामेवे'ति नियमार्थं सूत्रम्। पूर्वेषुकामशमी। सप्तर्षयः।

---

त्वात्। एकाधिकरणे इत्यस्यार्थमाह—एकत्वेति। अवयविनि एकाधिकरणे=एकत्वसङ्ख्याविशिष्टे सतीत्यर्थः। नन्विदं सूत्रं व्यर्थं, कर्मधारयेणैव सिद्धेः, ऊर्ध्वकायवदत आह—षष्ठीसमासापवाद इति। एवञ्च 'कायपूर्वं' इत्यादिरूपनिरासाय किलेदं सूत्रमित्याशयः। नित्यमिति। 'पुंस्यर्धोऽर्धं समेऽशके' इत्यमरोक्तेः। 'अर्धपिप्पली'त्यत्र परवल्लिङ्गत्वात्स्त्रीत्वम्।

शौण्डः=कुशलः। 'द्वितीयाश्रिते'त्यत्र द्वितीयेति, तृतीया तत्कृते'त्यत्र तृतीयेति, 'चतुर्थी तदर्थे'त्यादौ च चतुर्थीत्यादीना योगविभागादित्यर्थः। अन्यत्र=सूत्रोक्तातिरिक्तस्थलेऽपि।

---

१ नपुंसक लिङ्ग में नित्य वर्त्तमान जो समांशवाची अर्धशब्द वह अवयविवाचक समर्थ सुबन्त के साथ समास को प्राप्त हो विकल्प करके।

२ सप्तम्यन्त जो है सो शौण्डादिप्रकृतिक समर्थ सुबन्त के साथ समासको प्राप्त हो।

३ दिग्वाचक और सख्यावाचक जो शब्द उनका यदि तत्पुरुष समास हो तो संज्ञा में ही हो।

तेनेह न—उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ॥

[1] तद्धितार्थोत्तरपदसमाहारे च २ । १ । ५१ ॥

तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्सङ्ख्ये प्राग्वत् । पूर्वस्यां शालायां भवः । पूर्वा शाला इति समासे जाते—*सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः ।

[2] दिक्पूर्वपदादसंज्ञायां ञः ४ । २ । १०७ ॥

अस्माद्भवाद्यर्थे ञः स्यादसंज्ञायाम् ॥

[3] तद्धितेष्वचामादेः ७ । २ । ११७ ॥

ञिति णिति च तद्धितेष्वचामादेरचो वृद्धिः स्यात् । यस्येति च । पौर्वशालः ॥ पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ *द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् ॥

अत्र हि सञ्ज्ञाया अभावान्न समासः । वृत्तिमात्रे=तद्धितवृत्तौ समासवृत्तौ च । यद्यपि 'स्त्रियाः पुंव'दिति सूत्रेणापीदं रूपं सिध्यति, तथापि प्रतिपदोक्तत्वादिह तदुपन्यासः ।

**आदेरच** इति । आदिरच् प्रकृते पकारोत्तरोकारः ।

पूर्व ङि—शाला ङि—इत्यत्र भवरूपतद्धितार्थस्य विषयतया—'तद्धितार्थे'ति समासे 'पूर्व-शाल' इति जाते—'दिक्पूर्वपदा'दिति ञप्रत्यये आदिवृद्धौ यस्येति लोपे तद्धितान्ततया प्रातिपदिकत्वे स्वाद्युत्पत्तौ रुत्वे विसर्गे च 'पौर्वशाल' इति सिध्यति । अत्र अवान्तरतत्पुरुषस्य महाविभाषया विकल्पे प्राप्ते

१ तद्धितार्थ के विषय में, उत्तरपद परे रहते, और समाहार यदि वाच्य हो तो दिग्वाचक और सख्या वाचक जो है वे सुबन्त समर्थ के साथ समास को प्राप्त हों।

२ दिक्पूर्वपद में है जिसके ऐसा जो समास उससे भवाद्यर्थ में ञ प्रत्यय हो असंज्ञा में ।

३ ञित् णित् तद्धित परे रहते अचों के आदि अच् को वृद्धि हो ।

५ उत्तरपद परे रहते द्वन्द्व और तत्पुरुष समास नित्य हों ।

**गोरतद्धितलुकि ५ । ४ । ९२ ॥**

गोऽन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो, न तु तद्धितलुकि। पञ्चगवधनः ।

**तत्पुरुषः समानाधिकरणः कर्मधारयः १ । २ । ४२ ॥**

**संख्यापूर्वो द्विगुः २ । १ । ५२ ॥**

'तद्धितार्थे'त्यत्रोक्तस्त्रिविधः सङ्ख्यापूर्वो द्विगुसंज्ञः स्यात् ॥

**द्विगुरेकवचनम् २ । ४ । १ ॥**

द्विग्वर्थः समाहार एकवत्स्यात् ॥

**स नपुंसकम् २ । ४ । १७ ॥**

समाहारे द्विगुर्द्वन्द्वश्च नपुसकं स्यात् । पञ्चानां गवां समाहारः—पञ्चगवम् ॥

उत्तरपदे परतो द्वन्द्वस्य तत्पुरुषस्य च विकल्पो न भवतीत्यर्थक वचनमेतत्। विकल्पे तु तत्पुरुषप्रयुक्तटजभावे 'पञ्चगोधन' इत्यनिष्टं रूपमपि स्यादित्याशयः ।

तत्पुरुष इति । समानाधिकरणशब्दोऽत्रार्श आद्यजन्तः । समानाधिकरणपदकस्तत्पुरुषः कर्मधारयसञ्ज्ञको भवतीत्यर्थः । समानविभक्तिकतया च समानाधिकरण्यम् ।

पञ्चगवमित्यत्र तद्धितार्थेति समासः । विशेषणं=भेदकं । यथा नीलादि-

१ गोशब्दान्त तत्पुरुष से समासान्त टच् प्रत्यय हो, तद्धित का यदि लुक् न हुवा हो तो ।

२ संख्यापूर्वक जो तत्पुरुष उसकी द्विगु सज्ञा हो ।

३ समानाधिकरणपदक जो तत्पुरुष उसकी कर्मधारयसञ्ज्ञा हो ।

४ द्विग्वर्थ जो समाहार वह एकवत् हो ।

५ समाहार में जो द्विगु और द्वन्द्व वह नपुंमक हो ।

**विशेषणं[1] विशेष्येण बहुलम् २ । १ । ५७ ॥**

भेदकं समानाधिकरणेन भेद्येन बहुलं प्राग्वत् । नीलमुत्पलं नीलोत्पलम् । बहुलग्रहणात्क्वचिन्नित्यम्—कृष्णसर्पः । क्वचिन्न—रामो जामदग्न्यः ॥

**उपमानानि[2] सामान्यवचनैः २ । १ । ५५ ॥**

घन इव श्यामो घनश्यामः । *शाकपार्थिवादीनां[3] सिद्धये उत्तरपदलोपस्योपसंख्यानम् । शाकप्रियः पार्थिवः—शाकपार्थिवः । देवपूजको ब्राह्मणो देवब्राह्मणः ॥

**नञ्[4] २ । २ । ६ ॥**

नञ् सुपा सह समस्यते ॥

**नलोपो[5] नञः ६ । ३ । ७३ ॥**

नञो नस्य लोप उत्तरपदे । न ब्राह्मणः—अब्राह्मणः ॥

**तस्मान्नुडचि[6] ६ । ३ । ७४ ॥**

पदम् । विशेषणं=भेद्यम् । यथा—उत्पलादिकम् । समानाधिकरणेन=समानविभक्तिकेन । बहूनर्थान् लातीति बहुलम् । बाहुल्यञ्च यथेच्छं लक्ष्यानुरोधात्प्रवृत्तिः । घन इवेति । अत्र घनशब्द उपमानवाचकः, श्यामशब्दश्च सामान्यधर्मवचनः । उत्तरपदलोपस्य=मध्यमपदलोपस्य । तेन प्रियपूजकादिमध्यमपदानां लोपः सिध्यति ।

१ भेदक ( विशेषण ) जो है वह समानाधिकरण भेद्य ( विशेष्य ) के साथ बहुलता करके समास को प्राप्त हो ।

२ उपमान जो है वह सामान्यवचन के साथ समास को प्राप्त हो ।

३ शाकपार्थिवादि के सिद्धि के लिये उत्तरपद का लोप हो ।

४ नञ् जो है वह समर्थ सुबन्त के साथ समास को प्राप्त हो विकल्प करके ।

५ नञ् के नकार का लोप हो उत्तरपद परे रहते ।

६ लुप्त हुवा है नकार जिसका ऐसा जो नञ् उससे उत्तर जो अजादि उसको नुट् का आगम हो ।

लुप्तनकारान्नञ उत्तरपदस्याऽजादेर्नुडागमः स्यात् । अनश्वः । 'नैकधे'त्यादौ तु 'न'शब्देन सह 'सुप्सुपे'ति समासः ॥

१कुगतिप्रादयः २ । २ । १८ ॥

एते समर्थेन नित्यं समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः ॥

२ऊर्यादिच्विडाचश्च १ । ४ । ६१ ॥

ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । शुक्लीकृत्य । पटपटाकृत्य । सुपुरुषः ॥ *३प्रादयो गताद्यर्थे प्रथमया । प्रगत आचार्यः—प्राचार्यः । *४अत्यादयः क्रान्ताद्यर्थे द्वितीयया । 'अतिक्रान्तो माला'मिति विग्रहे

५एकविभक्ति चाऽपूर्वनिपाते १ । २ । ४४ ॥

विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यान्न तु तस्य पूर्वनिपातः ॥

६गोस्त्रियोरुपसर्जनस्य १ । २ । ४८ ॥

उपसर्जनं यो गोशब्दः, स्त्रीप्रत्ययान्तश्च तदन्तस्य प्रातिपदि-

नैकधेत्यत्र न नञ्शब्दः किन्तु 'न' शब्द इति नात्र नलोपादेः प्रसङ्गः, नलोऽभावात् । एवञ्च नञ्शब्देन समासे अनेकधेतिरूपन्तु भवत्येवेति ध्येयम् ।
प्राचार्यः । गुरोरपि गुरुरित्यर्थः ।

१ कु और गतिसंज्ञक और प्रादि ये समर्थ सुबन्त के साथ समास को प्राप्त हों ।
२ ऊर्यादि जो च्व्यन्त और डाजन्त इनकी क्रिया के योग में गतिसंज्ञा हो ।
३ प्रादि गताद्यर्थ में प्रथमान्त के साथ समास को प्राप्त हों ।
४ अत्यादि क्रान्ताद्यर्थ में द्वितीयान्त के साथ समास को प्राप्त हों ।
५ विग्रह में जो नियतविभक्तिक उसकी उपसर्जन संज्ञा हो किन्तु उसका पूर्व निपात न हो ।
६ उपसर्जन जो गोशब्द और स्त्रीप्रत्ययान्त, तदन्त प्रातिपदिक को ह्रस्व हो ।

कस्य ह्रस्वः स्यात्। अतिमालः। *अवादयः क्रुष्टाद्यर्थे तृतीयया। अवक्रुष्टः कोकिलया अवकोकिलः। *पर्यादयो ग्लानाद्यर्थे चतुर्थ्या। परिग्लानोऽध्ययनाय पर्यध्ययनः। *निरादयः क्रान्ताद्यर्थे पञ्चम्या। निष्क्रान्तः कौशाम्ब्याः-निष्कौशाम्बिः॥

## तत्रोपपदं[1] सप्तमीस्थम् ३।१।९२॥

सप्तम्यन्ते पदे 'कर्मणी'त्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि, तद्वाचकं पदमुपपदसंज्ञं स्यात्, [ तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः स्यात्। ]

## उपपदमतिङ्[2] २।२।१९॥

उपपदं सुबन्तं समर्थेन नित्यं समस्यते। अतिङन्तश्चायं

**कौशाम्बी**—वत्सदेशराजधानी। सा च प्रयागस्य निकटे इदानीं 'कोसम' इति प्रसिद्धा।

सूत्रस्थं 'सप्तमीस्थ'मिति पदं व्याचष्टे—**सप्तम्यन्ते इति**। 'उपपद'मित्यन्वर्थसञ्ज्ञावलादाह—**तद्वाचकमिति**। अन्वर्थसञ्ज्ञावलादेव सञ्ज्ञाविधावपि सप्तमीग्रहणेन सप्तम्यन्तं गृह्यते। 'धातो'रित्यधिकारवलाच्च सन्निहिते धात्वधिकारे इत्यर्थो लभ्यते, तेन 'च्लि लुङी'त्यत्र लुङन्ते उपपदे इत्यर्थो न भवति। 'तत्रे'त्यंशं व्याचष्टे—**तस्मिन्निति**। उपपदे सतीत्यर्थः 'तत्र' ग्रहणाभावे तु 'घः कर्मणि ष्ट्रन्' इत्यादाविव'कर्मण्य'णित्यादावपि कर्मण्यभिधेयेऽणित्यर्थः स्यात्, तथा च कर्त्तरि अण्प्रत्ययो न स्यात्।

'कर्मण्य'णित्यत्रेदं सूत्रं स्वयं सङ्गमयति—**कर्मणीति**। 'कर्मण्य'णित्यत्र सप्तम्यन्तं पदं—'कर्मणी'ति, तद्वाच्यं—कुम्भादि, तद्वाचकं कुम्भपदमुपपदसञ्ज्ञमिति समन्वयः।

१ सप्तम्यन्त जो कर्मणीत्यादि, पद उसमें वाच्यत्वेन स्थित जो कुम्भादि, तद्वाचक जो पद, उसकी उपपद संज्ञा हो।

२ उपपद जो वह सुबन्त, वह समर्थ के साथ नित्य समास को प्राप्त हो।

समासः । कुम्भं करोतीति कुम्भकारः । अतिङ् किम् ? मा भवान् भूत् । 'मा'ङिति सप्तमीनिर्देशान्माङुपपदम् । **गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः** । व्याघ्री । अश्वक्रीती । कच्छपीत्यादि ।

**तत्पुरुषस्याङ्गुलेः[1] संख्याव्ययादेः ५ । ४ । ८६ ॥**

प्रकृते-कुम्भ अस् कारेत्यलौकिक, कुम्भं करोतीति च लौकिकं विग्रहं वाक्यम् ।

**अतिङ् किमिति** । 'सुपे'त्यधिकारात्किमतिङ्ग्रहणेनेति प्रश्नः । अतिङ्ग्रहणं ज्ञापयति-'सुपे'त्येतन्नेहानुवर्त्तते इत्याशयेनाह-**मा भवानिति** । समासाऽभावसूचनाय भवानिति मध्ये उपात्तम् । अतिङ्ग्रहणात्सुपेत्येतन्नेहानुवर्त्तने, 'कुगतिप्रादय' इत्यत्रापि-'कुप्रादयः' 'गति'रिति योगं विभज्य आद्यस्य-कुप्रादयः । सुबन्ताः सुबन्तेन सह समस्यन्ते इत्यर्थः । 'गति'रित्यंशे तु अतिङ्ग्रहणमपकृष्यते, सुपेति निवृत्त, तेन गतिसञ्ज्ञकं सुबन्तमतिङन्तेन सह समस्यते इत्यर्थः । तेन गत्युपपदयोः समासः प्राक्सुबुत्पत्तेरिति लभ्यते । स्थालीपुलाकन्यायेन च परिभाषासिद्धिस्तदाह-**गतिकारकेति** । व्याजिघ्रतीति व्याघ्री । 'आतश्चोपसर्गे' इति कः । आङो घ्रशब्देन, आघ्रस्य च विशब्देन गतिसमासः । स यदि घ्रशब्दस्य सुबन्ततामपेक्षते, तर्हि सुबुत्पत्तये सङ्ख्याद्यपेक्षणात्ततः प्राग्लिङ्गयोगाल्लिङ्गबोधकष्टाप् स्यात्, जातिलक्षणो ङीष् तु न स्यात्, घ्रशब्दमात्रस्य जातिवाचकत्वाऽभावात् । सति टापि चाऽदन्तत्वविरहान्न ततो ङीष प्राप्तिरिति सुबुत्पत्तेः पूर्वं समास आस्थितः । एवञ्च 'व्याघ्री'त्यत्र समासानन्तरं जातिवाचकत्वान्ङीप् सिध्यतीत्याशयः ।

अश्वेन क्रीतेत्यत्र 'कर्तृकरणे' इति सुबुत्पत्तेः पूर्वं समासे 'क्रीतात्करणे'ति ङीष् । सुबुत्पत्त्यनन्तरं समासे तु टापि ङीप् न स्याददन्तत्वविरहात् ।

कच्छेन पिबतीत्यत्र सुपीति योगविभागात्कः । सुबुत्पत्तेः पूर्वमुपपदसमासे जातिलक्षणो ङीष् । सुबुत्पत्त्यनन्तरं समासे तु पूर्वं टापि अदन्तत्वविरहाज्जातिलक्षणो ङीष् न स्यात् ।

१ सख्या और अव्यय है आदि में जिसके और अङ्गुली शब्द है अन्तमें जिसके ऐसा जो तत्पुरुष उससे समासान्त अच् प्रत्यय हो ।

सङ्ख्याव्ययादेरङ्गुल्यन्तस्य समासान्तोऽच् स्यात् । द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम् । निर्गतमङ्गुलिभ्यो निरङ्गुलम् ॥

**[1] अहःसर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः ५ । ४ । ८७ ॥**

एभ्यो रात्रेरच् स्याच्चात्सङ्ख्याव्ययादेः । अहर्ग्रहणं द्वन्द्वार्थम् ॥

**[2] रात्राह्नाहाः पुंसि २ । ४ । २९ ॥**

एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव । अहश्च रात्रिश्च—अहोरात्रः । सर्वरात्रः । सङ्ख्यातरात्रः । संख्यापूर्वं रात्रं क्लीवम् । द्विरात्रम् । त्रिरात्रम् ॥

**[3] राजाहःसखिभ्यष्टच् ५ । ४ । ९१ ॥**

एतदन्तात्तत्पुरुषाट्टच् स्यात् । परमराजः ॥

**[4] आन्महतः समानाधिकरणजातीययोः ६ । ३ । ४६ ॥**

---

'द्व्यङ्गुल'मित्यत्र तद्धितार्थ इति समासः । 'प्रमाणे लो द्विगोर्नित्य'मिति मात्रचो लुगिति **वृत्तिकृत्** । द्वयसचो लुगिति तु **मनोरमाकृतः** ।

**निर्गतेति** । 'निरादयः क्रान्ताद्यर्थे'इति समासः। अह्नो रात्रिरिति तत्पुरुषस्याऽसम्भवात्। 'हेमन्तशिशिरावहोरात्रे चे'त्यत्र द्वन्द्वे समासान्तदर्शनाच्चेत्याशयः।

सर्वा रात्रिरित्यत्र 'पूर्वकाले'ति समासः। परमश्चासौ राजा च परमराजः। टचि 'नस्तद्धिते' इति टिलोप । द्वयोः रात्र्योः समाहारो द्विरात्रम्। 'तद्धितार्थे'ति समासः । एवमग्रेऽपि ।

---

१ अहन् सर्व एकदेश सङ्ख्यात और पुण्य इनसे परे जो रात्रि शब्द उससे अच् प्रत्यय हो, चकार से संख्या और अव्यय आदि में हो तो भी रात्रि शब्द से अच् प्रत्यय हो ।

२ रात्र और अह्न अह एतदन्त जो द्वन्द्व और तत्पुरुष वह पुँल्लिङ्ग में हो ।

३ राजन् अहन् और सखि शब्द ये है अन्त मे जिसके ऐसा जो तत्पुरुषसमास उससे टच् हो ।

४ महत् शब्द को आकार अन्तादेश हो, समानाधिकरण उत्तरपद परे रहते और जातीयर् प्रत्यय परे रहते ।

महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे । महाराजः । 'प्रकारवचने जातीयर्' । महाप्रकारो महाजातीयः ॥

**[1]द्व्यष्टनः सङ्ख्यायामबहुव्रीह्यशीत्योः ६ । ३ । ४७ ॥**

आत्स्यात् । द्वौ च दश च द्वादश । अष्टाविंशतिः ॥

**[2]त्रेस्त्रयः ६ । ३ । ४८ ॥**

त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् ॥

**[3]परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः २ । ३ । २६ ॥**

एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्धपिप्पली । *[4]द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः । पञ्चसु कपालेषु संस्कृतः—पञ्चकपालः पुरोडाशः ॥

---

महांश्चासौ राजा च महाराजः । 'सन्महद्'दिति समासः ।

**प्रकारेति** । अनेन सूत्रेण 'महाजातीय' इत्यत्र जातीयप्रत्यये रूपमिदमित्यर्थः ।

अबहुव्रीह्यशीत्योः किम् ? द्वित्राः, द्व्यशीति । सन्धिवेलादिषु त्रयोदशीति पाठात्सान्तोऽयमादेशः । **त्रेरिति** । अस्य सूत्रस्य—त्रिशब्दस्य त्रयस् स्यात्पूर्वविषये इत्यर्थः ।

**प्रतिषेधः**=परवल्लिङ्गतायाः प्रतिषेधः । अयं द्विगुसमासः, 'तद्धितार्थे'ति समासस्य हि सङ्ख्यापूर्वस्य द्विगुसञ्ज्ञाविधानात् । कपालशब्दस्य क्लीबतया नपुंसकलिङ्गे प्राप्तेऽनेन निषेधाद्विशेष्यनिघ्नता ।

---

१ द्वि और अष्टन् शब्द को आत्व होय संख्या परे रहते । पर बहुव्रीहि समास में और अशीति शब्द परे रहते न होय ।

२ त्रि शब्द को त्रयस् आदेश होय तत्पुरुष समास में ।

३ द्वन्द्व और तत्पुरुष में परपद की तरह लिङ्ग होता है ।

४ द्विगुसमास और प्राप्त आपन्न अलम्पूर्वक समास और गतिसमास इनमें परपद की तरह लिङ्ग न होय ।

**प्राप्ताऽऽपन्ने च द्वितीयया २ । २ । ४ ॥**

[प्राप्तापन्ने च द्वितीयया] समस्येते । अकारश्चानयोरन्तादेशः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलं कुमार्यै—अलङ्कुमारिः । अत एव ज्ञापकात्समासः । निष्कौशाम्बिः ॥

**अर्धर्चाः पुंसि च २ । ४ । ३१ ॥**

अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः । अर्धर्चः । अर्धर्चम् । एवं ध्वज-तीर्थ-शरीर-मण्डप-यूप-देहा-ऽङ्कुश-पात्र-सूत्रादयः । **सामान्ये नपुंसकम्** । मृदु पचति । प्रातः कमनीयम् ॥

इति तत्पुरुषसमासप्रकरणम् ॥ ३ ॥

# अथ बहुव्रीहिः

**शेषो बहुव्रीहिः २ । २ । २३ ॥**

अधिकारोऽयं प्राग्द्वन्द्वात् ॥

अत एव ज्ञापकात्=प्रतिषेधारम्भादेव । समासः=अलंशब्देन समासः । ऋचोऽर्धम्-अधर्चः। 'ऋक्पूर'विति अप्रत्ययः। अर्द्धर्चा इति । सूत्रपद्मादिशब्दानामत्र गणे पाठेऽपि पुसि प्रयोगो न भवति, शिष्टप्रयोगादिति प्रयोगविदः । सामान्ये=लिङ्गविशेषाऽविवक्षायाम् । अनियतलिङ्गविषयकमिदम् । तेन आदिः पचतीत्यादौ न क्लीवता ।

* इति तत्पुरुषसमासप्रकरणम् । *

द्वितीया श्रितेत्यादिना यस्य त्रिकस्य स्वौजसित्यस्य विशिष्य समासो नोक्तः स शेषः । प्रथमान्तमिति यावत् । यद्यपि 'प्रादयो गताद्यर्थे प्रथमये'ति प्रथमयाऽपि पूर्वं समास उक्त एव, तथाऽपि सूत्रकृता प्रथमान्तेन समासानुक्तेर्न दोषः । ननु

१ प्राप्त और आपन्न ये जो हैं सो द्वितीयान्त के साथ समास को प्राप्त हो और अकार अन्तादेश हो ।

२ अर्धर्चादि जो शब्द वे पुँल्लिङ्ग और नपुंसक लिङ्ग में हों ।

३ 'चार्थे द्वन्द्वः' इस सूत्रतक बहुव्रीहि का अधिकार है ।

**अनेकमन्यपदार्थे[1] २ । २ । २४ ॥**

अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः ॥

**सप्तमीविशेषणे बहुव्रीहौ[2] २ । २ । ३५ ॥**

सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं स्यात् । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः ॥

**हलदन्तात्सप्तम्याः संज्ञायाम्[3] ६ । ३ । ९ ॥**

हलन्तादकारान्ताच्च सप्तम्या अलुक् । कण्ठेकालः । प्राप्तमुदकं यं स प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीताम्बरो हरिः । वीरपुरुषको ग्रामः ।

प्रथमान्तस्यैव समासे 'कण्ठेकाल' इत्यादौ सप्तम्यन्तस्य कथं समास इति चेत्सप्तमीविशेषणे बहुव्रीहाविति ज्ञापकात्सप्तम्यन्तेनापि बहुव्रीहिरित्यर्थस्य लाभेनादोषात् । अन्येति । समस्यमानपदातिरिक्तपदस्यार्थे इत्यर्थः । कण्ठे कालो यस्यासौ—कण्ठेकाल'=नीलकण्ठः । **प्राप्तोदक इति** । ग्रामकर्मकप्राप्तिकर्तृ उदकं विग्रहार्थः, उदककर्तृकप्राप्तिकर्मेति समासार्थः । अनडुत्कर्तृकोद्वहनकर्मीभूतो रथ इति विग्रहार्थः, रथकर्मकोद्वहनकर्ताऽनड्वानिति च समासार्थः । रुद्रसम्प्रदानकोपहरणकर्मीभूतः पशुरिति विग्रहार्थः । पशुकर्मकोपहरणसम्प्रदानं रुद्र इति समासार्थः ।

स्थाल्यवधिकोद्धरणकर्मीभूत ओदन इति विग्रहार्थः । ओदनकर्मकोद्धरणावधिः स्थालीति च समासार्थः । एवमग्रेऽपि ध्येयम् ।

पीतमम्बरं यस्यासौ—पीताम्बरः । वीरा पुरुषा यस्मिन्नसौ—वीरपुरुषकः ।

---

१ अनेक जो प्रथमान्त अन्यपद के अर्थ में वर्तमान वह विकल्प से समास को प्राप्त हो, और वह समास बहुव्रीहि सञ्ज्ञक हो ।

२ सप्तम्यन्त और विशेषण का बहुव्रीहि समास में पूर्व निपात हो ।

३ हलन्त और अदन्त से परे जो सप्तमी उसका अलुक् हो ।

*प्रादिभ्यो[1] धातुजस्य वाच्यो वा चोत्तरपदलोपः। प्रपतितपर्णः। प्रपर्णः। *नञोऽस्त्यर्थानां[2] वाच्यो वा चोत्तरपदलोपः। अविद्यमानपुत्रः। अपुत्रः॥

स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे[3] स्त्रियामपूरणीप्रियादिषु ६।३।३४॥

भाषितपुंस्कात्-अनूङ्-ऊङोऽभावोऽस्यामिति बहुव्रीहिः। निपातनात्पञ्चम्या अलुक्, षष्ठ्याश्च लुक्। तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात्, समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु

'शेषाद्विभाषेति वैकल्पिकः कप्। प्रादीति। प्रादिभ्यः परं यद्धातुजं तदन्तस्य पदान्तरेण बहुव्रीहिसमासो व्याख्येयः। उत्तरपदस्य=पूर्वपदान्तर्गतस्योत्तरपदस्य धातुजस्य वा लोपश्चेति वार्तिकार्थः। यथा 'प्रपतितपर्ण' इत्यादौ प्राद्युत्तरं धातुजं-पतित इति, तदन्तं प्रपतित इति, तस्य पर्णशब्देन सह बहुव्रीहिसमासः। पतितशब्दस्य च वा लोप इति भावः। प्रपतितानि पर्णानि यस्यासौ—प्रपतितपर्ण इति विग्रहः। नञ इति। नञः परेषामस्त्यर्थवाचिनां पदान्तरेण बहुव्रीहिर्व्याख्येयः, अस्त्यर्थवाचिनान्तु वा लोप इत्यर्थः। अत्रोभयत्र वैकल्पिकोत्तरपदलोपमात्रं विधेयः, समासस्तु 'अनेकमन्ये'ति सूत्रेणैव सिद्ध इति विवेकः।

अलुक्=भाषितपुंस्कादनूङित्यत्र पञ्चम्या अलुक्। षष्ठ्याश्च लुक्। एवञ्च 'भाषितपुंस्कानूङः' इति प्रयोग उचित इति भाव.। भाषितः पुमान्यस्मिन्नर्थे स भाषितपुंस्कः, सोऽस्त्यस्य तद्भाषितपुंस्कमिति अर्श आद्यजन्तोऽयमित्याशयेन व्याचष्टे तुल्ये इति।

१ प्रादि से परे जो धातुज, तदन्त का पदान्तर के साथ समास हो और उत्तरपद का लोप हो विकल्प से। २ नञ् से परे अस्त्यर्थ वाचक शब्द उसका अन्यपद के साथ समास हो और उत्तर पद का लोप हो विकल्प करके।

३ प्रवृत्तिनिमित्त. तुल्य होते हुए जो भाषितपुंस्क उससे परे ऊङ् का अभाव है जिसमें ऐसा जो स्त्रीवाचक शब्द उसको पुंवाचक की तरह रूप हो, समानाधिकरण स्त्रीलिङ्ग उत्तरपद परे रहते। पूरणी प्रियादि परे रहते न हो।

पूरण्यां प्रियादौ च परतः । 'गोस्त्रियो'रिति ह्रस्वः । चित्रगुः । रूपवद्भार्यः । अनूङ् किम् ? । वामोरूभार्यः ॥ पूरण्यान्तु

अप्पूरणीप्रमाण्योः ५ । ४ । ११६ ॥

पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप्स्यात् । कल्याणी पञ्चमी यासां रात्रीणां ताः—कल्याणीपञ्चमा रात्रयः । स्त्री प्रमाणी यस्य स—स्त्रीप्रमाणः । अप्रियादिषु किम् ? । कल्याणीप्रिय इत्यादि ।

बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ५ । ४ । ११३ ॥

स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् । दीर्घसक्थः । जलजाक्षी । स्वाङ्गात्किम् ? । दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः । 'अक्ष्णोऽदर्शना'दिति वक्ष्यमाणोऽच् ॥

द्वित्रिभ्यां ष मूर्ध्नः ५ । ४ । ११५ ॥

आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ । द्विमूर्धः । त्रिमूर्धः ॥

चित्रा गावो यस्यासौ चित्रगुः । रूपवती भार्या यस्यासौ—रूपवद्भार्यः । **पञ्चमीति** । अत्र पूरण्या परतो न पुंवत् । पञ्चमीशब्दो हि पञ्चानां पूरणी पञ्चमीति रीत्या पूरणप्रत्ययान्तः । कल्याणी प्रिया यस्यासौ—कल्याणीप्रियः= मृतस्वपत्नीप्रियः । कल्याणशब्देन मृता भार्याऽभिधीयते । यथा—'कल्याणभार्य' इति लोके विधुरे प्रयोगः ।

दीर्घे सक्थिनी यस्यासौ दीर्घसक्थः । 'सक्थि क्लीब पुमानूरुः' इत्यमरः । जलजे इव अक्षिणी यस्याः सा—जलजाक्षी=कमललोचना ।

**स्थूलाक्षेति** । अक्षिशब्देनाऽत्र अक्षिसदृशग्रन्थिरभिधीयते । द्वौ मूर्धानौ

१ पूरणार्थप्रत्ययान्त जो स्त्रीलिङ्ग तदन्त से और प्रमाण्यन्त बहुव्रीहि से अप् प्रत्यय हो ।

२ स्वाङ्गवाची सक्थि और अक्षि, तदन्त बहुव्रीहि से षच् प्रत्यय होय ।

३ द्वि त्रि शब्द है पूर्व में जिसके ऐसा जो मूर्धन् शब्द उस से ष प्रत्यय हो बहुव्रीहि समास में ।

**अन्तर्बहिर्भ्यां च लोम्नः[1] ५ । ४ । ११७ ॥**

आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ । अन्तर्लोमः । बहिर्लोमः ॥

**पादस्य लोपोऽहस्त्यादिभ्यः[2] ५ । ४ । १३८ ॥**

हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ । व्याघ्रस्येव पादावस्य—व्याघ्रपात् । अहस्त्यादिभ्यः किम् ? । हस्तिपादः । कुसूलपादः ॥

**संख्यासुपूर्वस्य[3] ५ । ४ । १४० ॥**

पादस्य लोपः स्यात्समासान्तो बहुव्रीहौ । द्विपात् । सुपात् ॥

**उद्विभ्यां काकुदस्य[4] ५ । ४ । १४८ ॥**

लोपः स्यात् । उत्काकुत् । विकाकुत् ॥

**पूर्णाद्विभाषा[5] ५ । ४ । १४९ ॥**

पूर्णकाकुत् । पूर्णकाकुदः ॥

यस्यासौ द्विमूर्धः । अन्तर्लोमानि यस्यासौ—अन्तर्लोमः ।

कुसूलेति । कुसूलस्येव पादावस्य कुसूलपादः । कुसूलं—धान्यावपनम् । ( 'वखारी 'ओवरी' ) । स्थौल्येन चात्र सादृश्यम् । द्वौ पादावस्य द्विपात् । शोभनौ पादावस्य सुपात् । उत्=ऊर्ध्वं काकुदं यस्यासावुत्काकुत् । काकुदं=तालु । विकृतं विशिष्टं वा काकुदं यस्येति विग्रहः ।

पूर्णं काकुदं यस्यासौ—पूर्णकाकुत् । सुष्ठु हृदयं यस्यासौ—सुहृत् । दुष्टं

१ अन्तर् और बहिर् शब्द है पूर्व में जिसके ऐसा जो लोमन् शब्द उस से अप् प्रत्यय होय बहुव्रीहि समास में ।

२ हस्त्यादि से भिन्न उपमानवाचक शब्द से परे जो पादशब्द उसका लोप होय, बहुव्रीहि समास में ।

३ संख्या और सु है पूर्व में है जिसके ऐसा जो पाद शब्द उसका लोप हो बहुव्रीहि में ।

४ उत् और वि से परे जो काकुद शब्द उसका लोप हो बहुव्रीहि समास में ।

५ पूर्ण से परे जो काकुद शब्द उसका लोप हो विकल्प करके ।

**सुहृद्दुर्हृदौ मित्राऽमित्रयोः ५ । ४ । १५० ॥**[1]

सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते । सुहृत्—मित्रम् । दुर्हृत्—अमित्रः ॥

**उरःप्रभृतिभ्यः कप् ५ । ४ । १५१ ॥**[2]

**सोऽपदादौ ८ । ३ । ३८ ॥**[3]

पाशकल्पककाम्येषु [ परेषु ] विसर्गस्य सः ॥

**कस्कादिषु च ८ । ३ । ४८ ॥**[4]

एष्विण उत्तरस्य विसर्गस्य षोऽन्यस्य तु सः । इति सः । व्यूढोरस्कः ॥

**इणः षः ८ । ३ । ३९ ॥**[5]

इण उत्तरस्य विसर्गस्य षः स्यात्—पाशकल्पककाम्येषु परेषु । प्रियसर्पिष्कः ॥

**निष्ठा २ । २ । ३६ ॥**[6]

निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । युक्तयोगः ॥

हृदय यस्यासौ दुर्हृत् ।

व्यूढमुरो यस्याऽसौ व्यूढोरस्कः । व्यूढं=विशालं, सुदृढञ्च । प्रियं सर्पिर्यस्यासौ प्रियसर्पिष्कः । योगो युक्तो येनासौ-युक्तयोगः ।

१ सु और दुर् से परे जो हृदय शब्द उसको हृद् आदेश हो मित्र और अमित्र अर्थ में ।

२ उरः प्रभृति गणपठित जो शब्द उनसे कप् प्रत्यय हो ।

३ विसर्जनीय को सकार हो पाश कल्प क काम्य परे रहते ।

४ कस्कादिगण पठित जो शब्द तद्घटक जो इण् उससे परे जो विसर्ग उसको षत्व हो । इण् उत्तर से अन्य विसर्ग को सत्व हो ।

५ इण् से उत्तर जो विसर्ग उसको ष हो पाश कल्प क काम्य परे रहते ।

६ निष्ठान्त का बहुव्रीहि समास में पूर्व निपात हो ।

शेषाद्विभाषा ५ । ४ । १५४ ॥

अनुक्तसमासान्ताद् बहुव्रीहेः कप् वा । महायशस्कः । महायशाः ॥

इति बहुव्रीहिसमासप्रकरणम् ॥ ४ ॥

## अथ द्वन्द्वः

चार्थे द्वन्द्वः २ । २ । २९ ॥

अनेकं सुबन्तं चाऽर्थे वर्तमानं वा समस्यते स द्वन्द्वः । समुच्चयाऽन्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्र 'ईश्वरं गुरुं च भजस्वे'ति परस्परनिरपेक्षस्याऽनेकस्यैकस्मिन्नन्वयः **समुच्चयः** । 'भिक्षामट गां चानये'त्यन्यतरस्याऽऽनुषङ्गिकत्वेनान्वयोऽन्वाचयः । अनयो-

महद्यशो यस्यासौ—महायशस्कः ।

'अनेकमन्यपदार्थे' इत्यतोऽनेकमित्यनुवर्त्तते, 'सुबामन्त्रिते' इत्यतः सुबिति च । 'समास' इति 'विभाषे'ति चाधिक्रियते, तदाह—**अनेकमिति** ।

**अनेकस्य**=प्रकृते ईश्वरस्य गुरोश्च, **एकस्मिन्**=भजनादिक्रियायाम् । गुर्वीश्वरयोः परस्परनिरपेक्षत्वञ्च एकस्येश्वरस्य भजनक्रियायामन्वयोत्तरमपरस्य गुरो क्रियापदावृत्त्या तत्रान्वयादेव । **आनुषङ्गिकत्वम्**—अनुद्देश्यत्वम् । अन्यतरस्यानुषङ्गिकत्वेऽन्यतरस्य प्राधान्यमपि लभ्यते, तच्च स्वसम्बन्धिक्रियाया अवश्यकर्त्तव्यत्वेनैवेत्यवधेयम् । भिक्षामटेत्यादौ हि अदर्शनाद्गामनानयन्नपि भिक्षामटत्येवेति भिक्षा प्रधानं, गवानयनमप्रधानम् ।

१ अनुक्तसमासान्त जो बहुव्रीहि उससे कप् प्रत्यय होय ।

२ अनेक जो सुबन्त चार्थ में वर्तमान सो समास को प्राप्त हों विकल्प से ।

रसामर्थ्यात्समासो न । 'धवखदिरौ छिन्धी'ति मिलितानामन्वय इतरेतरयोगः । 'संज्ञापरिभाष'मिति समूहः—समाहारः ।

## राजदन्तादिषु परम् २ । २ । ३१ ॥

एषु पूर्वप्रयोगार्हं परं स्यात् । दन्तानां राजानो राजदन्ताः । *धर्मादिष्वनियमः । अर्थधर्मौ । धर्मार्थावित्यादि ।

## द्वन्द्वे घि २ । २ । ३२ ॥

द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिश्च हरश्च हरिहरौ ॥

## अजाद्यदन्तम् २ । २ । ३३ ॥

द्वन्द्वे पूर्वं स्यात् । ईशकृष्णौ ॥

## अल्पाच्तरम् २ । २ । ३४ ॥

शिवकेशवौ ॥

## पिता मात्रा १ । २ । ७० ॥

मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ । मातापितरौ वा ॥

**मिलितानाम्**=परस्परापेक्षाणाम्। 'उद्भूतावयवभेदसमूहस्वरूपाणा'मिति शेषः । **अन्वयः**=एकधर्मावच्छिन्नत्वेनाऽन्वयः । **असामर्थ्यात्**=एकार्थीभावाऽभावात् । सञ्ज्ञा च परिभाषा च अनयोः समाहारः सञ्ज्ञापरिभाषम् । **समूहः**=अनुद्भूतावयवभेदः समूहः । अर्थश्च धर्मश्च-धर्मार्थौ, अर्थधर्मौ च ।

अजादि च तदद-तञ्च—**अजाद्यन्तम्**=अजाद्यकारान्तं शब्दस्वरूपम् । यथा ईशशब्दोऽजादिरकारान्तश्चेति तस्य पूर्वनिपातः ।

१ राजदन्तादि में पूर्व प्रयोगार्ह जो शब्द उसका पर प्रयोग हो ।

२ द्वन्द्व समास में घिसंज्ञक का पूर्व निपात हो ।

३ द्वन्द्व समास में अजादि–अदन्त का पूर्वनिपात हो ।

४ द्वन्द्व समास में अल्पाच्तर का पूर्वनिपात हो ।

५ मातृ शब्द के साथ कहा गया जो पितृ शब्द वह विकल्पसे शेष रहता है ।

**[1]द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २ । ४ । २ ॥**

एषां द्वन्द्व एकवत् । पाणिपादम् । मार्दङ्गिकवैणविकम् । रथिकाऽश्वारोहम् ॥

**[2]द्वन्द्वाच्चुदषहान्तात्समाहारे ५ । ४ । १०६ ॥**

चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे । वाक् च त्वक् च वाक्त्वचम् । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम् ? । प्रावृट्शरदौ ॥

इति द्वन्द्वसमासप्रकरणम् ॥ ५ ॥

## अथ समासान्ताः

**[3]ऋक्पूरब्धूःपथामानक्षे ५ । ४ । ७४ ॥**

'अ-अनक्षे' इतिच्छेदः । ऋगाद्यन्तस्य समासस्य अप्रत्ययो-

**द्वन्द्वश्चेति** । प्राण्यङ्गानां तूर्याङ्गानां सेनाङ्गानाञ्च द्वन्द्व एकवदित्यर्थः । पाणी च पादौ च एषां समाहारः–पाणिपादम् । मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः । वेणुवादनं शिल्पमस्य वैणविकः । मार्दङ्गिकाश्च वैणविकाश्च एषां समाहारः मार्दङ्गिकवैणविकम् । स्रक्=माल्यम् । विवाहमण्डपे हवनार्थं शमीपत्राणि आरोहणार्थञ्च दृषदुपनीय स्थाप्यते, तत्रायं प्रयोगः । शमी च दृषच्च अनयोः समाहारः शमीदृषदम् । (शमी='जांटी') । वाक् च त्विट् च अनयोः समाहारः वाक्त्विषम् । त्विट्=कान्तिः । छत्रञ्च उपानहौ च एषां समाहारः छत्रोपानहम् । प्रावृट् च शरच्चानयोरितरेतरयोगः–प्रावृट्शरदौ ।

* इति द्वन्द्वप्रकरणम् *

१ प्राणि तूर्य सेनाङ्गका जो द्वन्द्व वह एकवत् हो ।

२ चवर्गान्त दान्त षान्त और हान्त इनसे समाहार द्वन्द्व में टच् प्रत्यय होता है ।

३ ऋक् पूः अप् धूः ये हैं अन्त में जिससे ऐसा जो समास तदन्त से अ प्रत्यय होय । अक्ष अर्थ में जो धू तदन्त से न होय ।

ऽन्तावयवः स्यादक्षे या धूस्तदन्तस्य तु न। अर्धर्चः। विष्णुपुरम्। विमलापं सरः। राजधुरा। अक्षे तु—अक्षधूः। दृढधूरक्षः। सखिपथः। रम्यपथो देशः॥

[1] अक्ष्णोऽदर्शनात् ५। ४। ७६॥

अचक्षुःपर्यायादक्ष्णोऽच् स्यात्समासान्तः। गवामक्षीव गवाक्षः।

[2] उपसर्गादध्वनः ५। ४। ८५॥

प्रगतोऽध्वानं प्राध्वो रथः॥

[3] न पूजनात् ५। ४। ६९॥

पूजनार्थात्परेभ्यः समासान्ता न स्युः। सुराजा। अतिराजा॥

इति समासान्ताः॥ इति समासप्रकरणम्।

---

विष्णोः पूरिति विष्णुपुरम्। क्लीबत्वं लोकात्। विमला आपो यत्र तत्—विमलापम्। (सर=झील)। राज्ञो धूः—राजधुरा। धूः=भारः।

अक्षे धूः—अक्षधूः। दृढा धूर्यस्यासौ दृढधूः। अत्रोभयत्रापि अक्षसम्बन्धिन्या धुरः सत्वान्न समासान्तः।

सख्युः पन्थाः—सखिपथः। रम्यः पन्था यत्रासौ रम्यपथः।

'वातायन गवाक्षोऽस्त्री'त्यमरः। (झरोखा)। प्राध्व इति। 'अत्यादयः क्रान्ताद्यर्थे' इति तत्पुरुषसमासः। शोभनो राजा सुराजा। 'कुगती'ति समासः। एवम्—अतिशयितो राजा अतिराजेत्यत्रापि।

* इति समासान्ताः *

---

१ चक्षुर्भिन्नपर्याय जो अक्षिशब्द उससे समासान्त अच् प्रत्यय हो।

२ उपसर्ग से परे जो अध्वन् शब्द उससे अच् प्रत्यय हो।

३ पूजनार्थक से परे समासान्त प्रत्यय न हों।

# अथ तद्धिताः

## तत्रादौ साधारणप्रत्ययाः

**समर्थानां प्रथमाद्वा[1] । ४ । १ । ८२ ॥**

इदं पदत्रयमधिक्रियते 'प्राग्दिश' इति यावत् ॥

**अश्वपत्यादिभ्यश्च[2] । ४ । १ । ८४ ॥**

एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु । अश्वपतेरपत्यादि आश्वपतम् । गाणपतम् ॥

**दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः[3] । ४ । १ । ८५ ॥**

दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात् । अणोऽपवादः । दितेरपत्यं दैत्यः । अदितेरादित्यस्य वा—

**हलो यमां यमि लोपः[4] । ८ । ४ । ६४ ॥**

हलः परस्य यमो लोपः स्याद्वा यमि । इति यलोपः । आदित्यः । प्राजापत्यः । देवाद्यञञौ[5] । दैव्यम् । दैवम् । ❀बहि-

'समर्थाना'मिति 'प्रथमा'दिति, 'वा' इति चाधिक्रियते इत्यर्थः । 'पदत्रय'-मित्युक्त्या प्रत्येकं स्वरितत्वं सूचितम् । 'तेन दीव्यति खनति जयति जित'-मिति सूत्रात्प्रागर्थेषु । अश्वपतेरपत्यम्, आश्वपत० । अश्वपतिना निर्वृत्तम् आश्वपतम् । अश्वपतेरिदम्–आश्वपतमित्यादि । 'तद्धितेष्वचामादे'रित्यादि-वृद्धिः । गणपतेरपत्यादि गाणपतम् । अदितेरपत्यम् आदित्यः । आदित्य-स्याऽपत्यम्–आदित्यः । देवस्यापत्यादि दैव्यम् । टिलोपवचनमव्ययानां

१ 'समर्थाना'-'प्रथमात्' और 'वा' इन तीन पदों का 'प्राग्दिशो विभक्तिः' इस सूत्र से पूर्व पूर्व अधिकार है ।

२ अश्वपत्यादिगणपठित जो शब्द उनसे अण् प्रत्यय हो प्राग्दीव्यतीय अर्थोंमें ।

३ दिति-अदिति-आदित्य और पत्युत्तरपद इनसे ण्य प्रत्यय हो प्राग्दीव्यतीय अर्थोंमें ।

४ हल् से परे जो यम् उसका लोप हो यम् परे रहते विकल्प से ।

५ देव शब्द से यञ् और अञ् प्रत्यय हो प्राग्दीव्यतीय अर्थों में ।

पष्टिलोपो[1] यञ्च । वाह्यः । *ईकक्च[2] ॥

किति च[3] । ७ । २ । ११८ ॥

किति तद्धिते चाऽचामादेरचो वृद्धिः स्यात् । वाहीकः । गोरजादिप्रसङ्गे यत्[4] । गोरपत्यादि गव्यम् ॥

उत्सादिभ्योऽञ्[5] । ४ । १ । ८६ ॥

औत्सः ॥

इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः ॥ १ ॥

# अथ अपत्याधिकारः

स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्[6] । ४ । १ । ८७ ॥

'धान्यानां भवने' इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः । स्त्रैणः । पौंस्नः ॥

भमात्रे' इत्यस्याऽनित्यता ज्ञापयितु, तेन 'आरातीय' इत्यत्र टिलोपो न । वहिर्भवः-वाह्य. । वाहीकः ।

गव्यमिति । 'गवि भवं' 'गोर्देवताऽस्य' 'गोरिद'मित्यादयोऽर्था । उत्से भवः। 'उत्स प्रस्रवणं वारिप्रवाहो निर्झरो झरः' इत्यमर. । स्त्रिया. पुंसो वाऽ-

१ वहिषस् शब्द की टि का लोप हो और यञ् प्रत्यय हो ।

२ वहिषस् शब्द से ईकक् प्रत्यय हो और टि का लोप हो ।

३ अचों के मध्य में जो आदि अच् उसको वृद्धि हो कित् तद्धित परे रहते ।

४ गो शब्द से अजादि के प्रसङ्ग में यत् प्रत्यय हो, प्राग्दीव्यतीय अर्थों में ।

५ उत्सादि गणपठित जो शब्द तत्प्रकृतिक जो सुबन्त उससे अञ् प्रत्यय हो ।

६ 'धान्याना भवने क्षेत्रे' इस सूत्र से पूर्व २ अर्थों में स्त्री और पुन्स् शब्द से नञ् और स्नञ् प्रत्यय हों ।

## तस्यापत्यम् । ४ । १ । ९२ ॥

षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः ॥[1]

## ओर्गुणः । ६ । ४ । १४६ ॥[2]

उवर्णान्तस्य भस्य गुणस्तद्धिते । उपगोरपत्यम्—औपगवः । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः ॥

## अपत्यं पौत्रप्रभृति गोत्रम् । ४ । १ । १६२ ॥[3]

अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् ॥

## एको गोत्रे । ४ । १ । ९३ ॥[4]

गोत्रे एक एवाऽपत्यप्रत्ययः स्यात् । उपगोर्गोत्रापत्यमौपगवः ।

पत्यादि'-स्त्रैणः, पौंस्नः । **तस्येति** । तस्येति षष्ठ्यन्तानुकरणं लुप्तपञ्चमीकम्, अपत्यमिति सप्तम्यर्थे व्यत्ययेन प्रथमा । एवमग्रेऽपि । **उक्ताः**=अण्यादयः, **वक्ष्यमाणाः**=इञादयः ।

नन्वपत्यग्रहणं व्यर्थं, पौत्रादेरपत्यत्वाऽव्यभिचारादत आह-**विवक्षितमिति** । तेन पौत्रादेः शेषत्वेन विवक्षायां गार्ग्यस्येदमित्यादौ न गोत्रसञ्ज्ञा ।

**पौत्रादिः**=पौत्र-प्रपौत्र-प्रतिप्रपौत्रादिः ।

**एक एवेति** । उपगुशब्द एवाऽपत्ये प्रत्ययं लभते न औपगवशब्द इति गोत्रापत्येऽपि अनन्तरापत्ये इव अणेव भवति नतु औपगवस्यापत्यम्—औपगवि-

१ कृतसन्धि जो षष्ठ्यन्त समर्थ सुवन्त उससे कहे हुए अणादि प्रत्यय और वक्ष्यमाण जो प्रत्यय वे अपत्य अर्थ में विकल्प से हों ।

२ उवर्णान्त जो भसंज्ञक अङ्ग उसका जो अन्त्य अल् उसको गुण हो तद्धित प्रत्यय परे रहते ।

३ अपत्यत्वेन विवक्षित जो पौत्रादि उनकी गोत्र सञ्ज्ञा हो ।

४ गोत्र अर्थ में एक ही अपत्यसञ्ज्ञक प्रत्यय हो ।

## गर्गादिभ्यो यञ् ४ । १ । १०५ ॥[1]

गोत्रापत्ये । गर्गस्य गोत्रापत्यं गार्ग्यः । वात्स्यः ॥

## यञञोश्च २ । ४ । ६४ ॥[2]

गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम् । गर्गाः । वत्साः ॥

## जीवति तु वंश्ये युवा ४ । १ । १६३ ॥[3]

वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव स्यात् ॥

## गोत्राद्यून्यस्त्रियाम् ४ । १ । ९४ ॥[4]

यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात् । स्त्रियां तु न युवसंज्ञा ॥

रिति भवतीत्याशयः । पितृपितामहाद्युत्पादकप्रबन्धो वंशः, तत्र भवो वंश्यः । तदाह पित्रादाविति । यथा-गर्गो मूलपुरुषः, तस्य यः प्रपौत्रः स पितरि पितामहे वा जीवति सति 'युव'सञ्ज्ञः । पित्रादौ मृते तु स ( चतुर्थोऽपि ) गोत्रसञ्ज्ञक एव न युवसञ्ज्ञ इति भावः ।

यूनि=युवसञ्ज्ञके । गोत्रप्रत्ययं यञादिकमुत्पाद्य ततो युवप्रत्यय इत्यर्थः ।

१ गर्गादिगणपठितशब्दप्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से यञ् प्रत्यय हो गोत्रापत्य में ।

२ गोत्र में जो यञन्त-अञन्त उसका अवयव जो यञ् और अञ् उसका लुक् हो । यदि यञ्-अञ् प्रत्ययकृत बहुत्व हो तो । स्त्रीलिङ्ग में न हो ।

३ वंश में पित्रादि जीवित रहने पर पौत्रादि का अपत्य जो चतुर्थादि, उसकी युवसञ्ज्ञा ही होती है ।

४ गोत्रप्रत्ययान्त से ही युवापत्य अर्थ में प्रत्यय हो । स्त्रीलिङ्ग में युवसञ्ज्ञा नहीं हो ।

## यञिञोश्च ४ । १ । १०१ ॥

गोत्रे यौ यञिञौ तदन्तात्फक् स्यात् ॥

## आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ७ । १ । २ ॥

प्रत्ययादेः फस्य आयन्, ढस्य–एय्, खस्य–ईन्, छस्य–ईय्, घस्य इय्—एते स्युः । गर्गस्य युवापत्यं गार्ग्यायणः । दाक्षायणः ॥

## अत इञ् ४ । १ । ९५ ॥

अपत्येऽर्थे । दाक्षिः ॥

## बाह्वादिभ्यश्च ४ । १ । ९६ ॥

बाहविः । औडुलोमिः । *लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः । उडुलोमाः । आकृतिगणोऽयम् ॥

## अनृष्यानन्तर्ये बिदादिभ्योऽञ् ४ । १ । १०४ ॥

फगिति । अयं फक् यूनि भवति, 'गोत्रे एक एव प्रत्यय' इत्युक्तेः ।
अत इति । अदन्तात्पष्ठ्यन्तादिञ् स्यादपत्येऽर्थे । बाहोरपत्यं बाहविः ।
उडुलोम्नोऽपत्यम् औडुलोमि, औडुलोमी, उडुलोमाः–इत्येवं रूपाणि ।

१ गोत्र अर्थ में जो यञ-और इञ् तदन्त से फक् प्रत्यय हो युव अर्थ में ।

२ प्रत्यय के आदि भूत जो फ-ढ-ख-छ-घ इनके स्थान में क्रम से आयन्-एय्-ईन्-ईय्-इय्-ये आदेश हों ।

३ अदन्त शब्दप्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से इञ् प्रत्यय हो अपत्य अर्थ में ।

४ बाह्वादि गणपठित शब्दप्रकृतिक षष्ठ्यन्त समर्थ से इञ् प्रत्यय हो अपत्यार्थ में ।

५ लोमन् शब्द प्रकृतिक सुबन्त समर्थ से अपत्य अर्थ में अकार प्रत्यय हो बहुत्व में ।

६ बिदादि गणपठित शब्दप्रकृतिक षष्ठ्यन्त समर्थ से अञ् हो गोत्र में । परन्तु

एभ्योऽञ् गोत्रे, ये त्वत्राऽनृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे। त्रिदस्य गोत्रं बैदः। बैदौ॥

## [1]यञञोश्च २।४।६४॥

गोत्रे यदयन्तमञन्तञ्च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे, न तु स्त्रियाम्। बिदाः। पुत्रस्यापत्यं पौत्रः। पौत्रौ। पौत्राः। एवं दौहित्रादयः॥

## [2]शिवादिभ्योऽण् ४।१।११२॥

अपत्ये। शैवः। गाङ्गः॥

## [3]ऋष्यन्धकवृष्णिकुरुभ्यश्च ४।१।११४॥

**ऋषिभ्यः**—वासिष्ठः। वैश्वामित्रः। **अन्धकेभ्यः**—श्वाफल्कः। **वृष्णिभ्यः**—वासुदेवः। **कुरुभ्यः**—नाकुलः। साहदेवः॥

## [4]मातुरुत्संख्यासम्भद्रपूर्वायाः ४।१।११५॥

बिदस्य ऋषित्वेन गोत्रेऽञ्। विदस्य गोत्रापत्य बैदः।

**बिदा** इत्यत्र बहुत्वे 'यञञोश्चे'ति अञो लुक्। **पौत्रा इति**। पुत्रस्याऽनृषितया ततोऽनन्तरापत्येऽञ्। पुत्रस्यापत्य पौत्रमिति च विग्रहः। अत्र गोत्रप्रत्ययाऽभावान्न बहुत्वेऽञो लुक्। दुहितुरपत्य दौहित्रः। 'गोत्र'इति निवृत्तम्।

शिवस्यापत्य शैवो गणेशः। गङ्गाया अपत्यं गाङ्गो भीष्मः।

**ऋष्येति**। एभ्योऽपत्येऽण् स्यात्। वसिष्ठस्यापत्यं वासिष्ठः। द्वयोर्मात्रोरपत्य–

ऋषिभिन्न से अपत्य अर्थ में अञ् प्रत्यय हो। और ऋषिवाचक शब्द से गोत्र अर्थ में अञ् प्रत्यय हो।

१ गोत्र अर्थ में यञन्त अञन्त जो प्रातिपदिक, तदवयव जो यञ् और अञ् उसका लुक् हो। यदि प्रत्यय कृत बहुत्व हो तो, स्त्रीलिङ्ग को छोड़ कर।

२ शिवादि गणपठित शब्द प्रकृतिक षष्ठयन्त समर्थ से अण् प्रत्यय हो अपत्यार्थ में।

३ ऋषि वाचक, अन्धक वाचक, वृष्णिवाचक, कुरुवाचक शब्दप्रकृतिक षष्ठयन्त समर्थ से अण् प्रत्यय हो अपत्यार्थ में।

४ संख्या–सम्–और भद्र पूर्वक जो मातृशब्द उसको उदादेश हो और अण् प्रत्यय हो।

सङ्ख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण् प्रत्ययश्च । द्वैमातुरः । षाण्मातुरः । सांमातुरः । भाद्रमातुरः ॥

**स्त्रीभ्यो ढक्[1] ४ । १ । १२० ॥**

स्त्रीप्रत्ययान्तेभ्यो ढक् । वैनतेयः ॥

**कन्यायाः कनीन च[2] ४ । १ । ११६ ॥**

चादण् । कानीनो व्यासः कर्णश्च ॥

**राजश्वशुराद्यत्[3] ४ । १ । १३७ ॥**

***राज्ञो जातावेवेति वाच्यम्[4] ॥**

**ये चाऽभावकर्मणोः[5] ६ । ४ । १६८ ॥**

यादौ तद्धिते परेऽन् प्रकृत्या स्यान्न तु भावकर्मणोः । राजन्यः । जातावेवेति किम् ? ।

**अन्[6] ६ । ४ । १६७ ॥**

अन् प्रकृत्या स्यादणि परे । राजनः । श्वशुर्यः ॥

---

**द्वैमातुरः**=गणेशः । तद्धितार्थेति तद्धितार्थे समासः । षण्णां मातॄणामपत्यं **षाण्मातुरः**=कार्तिकेयः । कन्याया अपत्यं **कानीनः** ।

**जातावेवेति** । प्रकृतिप्रत्ययसमुदायेन जातिश्चेद्वाच्येत्यर्थः । प्रत्ययस्तु अपत्ये एव । राज्ञोऽपत्यं **राजन्यः** क्षत्रियः । राज्ञोऽपत्यं दास्यादावुत्पन्नो राजनः ।

१ स्त्रीप्रत्ययान्तप्रकृतिकषष्ठ्यन्तसमर्थ से ढक् प्रत्यय हो अपत्यार्थ में ।

२ कन्याशब्दप्रकृतिक षष्ठ्यन्त समर्थ से अण् प्रत्यय हो, और कन्या शब्द को कनीन आदेश हो अपत्य अर्थ में ।

३ राजन् शब्द और श्वशुरशब्द प्रकृतिक षष्ठ्यन्त समर्थ से यत् प्रत्यय हो अपत्य में ।

४ राजन् शब्द से जाति में ही (अर्थात् प्रकृतिप्रत्यय समुदाय से जाति वाच्य हो तो) यत् हो ।

५ तद्धितसञ्ज्ञक यादिप्रत्यय परे रहते अन् प्रकृति से हो, भावकर्म को छोड़कर के ।

६ अन् प्रकृति से हो अण् परे रहते ।

[1]क्षत्राद्घः ४ । १ । १३८ ॥

क्षत्रियः । जातावित्येव । क्षात्रिरन्यत्र ॥

[2]रेवत्यादिभ्यष्ठक् ४ । १ । १४६ ॥

[3]ठस्येकः ७ । ३ । ५० ॥

अङ्गात्परस्य ठस्येकादेशः स्यात् । रैवतिकः ॥

[4]जनपदशब्दात्क्षत्रियादञ् ४ । १ । १६८ ॥

जनपदक्षत्रियवाचकाच्छब्दादञ् स्यादपत्ये । पाञ्चालः ।

**[5]*क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्*।** पञ्चालानां राजा पाञ्चालः । *** [6]पूरोरण् वक्तव्यः *** । पौरवः । ***[7]पाण्डोर्ड्यण्*** । पाण्ड्यः ॥

श्वशुरस्यापत्यं श्वशुर्यः=श्याल. । **जनपदेति** । जनपदवाची सन् यः क्षत्रियवाची तत्प्रकृतिकषष्ठ्यन्तादपत्येऽञ्स्यादित्यर्थः । पञ्चालस्यापत्य पाञ्चालः । पञ्चालादिशब्दा हि बहुवचनान्ता देशविशेषवचनाः, एकवचनान्ताश्च क्षत्रियवाचका. ।

**क्षत्रियेति** । क्षत्रियेण समानः शब्दो यस्य जनपदस्य असौ क्षत्रियसमानशब्दस्तस्माज्जनपदवाचिनःषष्ठ्यन्ताद्राजनि वाच्येऽपत्यवत्प्रत्ययो भवतीत्यर्थः । ( पाञ्चालः=फर्रुखाबाद प्रदेश ) । पूरोरपत्यं पौरवः । पौरवौ । पूरवः ।

१ क्षत्रशब्दप्रकृतिक षष्ठ्यन्त समर्थ से घप्रत्यय हो, अपत्यार्थ में, जाति वाच्य हो तो । २ रेवत्यादिगणपठितशब्दप्रकृतिक षष्ठ्यन्त समर्थ से ठक् प्रत्यय हो ।

३ अङ्ग से परे जो ठ उसको इक आदेश हो ।

४ जनपदवाची होता हुआ जो क्षत्रिय वाची शब्द, तत्प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से अञ् प्रत्यय हो अपत्य अर्थ में ।

५ क्षत्रियसमानशब्द जो जनपद वाचक शब्द, उसके राजा में अपत्यवत् प्रत्यय हो । अर्थात् अपत्य अर्थ में जो प्रत्यय वह राज अर्थ में भी हो ।

६ पूरुशब्दप्रकृतिक षष्ठ्यन्त समर्थ से अण् प्रत्यय हो अपत्यार्थ में ।

७ पाण्डुशब्द प्रकृतिक षष्ठ्यन्त समर्थ से ड्यण् प्रत्यय हो अपत्य अर्थ में ।

कुर्वादिभ्यो ण्यः[1] ४ । १ । १७२ ॥

कौरव्यः । नैषध्यः ॥

ते तद्राजाः[2] ४ । १ । १७४ ॥

अञादयस्तद्राजसंज्ञाः स्युः ॥

तद्राजस्य बहुषु तेनैवास्त्रियाम्[3] २ । ४ । ६२ ॥

बह्वर्थेषु तद्राजस्य लुक्, तदर्थकृते बहुत्वे न तु स्त्रियाम् । इक्ष्वाकवः । पञ्चालाः इत्यादि ॥

कम्बोजाल्लुक्[4] ४ । १ । १७५ ॥

अस्मात्तद्राजस्य लुक् । कम्बोजः । कम्बोजौ ।

* कम्बोजादिभ्य इति वक्तव्यम् * । चोलः । शकः । केरलः । यवनः ॥

इत्यपत्याधिकारः ॥ २ ॥

पाण्डोरपत्यं पाण्ड्यः । पाण्डूनां (दक्षिणदिग्भवदेशानां) राजा पाण्ड्यः । पाण्ड्यौ पाण्डवः ।—इत्यादिरूपाणि बोध्यानि । कुरोरपत्यं कौरव्यः । कुरूणां राजा कौरव्यः । कौरव्य', कौरव्यौ, कुरव इत्यादि । निषधानां राजा, निषधस्यापत्यं वा नैषध्यः । बहुत्वे लुक्—निषधाः । अञादयः—राजन्यपत्ये च विहिताः । आदिपदेन पूरवः, पाण्डवः, कुरवः, निषधा इत्यादीनां ग्रहणम् । कम्बोजानां राजा तदपत्यं वा कम्बोजः । कम्बोजौ । कम्बोजाः ।

* इत्यपत्याधिकारप्रकरणम् *

१ कुरुशब्द और नकारादि शब्द प्रकृतिक षष्ठयन्त समर्थ से ण्य प्रत्यय हो

२ पूर्वोक्त अपत्य और राज अर्थ में विहित जो अञादि उनकी तद्राज सञ्ज्ञा हो

३ बहुत्व अर्थ में तद्राजसञ्ज्ञक प्रत्यय का लुक् हो, यदि प्रत्ययकृत बहुत्व हो तो । स्त्रीलिङ्ग को छोड़कर के ।

४ कम्बोज शब्द से विहित जो तद्राजसंज्ञक प्रत्यय उसका लुक् हो ।

५ कम्बोजादिगणपठित शब्दों से परे जो तद्राजसंज्ञक प्रत्यय उसका लुक् हो

# अथ रक्ताद्यर्थकाः

## तेन[1] रक्तं रागात् ४ । २ । १ ॥

अण् स्यात् । रज्यतेऽनेनेति रागः । काषायेण रक्तं वस्त्रं काषायम् ॥

## नक्षत्रेण[2] युक्तः कालः ४ । २ । ३ ॥

अण् स्यात् । *तिष्यपुष्ययोर्नक्षत्राऽणि[3] यलोप इति वाच्यम् । पुष्येण युक्तं पौषम्—अहः ॥

## लुबविशेषे[4] ४ । २ । ४ ॥

पूर्वेण विहितस्य लुप् स्यात्, षष्टिदण्डात्मकस्य कालस्याऽवान्तरविशेषश्चेन्न गम्यते । अद्य पुष्यः ॥

## दृष्टं[5] साम ४ । २ । ७ ॥

तेनेत्येव । वसिष्ठेन दृष्टं वासिष्ठं साम ॥

रज्यतेऽनेनेति राग.। बाहुलकात्करणे घञ् । तृतीयान्ताद्रञ्जकद्रव्यवाचका-द्रक्तमित्यर्थेऽण् स्यात् । (राग='रङ्ग') । नक्षत्रेणेति । नक्षत्रवाचकात्तृतीयान्ता-द्युक्त इत्यर्थेऽण् स्यात् । यो युक्तः स कालश्चेत् । नक्षत्राऽणि=नक्षत्रवाचका-द्विहितेऽणि परतः । पुष्येण=पुष्यसमीपस्थेन चन्द्रमसा । कालस्य=अहो-रात्रात्मकस्य । तेनेति । तृतीयान्तात्—दृष्टमित्यर्थेऽण् स्यात् यद्दृष्टं तत् साम चेत् ।

१ रागवाचकशब्दप्रकृतिकतृतीयान्त सुबन्त समर्थ से रक्त इस अर्थ में अण् प्रत्यय हो ।

२ नक्षत्र वाचक शब्दप्रकृतिक तृतीयान्त समर्थ सुबन्त से 'युक्तः कालः' इस अर्थ में अण् प्रत्यय हो ।

३ तिष्य और पुष्य के यकार का लोप हो नक्षत्रविहित अण् परे रहते ।

४ पूर्वसूत्र से विहित जो प्रत्यय उसका लुप् हो अविशेष अर्थ में । अर्थात् षष्टिदण्डात्मक ( २४ घंटे का ) जो काल उसके बीच के किसी विशेष काल की प्रतीति न होती हो तो ।

५ तृतीयान्त सुबन्त समर्थ से दृष्ट अर्थ में अण प्रत्यय हो, वह दृष्ट यदि साम हो ।

**वामदेवाड्ड्यड्ड्यौ ४ । २ । ९ ॥** [1]

वामदेवेन दृष्टं साम—वामदेव्यम् ॥

**परिवृतो रथः ४ । २ । १० ॥** [2]

अस्मिन्नर्थेऽण् प्रत्ययो भवति । वस्त्रेण परिवृतो वास्त्रो रथः ॥

**तत्रोद्धृतममत्रेभ्यः ४ । २ । १४ ॥** [3]

शरावे उद्धृतः शाराव ओदनः ॥

**संस्कृतं भक्षाः ४ । २ । १६ ॥** [4]

सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे । यत्संस्कृतं भक्षाश्चेत्ते स्युः ।
भ्राष्ट्रेषु संस्कृता भ्राष्ट्रा यवाः ॥

**साऽस्य देवता ४ । २ । २४ ॥** [5]

इन्द्रो देवताऽस्येति ऐन्द्रं हविः । पाशुपतम् । बार्हस्पत्यम् ॥

---

**वामदेवादिति** । तृतीयान्तादस्मादेतौ स्त उक्तेऽर्थे ।

**परिवृत इति** । तृतीयान्तात्परिवृत इत्यर्थेऽण् स्यात्, यः परिवृतः स रथश्चेत् ।

**तत्रेति** । सप्तम्यन्तादमत्रवाचिनोऽण् स्यादुद्धृतमित्यर्थे । **शरावः**—वर्धमानकः । ( सराई ) **शाराव इति** । हवनीयौदनात्किञ्चित्पात्रान्तरे उद्धृत इत्यर्थः । **साऽस्येति** । प्रथमान्तादस्य देवतेत्यर्थे यथाविहितं

१ वामदेवशब्द प्रकृतिक तृतीयान्त समर्थ सुबन्त से ड्यत् और ड्य प्रत्यय होते हैं।

२ तत्तत्शब्दप्रकृतिक तृतीयान्त समर्थ सुबन्त से परिवृत अर्थ में अण् प्रत्यय हो, वह परिवृत यदि रथ हो तो ।

३ अमत्र (पात्र) वाचकशब्दप्रकृतिक सप्तम्यन्त समर्थ सुबन्त से उद्धृत अर्थ में अण् प्रत्यय हो ।

४ तत्तत् शब्द प्रकृतिक सप्तम्यन्त सुबन्त समर्थ से संस्कृत इस अर्थ में अण् प्रत्यय हो, वह संस्कृत यदि भक्ष ( खाद्य ) हो तो ।

५ तत्तच्छब्द प्रकृतिक प्रथमान्त समर्थ सुबन्त से 'अस्य देवता' इस अर्थ में यथा विहित प्रत्यय हो ।

**शुक्राद्धन्[1] ४ । २ । २६ ॥**

शुक्रियम् ॥

**सोमाट्ट्यण्[2] ४ । २ । ३० ॥**

सौम्यम् ॥

**वाय्वृतुपित्रुषसो यत्[3] ४ । २ । ३१ ॥**

वायव्यम् । ऋतव्यम् ॥

**रीङ् ऋतः[4] ७ । ४ । २७ ॥**

अकृद्यकारे असार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः । यस्येति च । पित्र्यम् । उषस्यम् ॥

**पितृव्यमातुलमातामहपितामहाः[5] ४ । २ । ३६ ॥**

एते निपात्यन्ते । पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः ।

प्रत्ययः स्यात् । पशुपतिर्देवताऽस्य—पाशुपतम् । अश्वपत्यादित्वादण् । **बार्हस्पत्यमिति** । दित्यदित्येति ण्यः । **शुक्रादिति** । प्रथमान्तादस्मादुक्तेऽर्थे घन् स्यात् । **सोमादिति** । प्रथमान्तात्सोमशब्दादस्य देवतेत्यर्थेऽण् स्यात् । सोमो देवताऽस्य सौम्यं हविः । **वाय्विति** । प्रथमान्तेभ्य एभ्यो यदुक्तेऽर्थे । वायुर्देवताऽस्य वायव्यं हविः ।

पितरो देवता अस्य पित्र्यम् । उषा देवताऽस्य उषस्यम् । उषस्शब्दः सान्तः स्त्रीलिङ्गो दिवो दुहितरमाह । पितुर्भ्रातरि व्यत् । मातुर्डुलच् । मातृपितृ-

१ शुक्रशब्दप्रकृतिकप्रथमान्त समर्थ सुबन्त से 'अस्य देवता' इस अर्थ में घन् प्रत्यय हो ।

२ सोमशब्दप्रकृतिकप्रथमान्त समर्थ सुबन्त से 'अस्य देवता' इस अर्थ में ट्यण् प्रत्यय हो ।

३ वायु-ऋतु-पितृ-और उषस् शब्द प्रकृतिक प्रथमान्त समर्थ सुबन्त से 'अस्य देवता' इस अर्थ में यत् प्रत्यय हो ।

४ कृत् भिन्न यकार और सार्वधातुक भिन्न यकार परे रहते और च्वि प्रत्यय परे रहते ऋदन्त अङ्ग को रीङ् का आदेश हो ।

५ पितृव्य—मातुल—मातामह और पितामह-ये शब्द निपातन से सिद्ध होते हैं ।

मातुः पिता मातामहः । पितुः पिता पितामहः ॥

**तस्य समूहः ४ । २ । ३७ ॥**[1]

काकानां समूहः काकम् ॥

**भिक्षादिभ्योऽण् ४ । २ । ३८ ॥**[2]

भिक्षाणां समूहो भैक्षम् । गर्भिणीनां समूहो गार्भिणम् । इह 'भस्याऽढे तद्धिते'[3] इति पुंवद्भावे कृते—

**इनण्यनपत्ये ६ । ४ । १६४ ॥**[4]

अनपत्यार्थेऽणि परे इन् प्रकृत्या स्यात् । तेन 'नस्तद्धिते' इति टिलोपो न । युवतीनां समूहो यौवनम् ॥

**ग्रामजनबन्धुभ्यस्तल् ४ । २ । ४३ ॥**[5]

'तलन्तं स्त्रियाम्' । ग्रामता । जनता । बन्धुता । *गज-

भ्यां पितरि डामहच् । तस्येति । षष्ठ्यन्तात्समूहेऽर्थे यथाविहितमणादयः स्युः । भिक्षेति । भिक्षादिभ्यःषष्ठ्यन्तेभ्यःसमूहेऽर्थेऽण् स्यात् । भस्य पुंवत्स्याड्ढभिन्न तद्धिते परे इति वार्तिकार्थः । इह=गार्भिणमित्यत्र । **पुंवद्भाव इति ।** गर्भिणीशब्दस्य पुंवद्भावे कृते । तेन=प्रकृतिभावेन । **टिलोपो न**= इनित्यस्य लोपो न । अत्र 'अन्' इति प्रकृतिभाव । अणि अन् प्रकृत्या स्यादिति च तदर्थः । तेन 'नस्तद्धिते' इति टिलोपो न । **ग्रामेति ।** एभ्यः षष्ठ्यन्तेभ्यस्तल्स्यात्समूहेऽर्थे । ग्रामाणां समूहो ग्रामता ।

१ तत्तत् शब्द प्रकृतिक षष्ठ्यन्त सुबन्त समर्थ से समूह अर्थ में यथाविहित अणादि प्रत्यय हों ।

२ भिक्षादिगण पठित शब्द प्रकृतिक षष्ठ्यन्त सुबन्त समर्थ से समूह अर्थ में अण् प्रत्यय हो ।

३ ढभिन्न तद्धित परे रहते भसञ्ज्ञक प्रातिपदिक को पुंवद्भाव हो ।

४ अपत्यार्थ भिन्न अण् परे रहते इन् प्रकृतिक से रहे ।

५ ग्राम जन और बन्धु शब्द प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से समूह अर्थ में तल् प्रत्यय हो ।

सहायाभ्यां[1] चेति वक्तव्यम् । गजता । सहायता । *अह्नः खः[2] क्रतौ । अहीनः ॥

**अचित्तहस्तिधेनोष्ठक्[3] ४ । २ । ४७ ॥**

**इसुसुक्तान्तात्कः[4] ७ । ३ । ५१ ॥**

इसुसुक्तान्तात्परस्य ठस्य कः । साक्तुकम् । हास्तिकम् । धैनुकम् ॥

**तदधीते तद्वेद[5] ४ । २ । ५९ ॥**

**न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्[6] ७ । ३ । ३ ॥**

पदान्ताभ्यां यकारवकाराभ्यां परस्य न वृद्धिः । किं तु ताभ्यां पूर्वौ क्रमादैजावागमौ स्तः । व्याकरणमधीते वेद वा वैयाकरणः ॥

गजेति । आभ्यां तत्समूहेऽर्थे । गजानां समूहो गजता । सहायानां समूहः सहायता । अह्न इति । षष्ठ्यन्तादहन्शब्दात्खः स्यात्समूहेऽर्थे क्रतुविषये । अह्नां समूहेन साध्यः । अहर्गणसाध्यसुत्याकः क्रतुरित्यर्थः । (सुत्या=अभिषवः) । 'अह्नष्टखोरेवे'ति नियमान्नस्तद्धित इति टिलोपः । अचित्तेति । षष्ठ्यन्तेभ्य एभ्यष्ठक् समूहेऽर्थे । सक्तूनां समूहः—साक्तुकम् । तदधीत इति । द्वितीयान्तादध्येतरि वेदितरि च यथाविहितं प्रत्ययाः स्युः ।

वैयाकरण इति । अत्र विशब्देकारस्य स्थाने यणादेशे यकारे पदान्त-

१ गज और सहाय शब्द प्रकृतिक षष्ठ्यन्त समर्थ सुवन्त से समूह अर्थ में तल् प्रत्यय हो ।

२ अहन् शब्द प्रकृतिक षष्ठ्यन्त समर्थ सुवन्त से ख प्रत्यय हो क्रतु अर्थ में ।

३ चेतन भिन्न वाची, हस्तिन् शब्द और धेनुशब्दप्रकृतिक षष्ठ्यन्त समर्थ से ठक् प्रत्यय हो ।

४ इस् उस्-उक् और त एतदन्त से परे जो ठक् उस को क आदेश हो ।

५ तत्तत् शब्द प्रकृतिक द्वितीयान्त समर्थ सुवन्त से अधीते और वेद इन अर्थो में यथाविहित प्रत्यय हो ।

६ पदान्त जो यकार वकार उससे जो परे उसको वृद्धि न हो किन्तु यकार वकार से पूर्व को क्रम से ऐ औ का आगम हो ।

**क्रमादिभ्यो वुन्[1] ४ । २ । ६१ ॥**

क्रमकः । पदकः । शिक्षकः । मीमांसकः ॥

**इति रक्ताद्यर्थकाः ॥ ३ ॥**

# अथ चातुरर्थिकाः

**तदस्मिन्नस्तीति देशे तन्नाम्नि[2] ४ । २ । ६७ ॥**

उदुम्बराः सन्त्यस्मिन्देशे औदुम्बरो देशः ॥

**तेन[3] निर्वृत्तम् ४ । २ । ६८ ॥**

कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी ॥

**तस्य[4] निवासः ४ । २ । ६९ ॥**

शिवीनां निवासो देशः शैवः ॥

त्वमस्त्येवेति ततः पूर्वमैजागमः । क्रममधीते वेद वा क्रमकः । पदमधीते वेद वा पदकः । शिक्षामधीते वेद वा शिक्षकः । मीमांसामधीते वेद वा मीमांसकः । **तदिति** । अस्तीत्युपाधिकात् प्रथमान्तादस्मिन्नित्यर्थे यथाविहितं प्रत्ययाः स्युः, तन्नामा देशश्चेत् । **तनेति** । तृतीयान्तान्निर्वृत्तमित्यर्थे यथाविहितं प्रत्ययाः स्युः । अत्र टिड्ढाणञिति ङीप् । **तस्येति** षष्ठ्यन्तान्निवास इत्यर्थे यथाविहितं प्रत्ययाः

१ क्रमादि गण पठित शब्द प्रकृतिक द्वितीयान्त समर्थ सुबन्त से अधीते वेद इन अर्थों में वुन् प्रत्यय हो ।

२ प्रथमान्त समर्थ सुबन्त से अस्मिन् अस्ति इस अर्थ में यथाविहित प्रत्यय हों, तन्नामा यदि देश हो तो ।

३ तृतीयान्त समर्थ सुबन्त से निर्वृत्तम् इस अर्थ में यथाविहित प्रत्यय हो ।

४ षष्ठ्यन्त समर्थ सुबन्त से निवास इस अर्थ में यथाविहित प्रत्यय हों ।

**[1]अदूरभवश्च ४ । २ । ७० ॥**

विदिशाया अदूरभवं नगरं वैदिशम् ॥

**[2]जनपदे लुप् ४ । २ । ८१ ॥**

जनपदे वाच्ये चातुरर्थिकस्य लुप् ॥

**[3]लुपि युक्तवद्व्यक्तिवचने १ । २ । ५१ ॥**

लुपि सति प्रकृतिवल्लिङ्गवचने स्तः । पञ्चालानां निवासो जनपदः पञ्चालाः । कुरवः । अङ्गाः । वङ्गाः । कलिङ्गाः ॥

**[4]वरणादिभ्यश्च ४ । २ । ८२ ॥**

अजनपदार्थ आरम्भः । वरणानामदूरभवं नगरं वरणाः ॥

**[5]कुमुदनडवेतसेभ्यो ड्मतुप् ४ । २ । ८७ ॥**

**[6]झयः ८ । २ । १० ॥**

झयन्तान्मतोर्मस्य वः । कुमुद्वान् । नड्वान् ॥

स्यात् । अदूरेति । षष्ठ्यन्ताददूरभवइत्यर्थे अणादिप्रत्ययः स्यात् ।

चतुर्णामर्थानां समाहारश्चतुरर्थी । तस्यां भवः—चातुरर्थिकः । जनपदस्यैकत्वादेकत्वे प्राप्तेऽतिदेशमाह—लुपीति । युक्त=प्रकृतिः । व्यक्तिः=लिङ्गम् ।

वरणेति । वरणादिभ्यश्चातुरर्थिकस्य लुप् स्यात् । (वरणाः=बरना) ।

कुमुदेति । एभ्यो ड्मतुप्स्याच्चतुरर्थ्याम् । कुमुदानि सन्त्यस्मिन्देशे

१ षष्ठ्यन्त समर्थ से अदूर भव इस अर्थ में अणादि प्रत्यय हो ।

२ जनपद वाच्य होने पर चातुरर्थिक प्रत्यय का लुप् हो ।

३ लुप् होने पर प्रकृति की तरह लिङ्ग और वचन हों ।

४ वरणादि गण पठितशब्द प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से चातुरर्थिक-प्रत्यय का लुप् हो ।

५ कुमुद--नड-वेतस शब्दप्रकृतिक समर्थ सुबन्त से चारों अर्थों में ड्मतुप् प्रत्यय हो ।

६ झयन्त से परे जो मतुप् का मकार उसको वकारादेश हो ।

**मादुपधायाश्च मतोर्वोऽयवादिभ्यः ८ । २ । ९ ॥**

मवर्णाऽवर्णान्तान्मवर्णाऽवर्णोपधाच्च यवादिवर्जितात्परस्य मतोर्मस्य वः । वेतस्वान् ॥

**नडशादाड्ड्वलच् ४ । २ । ८८ ॥**

नड्वलः । शाद्वलः ॥

**शिखाया वलच् ४ । २ । ८९ ॥**

शिखावलः ॥

**इति चातुरर्थिकाः ॥ ४ ॥**

# अथ शैषिकाः ।

**शेषे ४ । २ । ९२ ॥**

अपत्यादिचतुरर्थ्यन्तादन्योऽर्थः शेषस्तत्राऽणादयः स्युः । चक्षुषा

---

कुमुद्वान् । 'कुमुद्वान् कुमुदप्राये' इत्यमरः । नडाः सन्त्यत्र नड्वान् । म् च अश्च अनयोः समाहारः-म, तस्मात्-मात् । वेतसाः सन्त्यत्र वेतस्वान् । 'वेतस्वान् बहुवेतसे' इत्यमरः । नडाः सन्त्यत्र नड्वलः । 'शाद्वलः शादहरिते' इत्यमरः । 'शादो जम्बालघासयो'रित्यमरः । शिखा अस्त्यस्मिन् देशे शिखावलः ।

अणादय इति। प्राग्दीव्यतोऽणित्यादयः साधारणाः प्रत्ययाः। उपनिषदि दृश्यते

१ मकार और अवर्ण अन्त में है जिसके, और-मकार-अवर्ण उपधा में है जिसके उससे परे जो मतुप् का मकार उसको वकारादेश हो, यवादिगण पठित को छोड़कर ।

२ नड और शादशब्द प्रकृतिक सुबन्त समर्थ से चातुरर्थिक अर्थ में ड्वलच् प्रत्यय हो ।

शिखाशब्दप्रकृतिक सुबन्त समर्थ से चातुरर्थिक अर्थ में वलच् प्रत्यय हो ।

४ अपत्यादि चतुरर्थ्यन्त से भिन्न जो अर्थ वह हुआ शेष । उस अर्थ में अणादि प्रत्यय हों ।

गृह्यते चाक्षुषं रूपम् । श्रावणः शब्दः । औपनिषदः पुरुषः । दृषदि पिष्टा दार्षदाः सक्तवः । चतुर्भिरुह्य चातुरं शाकटम् । चतुर्दश्यां दृश्यते चातुर्दशं रक्षः । 'तस्य विकारः' इत्यतः प्राक् शेषाधिकारः ॥

## राष्ट्रा[1]ऽवारपाराद्घखौ ४ । २ । ९३ ॥

आभ्यां क्रमाद्घखौ स्तः शेषे । राष्ट्रे जातादिः राष्ट्रियः । अवारपारीणः । *अवा[2]रपाराद्विगृहीतादपि विपरीताच्चेति वक्तव्यम् । अवारीणः । पारीणः । पारावारीणः । इह प्रकृतिविशेषाद्घादयष्ट्युट्युलन्ताः प्रत्यया उच्यन्ते तेषां जातादयोऽर्थविशेषाः समर्थविभक्तयश्च वक्ष्यन्ते ॥

## ग्रामा[3]द्यखञौ ४ । २ । ९४ ॥

ग्राम्यः । ग्रामीणः ॥

औपनिषदः । दृषत्=शिलायन्त्रम् ( चक्की' 'जाता') । चतुर्भि.—'अश्वादिभि'-रिति शेषः । पूर्वोक्तोदाहरणेषु निरुक्तेष्वर्थेषु अणादिसिद्ध्यर्थमस्य विधायकत्वम्, उत्तरसूत्रेष्वनुवृत्तयेऽधिकारत्वञ्चेत्यर्थः । विगृहीतात्=अवारशब्दात्पारशब्दाच्च पृथग्भूतात् । विपरीतात्=पारावारशब्दात् । इह=शैषिके । प्रकृतिविशेषात्= राष्ट्रादिशब्दात् । जातादय'='तत्र जातः' 'तत्र भवः' इत्यादयः । वक्ष्यन्ते= स्वयमेव सूत्रकृता वक्ष्यन्ते । एवञ्च नैते प्रत्यया अनिर्दिष्टार्थतया स्वार्थे भवन्तीत्याशय' ।

१ राष्ट्र और अवारपार शब्दप्रकृतिक सुबन्त समर्थ से जातादि अर्थ में क्रमसे घ और ख प्रत्यय हों ।

२ अवारशब्द से पार शब्द से और विपरीत ( पारावार शब्द ) से भी ख प्रत्यय हो ।

३ ग्राम शब्द प्रकृतिक सुबन्त समर्थ से जातादि अर्थ में य और और खञ् प्रत्यय हो ।

नद्यादिभ्यो ढक्[1] ४ । २ । ९७ ॥

नादेयम् । माहेयम् । वाराणसेयम् ॥

दक्षिणापश्चात्पुरसस्त्यक्[2] ४ । २ । ९८ ॥

दाक्षिणात्यः । पाश्चात्त्यः । पौरस्त्यः ॥

द्युप्रागपागुदक्प्रतीचो यत्[3] ४ । २ । १०१ ॥

दिव्यम् । प्राच्यम् । अपाच्यम् । उदीच्यम् । प्रतीच्यम् ॥

अव्ययात्त्यप्[4] ४ । २ । १०४ ॥

*अमेहक्वतसित्रेभ्य एव । अमात्यः । इहत्यः । क्वत्यः । ततस्त्यः । तत्रत्यः । *त्यब्नेर्ध्रुव इति वक्तव्यम् । नित्यः ॥

वृद्धिर्यस्याचामादिस्तद्वृद्धम्[5] १ । १ । ७३ ॥

यस्य समुदायस्याऽचां मध्ये आदिवृद्धिस्तद्वृद्धसंज्ञं स्यात् ॥

त्यदादीनि च[6] १ । १ । ७४ ॥

वृद्धसंज्ञानि स्युः ॥

वृद्धाच्छः[7] ४ । २ । ११४ ॥

नद्यां जातादि–नादेयम् । दक्षिणेति । एभ्यस्त्यक् स्याज्जातादिष्वर्थेषु । दक्षिणेत्याजन्तमव्ययं, साहचर्यात् । दक्षिणस्यामदूरे दक्षिणा, दक्षिणा जातादिः–दाक्षिणात्यः । पश्चाद्भव. पाश्चात्यः । पुरो भवः–पौरस्त्यः । दिवि जातादि–दिव्यम् । प्राचि जातादि प्राच्यम् । अमा भवः–अमात्यः=सचिवः । इह भवः इहत्यः । एवमग्रेऽपि । नितरां भवः–नित्यः=ध्रुवः ।

१ नद्यादि गणपठित शब्द प्रकृतिक समर्थ सुबन्त से जातादि अर्थ में ढक् प्रत्यय हो । २ दक्षिणा–पश्चात्–और पुरस् ये जो अव्यय, एतत् प्रकृतिक सुबन्त समर्थ से जातादि अर्थ में त्यक् प्रत्यय हो । ३ दिव्-प्राच्-अपाच्-उदच् और प्रतीच् शब्द प्रकृतिक सुबन्त समर्थ से जातादि अर्थ में यत् प्रत्यय हो । ४ अव्यय से त्यप् हो । ५ जिस समुदाय के अचों के मध्य में आदिवृद्धि हो वह वृद्धसंज्ञक हो । ६ त्यदादि की भी वृद्धसञ्ज्ञा हो । ७ वृद्धसंज्ञकप्रकृतिक समर्थ सुबन्त से छ प्रत्यय हो जातादि अर्थों में ।

शालीयः । मालीयः । तदीयः । *वा नामधेयस्य वृद्धसंज्ञा वक्तव्या । देवदत्तीयः । दैवदत्तः ॥

**[1]गहादिभ्यश्च ४ । २ । १३८ ॥**

गहीयः ॥

**[2]युष्मदस्मदोरन्यतरस्यां खञ् च ४ । ३ । १ ॥**

चाच्छः । पक्षेऽण् । युवयोर्युष्माकं वाऽयं युष्मदीयः ॥ अस्मदीयः ॥

**[3]तस्मिन्नणि च युष्माकास्माकौ ४ । ३ । २ ॥**

युष्मदस्मदोरेतावादेशौ स्तः खञ्यणि च । यौष्माकीणः । आस्माकीनः । यौष्माकः । आस्माकः ॥

**[4]तवकममकावेकवचने ४ । ३ । ३ ॥**

एकार्थवाचिनोर्युष्मदस्मदोस्तवकममकौ स्तः खञि अणि च । तावकीनः । तावकः । मामकीनः । मामकः । छे तु—

शालाया भवः-शालीयः । तस्यायं-तदीयः ।

**देवदत्तीय इति** । वृद्धसञ्ज्ञाया 'वृद्धाच्छ'इति च्छ । अन्यत्र प्राग्दीव्यतीयोऽण् । देवदत्तस्यायं देवदत्तीय. । दैवदत्तः । **गहादिभ्य इति** । देशवाचिभ्यो गहादिभ्यश्छः स्यात् । गहे जातादि.-गहीय. । गहो=देशविशेषः । ततश्छ. । युवयोर्युष्माकं वाऽयं यौष्माकीण इति विग्रहः । तवायं-तावकीन., तावकः, त्वदीयः ।

१ गहादिगण पठित शब्द प्रकृतिक समर्थ सुबन्त से छ प्रत्यय हो ।

२ युष्मद्—अस्मद् शब्द प्रकृतिक सुबन्त से खञ् प्रत्यय हो और चकार से छ प्रत्यय हो । पक्ष में अण् प्रत्यय भी हो ।

३ युष्मद्-अस्मद् शब्द को युष्माक और अस्माक आदेश हो खञ् और अण् प्रत्यय परे रहते ।

४ एकार्थवाची जो युष्मद् और अस्मद् शब्द उसको तवक और ममक आदेश हो खञ् और अण् प्रत्यय परे रहते ।

## [1]प्रत्ययोत्तरपदयोश्च ७ । २ । ९८ ॥

मपर्यन्तयोरेतयोरेकार्थवाचिनोस्त्वमौ स्तः प्रत्यये उत्तरपदे च परतः । त्वदीयः । मदीयः । त्वत्पुत्रः । मत्पुत्रः ॥

## [2]मध्यान्मः ४ । ३ । ८ ॥

मध्यमः ॥

## [3]कालाट्ठञ् ४ । ३ । ११ ॥

कालवाचिभ्यष्ठञ् स्यात् । कालिकम् । मासिकम् । सांवत्सरिकम् । [4]अव्ययानां भमात्रे टिलोपः । सायम्प्रातिकः । पौनःपुनिकः ॥

## [5]प्रावृष एण्यः ४ । ३ । १७ ॥

प्रावृषेण्यः ॥

## [6]सायंचिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ४ । ३ । २३ ॥

मध्ये जातादिः **मध्यमः** । काले जातादि **कालिकम्** । सायं प्रातर्भवः-**सायम्प्रातिकः** । प्रातरित्यत्र टिलोपः । पुनः पुनर्भवः पौन पुनिकः ।

१ एकार्थवाची जो युष्मद्-अस्मद् शब्द उसके मपर्यन्त भाग को त्व और म-आदेश हो प्रत्यय और उत्तरपद परे रहते ।

२ मध्य शब्द प्रकृतिक समर्थ सुबन्त से जातादि अर्थों में म प्रत्यय हो ।

३ कालवाचक शब्द प्रकृतिक समर्थ सुबन्त से जातादि अर्थों में ठञ् प्रत्यय हो ।

४ अव्ययसञ्ज्ञक शब्दों की टि का लोप हो भसञ्ज्ञा मात्र में ।

५ प्रावृष् शब्द प्रकृतिक समर्थ सुबन्त से जातादि अर्थों में एण्य प्रत्यय हो ।

६ साय-चिरम्-प्राह्णे-प्रगे इनसे और अव्ययसञ्ज्ञक कालवाचक समर्थ सुबन्त से भवादि अर्थ में ट्यु-और ट्युल् प्रत्यय हों । और इन को तुट् का आगम भी हो ।

सायमित्यादिभ्यश्चतुर्भ्योऽव्ययेभ्यश्च कालवाचिभ्यष्ट्युट्युलौ स्तस्तयोस्तुट् च । सायन्तनम् । चिरन्तनम् । प्राह्ण प्रग अनयोरेदन्तत्वं निपात्यते । प्राह्णेतनम् । प्रगेतनम् । दोषातनम् ॥

**तत्र जातः[1] ४ । ३ । २५ ॥**

सप्तमीसमर्थाज्जात इत्यर्थेऽणादयो घादयश्च स्युः । स्रुघ्ने जातः स्रौघ्नः । उत्से जात औत्सः । राष्ट्रे जातो राष्ट्रियः । अवारपारे जातः—अवारपारीणः—इत्यादि ॥

**प्रावृषष्ठप्[2] ४ । ३ । २६ ॥**

एण्यापवादः । प्रावृषिकः ॥

**प्रायभवः[3] ४ । ३ । ३९ ॥**

तत्रेत्येव । स्रुघ्ने प्रायेण—बाहुल्येन—भवति स्रौघ्नः ।

**संभूते[4] ४ । ३ । ४१ ॥**

स्रुघ्ने सम्भवति स्रौघ्नः ॥

प्रावृषि भव प्रावृषेण्यः=वर्षासु भव । सायं भवं सायन्तनम्। चिरं भवं चिरन्तनम् । एवं प्राह्णेभवं प्राह्णेतनमित्यादि । **प्रगेतनं**=प्रातर्भवम् । दोषाभवं-दोषातनं=रात्रौ भवम् । **स्रुघ्नः**=देशभेदः ( आगरा जिला )।

प्रावृषि जातः—प्रावृषिकः । सप्तम्यन्तात्प्रायभव इत्यर्थेऽणादयो घादयश्च

१ सप्तम्यन्त समर्थ सुबन्त से जात अर्थ में अणादि और घादि प्रत्यय हों ।

२ प्रावृष शब्द प्रकृतिक सप्तम्यन्त सुबन्त समर्थ से ठप् प्रत्यय हो ।

३ तत्तत्प्रातिपदिकसप्तम्यन्त सुबन्त समर्थ से प्रायभव अर्थ में अणादि और घादि प्रत्यय यथासम्भव हों ।

४ सप्तम्यन्त समर्थ सुबन्त से सम्भव अर्थ में अणादि तथा घादि प्रत्यय हो ।

**[1]कोशाड्ढञ् ४ । ३ । ४२ ॥**

कौशेयं वस्त्रम् ॥

**[2]तत्र भवः ४ । ३ । ५३ ॥**

स्रुघ्ने भवः स्रौघ्नः । औत्सः । राष्ट्रियः ॥

**[3]दिगादिभ्यो यत् ४ । ३ । ५४ ॥**

दिश्यम् । वर्ग्यम् ॥

**[4]शरीरावयवाच्च ४ । ३ । ५५ ॥**

दन्त्यम् । कण्ठ्यम् । *अध्यात्मादेष्ठञिष्यते । अध्यात्म भवम्—आध्यात्मिकम् ॥

**[6]अनुशतिकादीनां च ७ । ३ । २० ॥**

एषामुभयपदवृद्धिर्ञिति णिति किति च । आधिदैविकम् । आधिभौतिकम् । ऐहलौकिकम् । पारलौकिकम् । आकृतिगणोऽयम् ।

---

स्युः । सप्तम्यन्तादित्येव । कोशे सम्भवति कौशेयम् ।

**तत्रेति** । सप्तम्यन्ताद्भवार्थेऽणादयो घादयश्च स्युः । दिशि भवं दिश्यम् । दन्ते भवं दन्त्यम् । आत्मनीति अध्यात्मम् । विभक्त्यर्थेऽव्ययीभावः ।

देवे इत्यधिदेवम्, अधिदेव भवम्—आधिदैविकम् । इह लोके भवम्-

---

१ कोश शब्द प्रकृतिक सप्तम्यन्त समर्थ सुबन्त से सम्भूत अर्थ में ढञ् प्रत्यय हो । २ तत्तत् शब्दप्रकृतिक सप्तम्यन्त समर्थ सुबन्त से भवार्थ में अणादि और घादि प्रत्यय हों ।

३ दिगादि गण पठित शब्दप्रकृतिक सप्तम्यन्त समर्थ सुबन्त से यत् प्रत्यय हो भवार्थ में । ४ शरीराऽवयववाचीशब्दप्रकृतिक सप्तम्यन्त समर्थ सुबन्त से यत प्रत्यय हो भवार्थ में ।

५ अध्यात्मादि गण पठित समर्थ सुबन्त से ठञ प्रत्यय हो भव अर्थ में ।

६ अनुशतिकादि गण पठित शब्दों को उभयपद वृद्धि हो ञित्-णित्-कित् तद्धित परे रहते ।

**जिह्वामूलाङ्गुलेश्छः ४ । ३ । ६२ ॥**

जिह्वामूलीयम् । अङ्गुलीयम् ॥

**वर्गान्ताच्च ४ । ३ । ६३ ॥**

कवर्गीयम् ॥

**तत आगतः ४ । ३ । ७४ ॥**

स्रुघ्नादागतः स्रौघ्नः ॥

**ठगायस्थानेभ्यः ४ । ३ । ७५ ॥**

शुल्कशालाया आगतः शौल्कशालिकः ॥

**विद्यायोनिसम्बन्धेभ्यो वुञ् ४ । ३ । ७७ ॥**

औपाध्यायकः । पैतामहकः ॥

ऐहलौकिकम् । परलोके भव-**पारलौकिकम्** । जिह्वामूले भवं-**जिह्वामूलीयम्** । कवर्गे भवं-**कवर्गीयम्** । **तत आगत इति** । पञ्चम्यन्तादागत इत्यर्थेऽणादयो घादयश्च स्युः । **ठगेति** । आयस्थानवाचिनः पञ्चम्यन्तादागत इत्यर्थे ठक् स्यात् । ( शुल्कशाला='चुङ्गीघर' 'जगातघर' ) । **विद्येति** । विद्यासम्बन्धवाचिभ्यो योनिसम्बन्धवाचिभ्यश्च पञ्चम्यन्तेभ्यो वुञ् स्यादागत इत्यर्थे । उपाध्यायादागत **औपाध्यायकः** । विद्यासम्बन्धवाची-उपाध्याय-शब्दः । पितामहादागतः-**पैतामहकः** । योनिसम्बन्धवाचकोऽयम् ।

१ जिह्वामूल और अङ्गुलिशब्द प्रकृतिक सप्तम्यन्त समर्थ सुबन्त से भव अर्थ में छ प्रत्यय हो ।

२ वर्गान्तशब्दप्रकृतिक सप्तम्यन्तसमर्थ सुबन्त से भव अर्थ में छ प्रत्यय हो ।

३ तत्-शब्दप्रकृतिक पञ्चम्यन्त समर्थ से आगत अर्थ में अणादि और घादि प्रत्यय हों ।

४ आयस्थानवाचक शब्दप्रकृतिक पञ्चम्यन्त समर्थ सुबन्त से आगत अर्थ में ठक् प्रत्यय हो ।

५ विद्यासम्बन्धवाची और योनिसम्बन्धवाची शब्दप्रकृतिक पञ्चम्यन्त समर्थ सुबन्त से आगत अर्थ में वुञ् प्रत्यय हो ।

**हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ४ । ३ । ८१ ॥**[1]

समादागतं समरूप्यम् । विषमरूप्यम् । पक्षे—गहादित्वाच्छः । समीयम् । विषमीयम् । देवदत्तरूप्यम् । दैवदत्तम् ॥

**मयट् च ४ । ३ । ८२ ॥**[2]

सममयम् । देवदत्तमयम् ॥

**प्रभवति । ४ । ३ । ८३ ॥**[3]

हिमवतः प्रभवति हैमवती गङ्गा ॥

**तद्गच्छति पथिदूतयोः ४ । ३ । ८५ ॥**[4]

स्रुघ्नं गच्छति स्रौघ्नः पन्था दूतो वा ॥

**अभिनिष्क्रामति द्वारम् ४ । ३ । ८६ ॥**[5]

स्रुघ्नमभिनिष्क्रामति स्रौघ्नं कान्यकुब्जद्वारम् ॥

**हेत्विति** । हेतुवाचकान्मनुष्यवाचकाच्च पञ्चम्यन्तात् आगत इत्यर्थे रूप्यः स्यात् । **मयट् चेति** । हेतुमनुष्येभ्यो मयडित्यर्थः । **प्रभवतीति** । पञ्चम्यन्तात्प्रभवतीत्यर्थेऽणादयो घादयश्च स्युः । **तद्गच्छेति** । द्वितीयान्ताद्गच्छतीत्यर्थेऽणादयो घादयश्च स्युः, यो गच्छति स चेत्पन्था दूतो वा । **अभिनीति** । द्वितीयान्तादभिनिष्क्रामतीत्यर्थेऽणादिप्रत्ययः स्यात्, यन्निष्क्रामति तद्द्वारञ्चेत् । ( **अभिनिष्क्रामति** = उस ओर निकलता है ) ।

१ हेतु वाचक और मनुष्यवाचक शब्दप्रकृतिक पञ्चम्यन्त समर्थ सुबन्त से आगत अर्थ में रूप्य प्रत्यय हो ।

२ हेतुवाचक और मनुष्यवाचक शब्द प्रकृतिक पञ्चम्यन्त समर्थ सुबन्तसे आगत अर्थ में मयट् प्रत्यय भी होता है ।

३ पञ्चम्यन्त समर्थ सुबन्त से प्रभवति इस अर्थ में अणादि और घादि प्रत्यय हों ।

४ द्वितीयान्त समर्थ सुबन्त से 'गच्छति'–इस अर्थ में अणादि और घादि प्रत्यय हों । जाने वाला यदि-मार्ग-वा दूत हो तो ।

५ द्वितीयान्त समर्थ सुबन्त से 'अभिनिष्क्रामति' इस अर्थ में अणादि घादि प्रत्यय हों जो निकलता है वह यदि द्वार हो तो ।

अधिकृत्य कृते ग्रन्थे । ४ । ३ । ८७ ॥[1]

शारीरकमधिकृत्य कृतो ग्रन्थः शारीरकीयः ॥

सोऽस्य निवासः । ४ । ३ । ८९ ॥[2]

स्रुघ्नो निवासोऽस्य स्रौघ्नः ॥

तेन प्रोक्तम् । ४ । ३ । १०१ ॥[3]

पाणिनिना प्रोक्तं पाणिनीयम् ॥

तस्येदम् । ४ । ३ । १२० ॥[4]

उपगोरिदम्—औपगवम् ॥ इति शैषिकाः ॥ ५ ॥

# अथ विकारार्थकाः

तस्य विकारः । ४ । ३ । १३४ ॥[5]

*[6]अश्मनो विकारे टिलोपो वक्तव्यः । अश्मनो विकारः—

**अधिकृत्येति** । द्वितीयान्तादधिकृत्य कृते ग्रन्थे इत्यर्थेऽणादयो घाद-यश्च स्युः ।

**शारीरकीय** इत्यत्र वृद्धाच्छः ।

**सोऽस्येति** । प्रथमान्तादस्य निवास इत्यर्थेऽणादयः स्युः ।

**तेनेति** । तृतीयान्तात्प्रोक्तमित्यर्थेऽणादयः स्युः । **पाणिनीयमिति** । वृद्धाच्छ इतिच्छ । **तस्येति** । षष्ठ्यन्ताद्विकार इत्यर्थेऽणादयः स्यु । इह अनिति

१ द्वितीयान्त समर्थ सुबन्त से 'अधिकृत्य कृत' इस अर्थ में अणादि प्रत्यय हों जो किया गया हो वह यदि ग्रन्थ हो तो ।

२ तत्तत्प्रातिपदिक प्रकृतिक प्रथमान्त सुबन्त समर्थ से 'अस्य निवास' इस अर्थ में अणादि प्रत्यय हों ।

३ तत्तत् शब्द प्रकृतिक तृतीयान्तसमर्थ सुबन्त से प्रोक्त इस अर्थ में अणादि-प्रत्यय हों ।

४ तत्तत्प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से इदम्—अर्थ में अणादि प्रत्यय हों ।

५ तत्तत्प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से विकार अर्थ में अणादि प्रत्यय हो ।

६ अश्मन् शब्द की टि का लोप हो विकार अर्थ में ।

आश्मः । भास्मनः । मार्त्तिकः ॥

**अवयवे च प्राण्योषधिवृक्षेभ्यः । ४ । ३ । १३५ ॥**

चाद्विकारे । मयूरस्याऽवयवो विकारो वा मायूरः । मौर्वं काण्डं भस्म वा । पैप्पलम् ॥

**मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः । ४ । ३ । १४३ ॥**

प्रकृतिमात्रान्मयड्वा स्यात् विकारावयवयोः । अश्ममयम् । आश्मनम् । अभक्ष्येत्यादि किम् ? । मौद्गः सूपः । कार्पासम्-आच्छादनम् ॥

**नित्यं वृद्धशरादिभ्यः । ४ । ३ । १४४ ॥**

आम्रमयम् । शरमयम् ॥

**गोश्च पुरीषे । ४ । ३ । १४५ ॥**

प्रकृतिभावः प्राप्तः । मृत्तिकाया विकारः-**मार्त्तिकः** । **अवयवे चेति** । षष्ठ्यन्तेभ्य एभ्योऽवयवे विकारे चाऽणादयः स्युः । मूर्वाया अवयवो विकारो वा-**मौर्वं** काण्डं, भस्म वा । काण्डमवयवः, **भस्म**-विकारः । [ मूर्वा=ओषधिभेदः ] ।

**मयड्वेति** । षष्ठ्यन्तात्प्रकृतिमात्रान्मयड्वा स्यादेतयोः=विकारावयवयोरर्थयोः, न तु भक्ष्ये आच्छादने च ।

**नित्यमिति** । एभ्यो नित्यं मयट् विकारावयवयोरर्थयोः ।

आम्रस्य विकारः-**आम्रमयम्** । ( 'अमावट' 'अमरस' ) ।

**गोश्चेति** । गोशब्दात्पुरीषेऽर्थे मयट् । गोर्विकारो गव्यं-दुग्धादि ।

१ प्राणी वाचक व ओषधि वाचक शब्द प्रकृतिक षष्ठ्यन्त से अवयव और विकार अर्थ में अणादि प्रत्यय हो ।

२ यत्किञ्चित्प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से मयट् प्रत्यय विकल्प से हो विकार और अवयव अर्थ में । भक्ष्य और आच्छादन अर्थ में न हो ।

३ वृद्ध सञ्ज्ञक और शरादि गणपठित शब्द प्रकृतिक षष्ठ्यन्त समर्थ से नित्य ही मयट् प्रत्यय हो, विकार और अवयव अर्थ में ।

४ गोशब्द प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से पुरीष अर्थ में मयट् प्रत्यय हो ।

गोः पुरीषं गोमयम् ॥

गोपयसोर्यत्[1] ४ । ३ । १६० ॥

गव्यम् । पयस्यम् ॥

इति विकारार्थकाः । ( इति प्राग्दीव्यतीयाः ) ॥ ६ ॥

# अथ ठगधिकारः

प्राग्वहतेष्ठक्[2] ४ । ४ । १ ॥

'तद्वहती'त्यतः प्राक् ठगधिक्रियते ॥

तेन दीव्यति खनति जयति जितम्[3] ४ । ४ । २ ॥

अक्षैर्दीव्यति खनति जयति जितो वा आक्षिकः ॥

संस्कृतम्[4] ४ । ४ । ३ ॥

दध्ना संस्कृतं दाधिकम् । मारीचिकम् ॥

पयसो विकारः-पयस्यं (='खोवा' 'मावा' 'मलाई' 'रबड़ी' आदि )।
**प्रागिति**। 'तद्वहति रथयुगप्रासङ्ग'मित्यत प्राक्। **तेनेति**। तृतीयान्तादेषु चतुर्ष्वर्थेषु ठक्। **संस्कृतमिति**। तृतीयान्तात्संस्कृतमित्यर्थे ठक्। मरीचैः संस्कृतं **मारीचिकम्**। ( **संस्कृत**='भावित'। ( छौंक दिया हुआ' ) ।

१ गो शब्द और पयस्शब्द प्रकृतिक षष्ठयन्त समर्थ से विकार अर्थ में यत् प्रत्यय हो।

२ तद्वहति रथयुगप्रासङ्गम्-इस सूत्र से पूर्व २ ठक् प्रत्यय का अधिकार है

३ तृतीयान्त सुबन्त समर्थ से दीव्यति-खनति-जयति-जितम्-इन ' चारो अर्थों में ठक् प्रत्यय हो ।

४ तृतीयान्त सुबन्त समर्थ से संस्कृत अर्थ में ठक् प्रत्यय हो ।

तरति[1] ४ । ४ । ५ ॥

तेनेत्येव । उडुपेन तरति औडुपिकः ॥

चरति[2] ४ । ४ । ८ ॥

तृतीयान्ताद्गच्छति भक्षयतीत्यर्थयोष्ठक् स्यात् । हस्तिना चरति हास्तिकः । दध्ना चरति दाधिकः ॥

संसृष्टे[3] ४ । ४ । २२ ॥

दध्ना संसृष्टं दाधिकम् ॥

उञ्छति[4] ४ । ४ । ३२ ॥

बदराण्युञ्छति बादरिकः ॥

रक्षति[5] ४ । ४ । ३३ ॥

समाजं रक्षति सामाजिकः ॥

शब्ददर्दुरं करोति[6] ४ । ४ । ३४ ॥

---

तरतीति । तृतीयान्तात्तरतीत्यर्थे ठक् । उडुपं=नौका । (जहाज) । हस्तिना चरति=गच्छति । दाधिक इति । दध्ना चरति=भक्षयति । संसृष्ट इति । तृतीयान्तात्संसृष्टेऽर्थे ठक् । संसृष्टं=संसिक्तम् । ( मिलाया हुआ ) । उञ्छतीति । द्वितीयान्तादुञ्छतीत्यर्थे ठक् स्यात् । उञ्छनम्=कणश आदानम् ।('दाना–दाना चुगना' 'बिनना')। रक्षतीति । द्वितीयान्ताद्रक्षतीत्यर्थे ठक् ।

---

१ तृतीयान्त सुबन्त समर्थ से 'तरति'—इस अर्थ में ठक् प्रत्यय हो ।

२ तृतीयान्त सुबन्त समर्थ से गच्छति-भक्षयति—इन अर्थों में ठक् प्रत्यय हो ।

३ तृतीयान्त सुबन्त समर्थ से संसृष्ट ( मिलाया हुआ ) इस अर्थ में ठक् प्रत्यय हो ।

४ द्वितीयान्त सुबन्त समर्थ से 'उञ्छति' इस अर्थ में ठक् प्रत्यय हो ।

५ द्वितीयान्त सुबन्त समर्थ से 'रक्षति' इस अर्थ में ठक् प्रत्यय हो ।

६ शब्द और दर्दुर प्रकृतिक द्वितीयान्त सुबन्त समर्थ से करोति–इस अर्थ में ठक् प्रत्यय हो ।

शब्दं करोति शाब्दिकः । दर्दुरं करोति दार्दुरिकः ॥

धर्मं[१] चरति । ४ । ४ । ४१ ॥

धार्मिकः । अधर्माच्चेति वक्तव्यम् । [२]

शिल्पम्[३] । ४ । ४ । ५५ ॥

मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः ॥

प्रहरणम्[४] ४ । ४ । ५७ ॥

तदस्येत्येव । असिः प्रहरणमस्य आसिकः । धानुष्कः ॥

शीलम्[५] । ४ । ४ । ६१ ॥

अपूपभक्षणं शीलमस्य आपूपिकः ॥

निकटे[६] वसति । ४ । ४ । ७३ ॥

नैकटिको भिक्षुकः ॥

इति ठगधिकारः ॥ ७ ॥

**दर्दुरः** वाद्यभाण्डविशेषः । **दार्दुरिकः**=कुलालः । **धर्ममिति** । द्वितीयान्ताद्धर्मशब्दाच्चरतीत्यर्थे ठक् । अधर्मं चरति–आधर्मिकः ।

**शिल्पमिति** । प्रथमान्ताच्छिल्पमित्यर्थे ठक् ।

**प्रहरणमिति** । प्रथमान्तात्प्रहरणमस्येत्यर्थे ठक् ।

**धानुष्क इति** । इह इसुसुक्तान्तादिति कः ।

**शीलमिति** । प्रथमान्ताच्छीलमस्येत्यर्थे ठक् । **निकट इति** । सप्तम्यन्तान्निकटशब्दाद्वसतीत्यर्थे ठक् । **भिक्षुक इति** । संन्यासी हि ग्रामस्य

१ धर्म प्रकृतिकद्वितीयान्त सुबन्त समर्थ में 'चरति'–इस अर्थ से ठक् प्रत्यय हो ।

२ अधर्म शब्द प्रकृतिक द्वितीयान्त समर्थ से चरति–इस अर्थ में ठक् प्रत्यय हो ।

३ तत्तत्प्रातिपदिकप्रकृतिक प्रथमान्त सुबन्त समर्थ से अस्य शिल्पम्–इस अर्थ में ठक् प्रत्यय हो ।

४ प्रथमान्त सुबन्त समर्थ से 'अस्य प्रहरणम्'–इस अर्थ में ठक् प्रत्यय हो ।

५ प्रथमान्त सुबन्त समर्थ से 'शीलमस्य' इस अर्थ में ठक् प्रत्यय हो ।

६ निकट शब्द प्रकृतिक सप्तम्यन्त सुबन्त समर्थ से वसति–इस अर्थ में ठक् हो ।

# अथ प्राग्घितीयाः ।

प्राग्घिताद्यत् । ४ । ४ । ७५ ॥

'तस्मै हित'मित्यतः प्राग् यदधिक्रियते ॥

तद्वहति रथयुगप्रासङ्गम् । ४ । ४ । ७६ ॥

रथं वहति रथ्यः । युग्यः । प्रासङ्ग्यः ॥

धुरो यड्ढकौ । ४ । ४ । ७७ ॥

'हलि चे'ति दीर्घे प्राप्ते—॥

न भकुर्छुराम् । ८ । २ । ७९ ॥

भस्य कुर्छुरोश्चोपधाया इको दीर्घो न स्यात् । धुर्यः । धौरेयः ॥

नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु ४ । ४ । ९१ ॥

निकटे वसति, भिक्षार्थं च ग्राममायाति । तद्वहतीति । द्वितीयान्तेभ्यो रथादिभ्यो यत्स्याद्वहतीत्यर्थे । रथ्यः=वृषभाश्वादिः । युगं=रथाङ्गम् । प्रासङ्गः वृषभस्कन्धे आसञ्जनीय काष्ठम् ।

धुर इति । द्वितीयान्ताद्धुर्शब्दात् वहतीत्यर्थे यत्-ढकौ स्तः । धुरं वहति धुर्यः । नौवय इति । नावादिभ्योऽष्टभ्यस्तार्यादिष्वर्थेषु यत्स्यात् । तार्यं=

१ तस्मै हितम्—इस सूत्र से पूर्व २ यत् प्रत्यय का अधिकार जानना ।

२ रथ—युग—प्रासङ्ग शब्द प्रकृतिक द्वितीयान्त सुबन्त समर्थ से 'वहति' इस अर्थ में यत्प्रत्यय हो ।

३ धुर्—शब्द प्रकृतिक द्वितीयान्त सुबन्त समर्थ से 'वहति'—इस अर्थ में यत् और ढक् प्रत्यय हो ।

४ भसञ्ज्ञक कुर् और छुर् शब्द की उपधा भूत जो इक् उस को दीर्घ नहीं हो ।

५ नौ—वयस्—धर्म—विष—मूल—मूल—सीता तुला—एतत् शब्दप्रकृतिक तृतीयान्त सुबन्त समर्थ से क्रम से तार्य—तुल्य—प्राप्य—वध्य—आनाम्य—सम—समित—सम्मित—इन अर्थों में यत् प्रत्यय हो ।

नावा तार्य नाव्यं जलम् । वयसा तुल्यो वयस्यः । धर्मेण प्राप्यं धर्म्यम् । विषेण वध्यो विष्यः । मूलेन आनाम्यं मूल्यम् । मूलेन समो मूल्यः । सीतया समितं सीत्यं क्षेत्रम् । तुलया संमितं तुल्यम् ॥

**तत्र साधुः ४।४।९८॥**[1]

अग्रे साधुः—अग्र्यः । सामसु साधुः सामन्यः । 'ये चाभावकर्मणो'रिति प्रकृतिभावः । कर्मण्यः । शरण्यः ॥

**सभाया यः ४।४।१०५॥**[2]

सभ्यः

**इति यतोऽवधिः । इति प्राग्घितीयाः ॥ ८ ॥**

सन्तरणीयम् । शक्यार्थे ण्यत् । वयस्यः=सखा । धर्म्यं=स्वर्गादि । **आनाम्यमिति** । मूलं नाम पटादीनामुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं धनम् । ('मूलधन' 'पूंजी') । आनाम्यञ्च मूलेन लाभार्थं यद्द्रव्यमात्मानं प्रति अवशेषीक्रियते (आत्मन उपकारकं क्रियते) तत् । (लाभः) । लोके तु यावता द्रव्येण पटादिकं विक्रीयते तन्मूल्यशब्देनोच्यते । एवञ्च लाभार्थे व्युत्पन्नस्य तस्य तत्र निरूढा लक्षणा बोध्या । मूलेन—वृद्धेन—**समः**=तुल्यः ।

**सीता**—हलदण्डः । रेखा च । तया **समितं**=सङ्गतं=निम्नोन्नतादिरहितं कृतम् । समीकृतमिति यावत् । **संमितं**=तुलितम् ।

**साधुः**=कुशलः । कर्मणि साधुः—कर्मण्यः । शरणे साधुः—शरण्यः । 'शरणं गृहरक्षित्रो'रित्यमरः । सभायां साधुः—सभ्यः ।

१ तत्तत्प्रातिपदिक प्रकृतिक सप्तम्यन्त सुबन्त समर्थ से साधु (कुशल) अर्थ में यत प्रत्यय हो ।

२ सभाशब्दप्रकृतिक सप्तम्यन्त सुबन्त समर्थसे साधु अर्थमें य प्रत्यय हो।

# अथ छयतोरधिकारः

**[1]प्राक् क्रीताच्छः ५ । १ । १ ॥**

'तेन क्रीत'मित्यतः प्राक् छोऽधिक्रियते ॥

**[2]उगवादिभ्यो यत् ५ । १ । २ ॥**

प्राक् क्रीतादित्येव । उवर्णान्ताद्गवादिभ्यश्च यत् स्यात् । छस्यापवादः । शङ्कवे हितं शङ्कव्यं दारु । गव्यम् । *[3]नाभि नभं च । नभ्योऽक्षः । नभ्यमञ्जनम् ॥

**[4]तस्मै हितम् ५ । १ । ५ ॥**

वत्सेभ्यो हितो वत्सीयो गोधुक् ॥

**[5]शरीरावयवाद्यत् ५ । १ । ६ ॥**

दन्त्यम् । कण्ठ्यम् । नस्यम् ।

---

शङ्कुः कीलकम् । ( खूंटा ) । गव्यं-गुडचणकादिकम् । अक्षः-रथाङ्गनाभिप्रवेशनीयं काष्ठम् । अञ्जन=तैलादिदानम् । ( ओंगाना ) । गोधुक्= गोपालः । दन्तेभ्यो हितं-दन्त्यम् । नासिकायै हित-नस्यम् । 'नस् नासिकाया' इति नसादेशः ।

१ तेन क्रीतम् इस सूत्र से पूर्व २ छ प्रत्यय का अधिकार है ।

२ तेन क्रीतम्-इस सूत्र से पूर्व २ उवर्णान्त जो शब्द-और गवादि गणपठित जो शब्द-तत्प्रकृतिक चतुर्थ्यन्त सुबन्त समर्थ से हित अर्थ में यत् प्रत्यय हो ।

३ नाभि शब्द के स्थान में नभ आदेश हो, यत् प्रत्यय परे रहते ।

४ तत्तत् प्रातिपदिक प्रकृतिक चतुर्थ्यन्त सुबन्त समर्थ से हित अर्थ में छ प्रत्यय हो ।

५ शरीराऽवयववाचक शब्दप्रकृतिक चतुर्थ्यन्त सुबन्त समर्थ से हित अर्थ में यत् प्रत्यय हो ।

[1] आत्मन्विश्वजनभोगोत्तरपदात्खः ५ । १ । ९ ॥

[2] आत्माध्वानौ खे ६ । ४ । १६९ ॥

एतौ खे प्रकृत्या स्तः । आत्मने हितम् आत्मनीनम् । विश्वजनीनम् । मातृभोगीणः ।

इति छयतोः पूर्णोऽवधिः ( इति प्राक्क्रीतीयाः ) ॥ ९ ॥

## अथ ठञधिकारः ।

[3] प्राग्वतेष्ठञ् ५ । १ । १८ ॥

'तेन तुल्य'मिति वतिं वक्ष्यति ततः प्राक् ठञधिक्रियते ॥

[4] तेन क्रीतम् ५ । १ । ३७ ॥

सप्तत्या क्रीतं साप्ततिकम् । प्रास्थिकम् ॥

[5] सर्वभूमिपृथिवीभ्यामणञौ ५ । १ । ४१ ॥

[6] तस्येश्वरः ५ । १ । ४२ ॥

**विश्वजनीनमिति**। विश्वो जनः=विश्वजन , विश्वजनाय हितं-विश्वजनीनम्। कर्मधारयादेवेष्यते। **मातृभोगाय**=मातृशरीराय हित -मातृभोगीणः। अट्कुप्वाङिति णत्वम् । **वक्ष्यति** सूत्रकृत् । **तेनेति**। तृतीयान्तात् क्रीतमित्यर्थे ठञ्। साप्ततिकं यानादिकम्। प्रस्थेन तन्मितेन धान्यादिना क्रीतं-प्रास्थिक= तैलं-शाकादिकम्। **सर्वेति** । सर्वभूमिशब्दात्पृथिवीशब्दाच्च अणञौ स्त इत्यर्थः । अनुशतिकादिषु सर्वभूमिशब्दः पठ्यते, अत उभयपदवृद्धिः ।

१ आत्मन्-विश्वजन- और भोग ये उत्तर पद में है जिसके ऐसे प्रातिपदिक प्रकृतिक चतुर्थ्यन्त समर्थ सुबन्त से हित अर्थ में खप्रत्यय हो।

२ आत्मन् और अध्वन्-शब्द प्रकृति से रहते हैं खप्रत्यय परे रहते ।

३ 'तेन तुल्यं क्रिया चेद्वतिः'-इस सूत्र से पूर्व २ ठञ् प्रत्यय का अधिकार है।

४ तृतीयान्त समर्थ सुबन्त से क्रीत इस अर्थ में ठञ् प्रत्यय हो ।

५ सर्वभूमि और पृथिवी शब्द प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से निमित्तादि अर्थ में अण अञ प्रत्यय हों।

६ षष्ठ्यन्त से ईश्वर अर्थ मे अण् और अञ् प्रत्यय हो।

सर्वभूमिपृथिवीभ्यामणञौ स्तः ॥ अनुशतिकादीनां च ।
सर्वभूमेरीश्वरः सार्वभौमः । पार्थिवः ॥

पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् । ५ । १ । ५९ ॥

एते रूढिशब्दा निपात्यन्ते ॥

तदर्हति । ५ । १ । ६३ ॥

लब्धुं योग्यो भवतीत्यर्थे द्वितीयान्ताट्ठञादयः स्युः । श्वेतच्छत्रमर्हति श्वैतच्छत्रिकः ॥

दण्डादिभ्यो यत् ५ । १ । ६६ ॥

एभ्यो यत्स्यात् । दण्डमर्हति दण्ड्यः । अर्घ्यः । वध्यः ॥

**सार्वभौमश्चक्रवर्त्ती** । पृथिव्या ईश्वरः पार्थिवः=राजा ।

**पङ्क्तीति** । पञ्च पदानि ( =पादाः ) परिमाणमस्य–**पङ्क्तिः**–छन्दोभेदे क्रमभेदे दशसङ्ख्यायाञ्च । अत्र पञ्चन्शब्दस्य टिलोपः, तिप्रत्ययः, चोः कुरिति कुत्वम् । द्वौ दश तौ परिमाणमस्य विंशतिः । प्रकृतेर्विनादेशः, शतिप्रत्ययः, अपदत्वञ्च निपात्यते । तेन नस्यानुस्वारः । एवं–त्रयो दशतः परिमाणमस्य–त्रिंशत् । चत्वारो दशतः परिमाणमस्य चत्वारिंशत् । एवमग्रेऽपि । दश दशत परिमाणमस्य शतम् । अत्र प्रत्ययादेशादयः स्वयमूहनीयाः । दण्ड्यः=अपराधी । अर्घमर्हति–**अर्घ्यः**=आचार्यातिथिराजादिः ।

---

१ अनुशतिकादिगणपठित शब्दों को उभयपद वृद्धि हो ।

२ पङ्क्ति–विंशति–आदि शब्द निपातन से साधु होते हैं ।

३ द्वितीयान्त समर्थ सुबन्त से लब्धुं योग्यो भवति–इस अर्थ में ठञादि प्रत्यय हों ।

४ दण्डादि गणपठित शब्द प्रकृतिक द्वितीयान्त समर्थ सुबन्त से यत् प्रत्यय हो ।

तेन[1] निर्वृत्तम् ५ । १ । ७९ ॥

अह्ना निर्वृत्तम् आह्निकम् ॥

इति ठञोऽवधिः ( इति प्राग्वतीयाः ) ॥ १० ॥

## अथ त्वतलोरधिकारः

तेन[2] तुल्यं क्रिया चेद्वतिः ५ । १ । ११५ ॥

ब्राह्मणेन तुल्यं ब्राह्मणवदधीते । क्रिया चेदिति किम् ? गुणतुल्ये मा भूत् । पुत्रेण तुल्यः स्थूलः ॥

तत्र[3] तस्येव ५ । १ । ११६ ॥

मथुरायामिव मथुरावत् स्रुघ्ने प्राकारः । चैत्रस्येव चैत्रवन्मैत्रस्य गावः ॥

तस्य[4] भावस्त्वतलौ ५ । १ । ११९ ॥

प्रकृतिजन्यबोधे प्रकारो भावः । गोर्भावो गोत्वम् । गोता ।

**तेनेति** । तृतीयान्तात्कालवाचिनष्ठञ् । **आह्निकमिति** । अह्नष्टखोरेवेति नियमान्नस्तद्धित इति टिलोपो न ।

**तेनेति** । तृतीयान्तात्तुल्यमित्यर्थे वतिः, यत्तुल्यं क्रिया चेत्सा भवति ।

**तत्रेति** । सप्तम्यन्तात्षष्ठ्यन्ताच्च इवार्थे वतिः ।

**तस्येति** । षष्ठ्यन्तात्त्वतलौ स्तो भावे । **भावइति** । यथा-द्रव्यत्वं जातिः । प्रकृतिजन्यबोधे प्रकारत्वात् । 'गोते'त्यत्र 'तलन्त स्त्रिया'मिति स्त्रीलिङ्गता ।

१ काल वाचक तृतीयान्त समर्थ सुबन्त से निर्वृत्त ( तैयार हुआ ) इस अर्थ में ठञ् प्रत्यय हो ।

२ तत्तत्प्रातिपादिक प्रकृतिक तृतीयान्त समर्थ सुबन्त से 'तुल्य' अर्थ में वति प्रत्यय हो । जिससे तुल्य हो वह यदि क्रिया हो तो ।

३ सप्तम्यन्त अथवा षष्ठ्यन्त-समर्थ सुबन्त से इव अर्थ में वति प्रत्यय हो ।

४ तत्तत्प्रातिपदिक प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से भाव अर्थ में त्व और तल् प्रत्यय हो । प्रकृति जन्य जो बोध-उसमें जो प्रकारीभूत हो उस को 'भाव' कहते हैं ।

त्वान्तं[1] क्लीबम् । [ तलन्तं स्त्रियाम् ] ।

आ च त्वात्[2] ५ । १ । १२० ॥

'ब्रह्मणस्त्व' इत्यतः प्राक् त्वतलावधिक्रियेते । अपवादैः सह समावेशार्थमिदम् । चकारो नञ्स्नञ्भ्यामपि समावेशार्थः । स्त्रिया भावः स्त्रैणम् । स्त्रीत्वम् । स्त्रीता । पौंस्नम् । पुंस्त्वम् । पुंस्ता ॥

पृथ्वादिभ्य इमनिज्वा[3] ५ । १ । १२२ ॥

वावचनमणादिसमावेशार्थम् ॥

र[4] ऋतो हलादेर्लघोः ६ । ४ । १६१ ॥

हलादेर्लघोर्ऋकारस्य रः स्यादिष्ठेमेयस्सु परतः ॥

पृथुमृदुभृशकृशदृढपरिवृढानामेव रत्वम्[5] ।

टेः[6] ६ । ४ । १५५ ॥

भस्य टेर्लोप इष्ठेमेयस्सु । पृथोर्भावः प्रथिमा ॥

इगन्ताच्च लघुपूर्वात् ५ । १ । १३१ ॥

नञ्स्नञ्भ्यां—स्त्रीपुंसाभ्यामिति विहिताभ्याम्। वावचनमिति । इगन्तलघुपूर्वेषु पृथुमृदुप्रभृतिषु 'इगन्ताच्च लघुपूर्वा'दित्यणः समावेशः, चण्डखण्डादिषु 'गुणवचनब्राह्मणादिभ्य'इति ष्यञः समावेश, बालवत्सादिषु 'प्राणभृज्जाती'ति

१ त्व प्रत्ययान्त जो प्रातिपदिक वह नपुंसक लिङ्ग में होता है । और तल् प्रत्ययान्त स्त्रीलिङ्ग में होता है ।

२ 'ब्रह्मणस्त्व.' इस सूत्र से पूर्व त्व और तल् प्रत्यय का अधिकार जानना।

३ पृथ्वादिगणपठित षष्ठ्यन्त समर्थ सुबन्त से भाव अर्थ में इमनिच् प्रत्यय हो विकल्प से ।

४ हलादि जो लघु ऋकार उसको रभाव हो इष्ठन्—इमनिच्—ईयसुन् प्रत्यय परे रहते ।

५ पृथु-मृदु-भृश-कृश-दृढ परिवृढ इन शब्दों के ही लघु ऋकार को रभाव हो।

६ भसञ्ज्ञककी टि का लोप हो इष्ठन् इमन् ईयस् प्रत्यय परे रहते ।

इगन्ताल्लघुपूर्वात् प्रातिपदिकाद्भावेऽण् प्रत्ययः । पार्थवम् । म्रदिमा । मार्दवम् ॥

**[2] वर्णदृढादिभ्यः ष्यञ् च ५ । १ । १२३ ॥**

चादिमनिच् ॥ शौक्ल्यम् । शुक्लिमा । दार्ढ्यम् । द्रढिमा ॥

**[3] गुणवचनब्राह्मणादिभ्यः कर्मणि च ५ । १ । १२४ ॥**

चाद्भावे ॥ जडस्य भावः कर्म वा जाड्यम् । मूढस्य भावः कर्म वा मौढ्यम् । ब्राह्मण्यम् । आकृतिगणोऽयम् ॥

**[4] सख्युर्यः ५ । १ । १२६ ॥**

सख्युर्भावः कर्म वा सख्यम् ॥

**[5] कपिज्ञात्योर्ढक् ५ । १ । १२७ ॥**

कापेयम् । ज्ञातेयम् ॥

**[6] पत्यन्तपुरोहितादिभ्यो यक् ५ । १ । १२८ ॥**

वयोवचनलक्षणस्याऽत्र समावेश इत्याशयः । **पृथुता**=स्थूलता । **वर्णेति** । वर्णवाचकेभ्यो दृढादिभ्यश्च ष्यञ्, इमनिच्च ।

जाड्यं=मूर्खता । **मौढ्यं**=मूढता । **ब्राह्मण्यं**=तपःसम्पत् । **कपीति** । आभ्यां ढक् स्याद्भावकर्मणोः । कपेर्भावः कर्म वा कापेयम् । सेनापतेर्भावः कर्म

१ इगन्त जो लघुपूर्व प्रातिपदिक उससे भाव में अण् प्रत्यय हो ।

२ वर्णवाचक और दृढादिगणपठित शब्द प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से भाव अर्थ में ष्यञ् प्रत्यय हो । चात्-इमनिच् प्रत्यय भी हो ।

३ गुणवाचक और ब्राह्मणादि गणपठित शब्द प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से कर्म और भाव अर्थ में ष्यञ् प्रत्यय हो ।

४ सखिशब्द प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से कर्म और भाव अर्थ में 'य' प्रत्यय हो ।

५ कपि और ज्ञाति शब्द प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से भाव-कर्म में ढक् प्रत्यय हो ।

६ पत्यन्त और पुरोहितादि गणपठित शब्द प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से भाव कर्म अर्थ में यक् प्रत्यय हो ।

सैनापत्यम् । पौरोहित्यम् ॥

इति त्वतलोरधिकारः ॥ ११ ॥

## अथ भवनाद्यर्थकाः ।

**धान्यानां भवने क्षेत्रे खञ् ५ । २ । १ ॥**

भवत्यस्मिन्निति भवनम् । मुद्गानां भवनं क्षेत्रं मौद्गीनम् ॥

**व्रीहिशाल्योर्ढक् ५ । २ । २ ॥**

व्रैहेयम् । शालेयम् ॥

**हैयङ्गवीनं संज्ञायाम् ५ । २ । २३ ॥**

ह्योगोदोहशब्दस्य हियङ्गुरादेशो विकारार्थे खञ्च निपात्यते । दुह्यते इति दोहः—क्षीरम् । ह्योगोदोहस्य विकारः—हैयङ्गवीनं नवनीतम् ॥

**तदस्य सञ्जातं तारकादिभ्य इतच् ५ । २ । ३६ ॥**

वा **सैनापत्यम्** । पुरोहितस्य भावः कर्म वा **पौरोहित्यम्** । **व्रीहीति** । आभ्यां ढक् स्यादुक्तेऽर्थे । व्रीहीणां शालीनां च भवनं क्षेत्रं-व्रैहेयम् । शालेयम् । **दोह इति** । कर्मणि घञ् । ह्योगोदोहस्य=पूर्वदिने दुग्धस्य गोपयसो विकार इत्यर्थः । [ मक्खन ] । **तदस्येति** । प्रथमान्तेभ्य एभ्योऽस्य सञ्जात-

१ धान्यवाचक षष्ठ्यन्त समर्थ सुबन्त से 'भवने क्षेत्रे' अर्थ में खञ् प्रत्यय हो । ( भवन=होने योग्य ) ।

२ व्रीहि और शालि शब्द प्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से 'भवने क्षेत्रे' इस अर्थ में ढक् प्रत्यय हो ।

३ 'हैयङ्गवीनम्'—यह शब्द साधु हो संज्ञा में । [ अर्थात् ह्योगोदोह शब्द को हियङ्गु आदेश हो और खञ् प्रत्यय हो विकार अर्थ में ] ।

४ तारकादिगणपठितशब्दप्रकृतिक प्रथमान्त समर्थ सुबन्त से 'अस्य-सञ्जातम्' इस अर्थ में इतच् प्रत्यय हो ।

तारकाः सञ्जाता अस्य तारकितं नभः । पण्डितः । आकृतिगणोऽयम् ॥

**प्रमाणे[1] द्वयसज्दघ्नञ्मात्रचः ५ । २ । ३७ ॥**

तदस्येत्यनुवर्त्तते । ऊरू प्रमाणमस्य ऊरुद्वयसम् । ऊरुदघ्नम् । ऊरुमात्रम् ॥

**यत्तदेतेभ्यः[2] परिमाणे वतुप् ५ । २ । ३९ ॥**

यत्परिमाणमस्य–यावान् । तावान् । एतावान् ॥

**किमिदम्भ्यां[3] वो घः ५ । २ । ४० ॥**

आभ्यां वतुप् स्याद्वकारस्य घश्च ॥

**इदंकिमोरीश्की[4] ६ । ३ । ९० ॥**

दृग्दृशवतुषु इदम ईश् किमः कीः । कियान् । इयान् ॥

**संख्याया[5] अवयवे तयप् ५ । २ । ४२ ॥**

पञ्च अवयवा अस्य पञ्चतयम् ॥

मित्यर्थे इतच् स्यात् । 'सञ्जात'मिति एकत्वमविवक्षितम् । सामान्ये नपुसकं, तेन पुंसि स्त्रियामपि द्विवचनादौ चेदं सूत्रं प्रवर्त्तते एव। **पण्डा**–विवेकशालिनी बुद्धिः- सञ्जाताऽस्य–**पण्डितः** ।

**प्रमाण इति** । प्रथमान्तादस्य प्रमाणमित्यर्थे एते प्रत्ययाः स्युः । **यावानिति**। 'आ सर्वनाम्न' इत्याकारोऽन्तादेशः। यत्प्रमाणमस्य **यावान्**।

१ प्रथमान्त समर्थ सुबन्त से 'अस्य प्रमाणम्' इस अर्थ में–द्वयसच्–दघ्नच् और मात्रच् प्रत्यय हों ।

२ यत्–तत् और एतत् शब्द प्रकृतिक प्रथमान्त समर्थ सुबन्त से 'अस्य परिमाणम्' इस अर्थ में वतुप् प्रत्यय हो ।

३ किम् इदम् शब्दसे वतुप् हो, वकार को घकार हो ।

४ इदम् को 'ईश्' किम् को 'की' आदेश हो, दृग् दृश वतु परे रहते ।

५ सङ्ख्यावाचकशब्दप्रकृतिक प्रथमान्त समर्थ सुबन्त से 'अवयवाः–अस्य' इस अर्थ में तयप् प्रत्यय हो ।

**द्वित्रिभ्यां तयस्यायज्वा[1] ५ । २ । ४३ ॥**

द्वयम् । द्वितयम् । त्रयम् । त्रितयम् ॥

**उभादुदात्तो नित्यम्[2] ५ । २ । ४४ ॥**

उभशब्दात्तयपोऽयच् स्यात्स चोदात्तः । उभयम् ॥

**तस्य पूरणे डट्[3] ५ । २ । ४८ ॥**

एकादशानां पूरण एकादशः ॥

**नान्तादसंख्यादेर्मट्[4] ५ । २ । ४९ ॥**

डटो मडागमः । पञ्चानां पूरणः पञ्चमः । नान्तात्किम् ? ॥

**ति विंशतेर्डिति[5] ६ । ४ । १४२ ॥**

विंशतेर्भस्य तिशब्दस्य लोपो डिति परे । विंशः । असंख्यादेः किम् ? । एकादशः ॥

**षट्कतिकतिपयचतुरां थुक्[6] ५ । २ । ५१ ॥**

---

तत् प्रमाणमस्य तावान् । द्वाववयवौ यस्य तद्-**द्वयम्** । एवम्-त्रयोऽवयवा यस्य तत्-**त्रयम्** । उभौ अवयवौ यस्य तत्-**उभयम्** ।

विंशतेः पूरणः **विंशः** ।

१ द्वि-त्रि शब्द से विहित जो तयप् प्रत्यय उसको अयच् आदेश हो विकल्प करके ।

२ उभशब्दप्रकृतिक प्रथमान्त समर्थ सुवन्त से विहित जो तयप्-उसको अयच् आदेश से हो । और वह उदात्त हो ।

३ षष्ठयन्त सुवन्त समर्थ से पूरण इस अर्थ में डट् प्रत्यय हो ।

४ सङ्ख्या आदि में नहीं है जिसके ऐसा जो नान्त सङ्ख्यावाची उससे परे जो डट् प्रत्यय उसको मट् का आगम हो ।

५ भसञ्ज्ञक जो विंशति शब्द उसके 'ति' का लोप हो, डित् परे रहते ।

६ षट्-कति-कतिपय और चतुर् शब्द-इनको थुक् आगम हो, डट् परे रहते ।

एषां थुगागमः स्याड्डटि । षण्णां पूरणः षष्ठः । कतिथः । कतिपयशब्दस्याऽसङ्ख्यात्वेऽप्यत एव ज्ञापकाड्डट् । कतिपयथः । चतुर्थः ॥

**द्वेस्तीयः ५ । २ । ५४ ॥**

डटोऽपवादः । द्वयोः पूरणो द्वितीयः ॥

**त्रेः सम्प्रसारणं च ५ । २ । ५५ ॥**

तृतीयः ॥

**श्रोत्रियंश्छन्दोऽधीते ५ । २ । ८४ ॥**

श्रोत्रियः । वेत्यनुवृत्तेः—छान्दसः ॥

**पूर्वादिनिः ५ । २ । ८६ ॥**

पूर्वं कृतमनेन पूर्वी ॥

कतीनां पूरणः-**कतिथः** । कतिपयानां पूरणः-**कतिपयथः** । **ज्ञापकादिति** । तस्य पूरणे डट्' इति डटः 'सङ्ख्याया अवयवे' इत्यतः 'सङ्ख्याया' इत्यनुवर्त्य विधानादिहाऽप्राप्तावप्यत एव ज्ञापकाड्डडिति भाव । **त्रेरिति** । षष्ठ्यन्तात्त्रिशब्दात्तीयप्रत्ययः स्यात्पूरणे । त्रेः सम्प्रसारणञ्चेत्यर्थः ।

छन्दः (वेदम्) अधीते इति **श्रोत्रियः**=एकशाखाध्यायी। छन्दोऽधीते इति वाक्यस्याऽर्थे श्रोत्रियन्नादेशो निपात्यते। **अनुवृत्तेरिति** । 'तावतिथं ग्रहणमिति लुग्वे'ति सूत्राद्वापदमनुवर्तते इत्यर्थः । **छान्दस** इत्यत्र तदधीते इति अध्येत्रण् ।

**पूर्वमिति** । पूर्वमिति द्वितीयान्तात्क्रियाविशेषणादिनिः । अत्र च

---

१ द्विशब्द प्रकृतिक षष्ठ्यन्त समर्थ से पूरण अर्थ में तीय प्रत्यय हो।

२ त्रिशब्दप्रकृतिक षष्ठ्यन्त समर्थ सुबन्त से तीय प्रत्यय हो, पूरण अर्थ में, और त्रिशब्द को सम्प्रसारण भी हो।

३ छन्दोऽधीते इसके अर्थ में श्रोत्रियन् आदेश निपातन हो।

४ पूर्वशब्दप्रकृतिकद्वितीयान्त क्रियाविशेषण से इनि प्रत्यय हो अनेन इस अर्थमें।

सपूर्वाच्च ५ । २ । ८७ ॥[1]

कृतपूर्वी ॥

इष्टादिभ्यश्च ५ । २ । ८८ ॥[2]

इष्टमनेन—इष्टी । अधीती ॥

इति भवनाद्यर्थकाः ॥ ११ ॥

## अथ मत्वर्थीयाः ।

तदस्यास्त्यस्मिन्निति मतुप् ५ । २ । ९४ ॥[3]

गावोऽस्याऽस्मिन्वा सन्ति गोमान् ।

तसौ मत्वर्थे १ । ४ । १९ ॥[4]

तान्तसान्तौ भसंज्ञौ स्तो मत्वर्थे प्रत्यये परे । गरुत्मान् । 'वसोः सम्प्रसारणम्' । विदुष्मान् । *गुणवचनेभ्यो मतुपो

---

'श्राद्धमनेन भुक्त'मिति सूत्रादनेनेति कर्तृपदानुवृत्त्या क्रियां विना कर्तुरसम्भवेन यां काञ्चित्क्रियामध्याहृत्य प्रत्ययो विधेयः । तदाह-कृतमिति । इष्टी=कृतयज्ञः । अधीती=अधीतविद्यः । तदस्येति । प्रथमान्तादस्यास्तीति अस्मिन्नस्तीति वाऽर्थे मतुप् स्यात् । इतिशब्दो विषयविशेषलाभार्थः । तदुक्तं

'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥' इति ॥

विद्वांसोऽस्य अस्मिन्वा सन्ति—विदुष्मान् ।

---

१ सपूर्व जो पूर्व शब्द उस से इनि प्रत्यय हो ।

२ इष्टादिशब्द प्रकृतिक समर्थ सुबन्त से इनि प्रत्यय हो अनेन इस अर्थ में ।

३ प्रथमान्त समर्थ सुबन्त से अस्यास्ति और अस्मिन्नस्ति अर्थ में मतुप् प्रत्यय हो ।

४ तान्त और सान्त की भसञ्ज्ञा हो मत्वर्थ प्रत्यय परे रहते ।

५ गुण वाचक से विहित जो मतुप् प्रत्यय उसका लुक् हो ।

लुगिष्टः । शुक्लो गुणोऽस्यास्तीति शुक्लः पटः । कृष्णः ॥

[1] प्राणिस्थादातो लजन्यतरस्याम् ५ । २ । ९६ ॥

चूडालः । चूडावान् । प्राणिस्थात्किम्? । शिखावान् दीपः । प्राण्यङ्गादेव । नेह मेधावान् ॥

[2] लोमादिपामादिपिच्छादिभ्यः शनेलचः ५।२।१०० ॥

लोमादिभ्यः शः । लोमशः । लोमवान् । रोमशः । रोमवान् । पामादिभ्यो नः । पामनः । [3] *अङ्गात्कल्याणे । अङ्गना । लक्ष्म्या [4] अच्च । लक्ष्मणः । पिच्छादिभ्य इलच् । पिच्छिलः । पिच्छवान् । उरसिलः । उरस्वान् ।

गुणेति । गुणे गुणिनि च प्रसिद्धेभ्यः शुक्लादिभ्यो मतुपो लुक् । शुक्ल इति । अत्र मतुपो लुक् । प्राणिस्थेति । प्राणिस्थात्प्राण्यङ्गवाचकादाकारान्ताल्लज्वा स्यादुक्तेऽर्थे । चूडाऽस्त्यस्य चूडालः । 'चूडा शिखा केशपाश.' इत्यमरः । (चूडा='चोटी''चुन्दी') । मेधावानिति । प्राणिस्थत्वेऽपि मेधायाःप्राण्यङ्गत्वाऽभावान्न लच् ।

लोमेति । लोमादिभ्यः शः, पामादिभ्यो न', पिच्छादिभ्य इलच्स्यादुक्तेऽर्थे । लोमानि सन्त्यस्य लोमशः । पाम अस्यातीति--पामनः । 'पाम पामा विचर्चिके'त्यमरः ।

प्रशस्तं=कल्याणमङ्गं यस्याः सा--अङ्गना । पिच्छमस्त्यस्य अस्मिन्वा

१ प्राणिस्थ ( प्राण्यङ्गवाचक ) आकारान्त शब्द प्रकृतिक प्रथमान्त से लच् प्रत्यय विकल्प से हो अस्यास्ति-इस अर्थ में ।

२ लोमादि गणपठितशब्द प्रकृतिक प्रथमान्त समर्थ सुबन्त से श प्रत्यय हो एवं पामादि और पिच्छादि गणपठित शब्द प्रकृतिक प्रथमान्त समर्थ सुबन्त से क्रम से न और इलच् प्रत्यय हो ।

३ अङ्ग शब्द से कल्याण अर्थ में न प्रत्यय हो ।

४ लक्ष्मी शब्द को अकार अन्तादेश हो और चकार से न प्रत्यय भी हो ।

दन्त[1] उन्नत उरच् ५ । २ । १०६ ॥

उन्नता दन्ताः सन्त्यस्य दन्तुरः ॥

केशाद्वो[2]ऽन्यतरस्याम् ५ । २ । १०९ ॥

केशवः । केशी । केशिकः । केशवान् ।

अन्येभ्योऽपि[3] दृश्यते । मणिवः ॥

अर्णसो[4] लोपश्च । अर्णवः ॥

अत[5] इनिठनौ ५ । २ । ११५ ॥

दण्डी । दण्डिकः ॥

व्रीह्यादिभ्यश्च[6] ५ । २ । ११६ ॥

व्रीही । व्रीहिकः ॥

अस्मायामेधास्रजो[7] विनिः ५ । २ । १२१ ॥

पिच्छिलः । प्रशस्तम्--उरोऽस्त्यस्य उरसिलः । प्रशस्ताः केशाः सन्त्यस्य केशवः । केशीत्यादि ।

मणिरस्त्यस्य-मणिवः--नागभेदः । अर्णः=जलमस्त्यस्मिन् अर्णवः= समुद्रः । अत इति । अदन्तादिनिठनौ स्तो मत्वर्थे । दण्डोऽस्यास्य दण्डी । दण्डिकः । व्रीह्येति । व्रीह्यादिभ्य इनिठनौ स्तो मत्वर्थे ।

अस्मेति । असमादिभ्यो विनिः स्यान्मत्वर्थे ।

१ दन्तशब्द प्रकृतिक प्रथमान्त समर्थ सुबन्त से उन्नत अर्थ में उरच प्रत्यय हो।

२ केश शब्द प्रकृतिक प्रथमान्त समर्थ सुबन्त से व प्रत्यय विकल्प से हो मत्वर्थ में।

३ केश शब्द से अन्य जो शब्द उनसे भी व प्रत्यय होता है।

४ अर्णस् शब्द से व प्रत्यय हो और अन्त्य अल् का लोप हो।

५ अदन्त शब्द प्रकृतिक प्रथमान्त समर्थ सुबन्त से इनि और ठन् प्रत्यय हो।

६ व्रीह्यादि गण पठित शब्द प्रकृतिक प्रथमान्त समर्थ से इन् और ठन् प्रत्यय हो मत्वर्थ में।

७ असन्त और माया--मेधा और स्रज् शब्द प्रकृतिक प्रथमान्त समर्थ सुबन्त से विनि प्रत्यय हो मत्वर्थ में।

यशस्वी । यशस्वान् । मायावी । मेधावी । स्रग्वी ॥

**[1]वाचो ग्मिनिः ५ । २ । १२४ ॥**

वाग्मी ॥

**[2]अर्शआदिभ्योऽच् ५ । २ । १२७ ॥**

अर्शांस्यस्य विद्यन्ते अर्शसः । आकृतिगणोऽयम् ॥

**[3]अहंशुभमोर्युस् ५ । २ । १४० ॥**

अहंयुः अहङ्कारवान् । शुभंयुस्तु शुभान्वितः ॥

**इति मत्वर्थीयाः ॥ १२ ॥**

## अथ प्राग्दिशीयाः ।

**[4]प्राग्दिशो विभक्तिः ५ । ३ । १ ॥**

'दिक्शब्देभ्य' इत्यतः प्राग्वक्ष्यमाणाः प्रत्यया विभक्तिसंज्ञाःस्युः॥

**[5]किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ५ । ३ । २ ॥**

'किमः सर्वनाम्नो बहुशब्दाच्चे'ति प्राग्दिशोऽधिक्रियते ॥

**[6]पञ्चम्यास्तसिल् ५ । ३ । ७ ॥**

**वाच इति** । वाचो ग्मिनिः स्यान्मत्वर्थे । **अर्श इति** । अर्शआदिभ्योऽच् स्यान्मत्वर्थे । **अर्शसः**=अर्शोरोगी ( बवासीर रोग वाला ) ।

---

१ वाच् शब्द प्रकृतिक प्रथमान्त समर्थ सुबन्त से ग्मिनि प्रत्यय हो मत्वर्थ में।

२ अर्शस् आदि गण पठित शब्द प्रकृतिक प्रथमान्त समर्थ से अच् प्रत्यय हो मत्वर्थ में ।

३ 'अहं' 'शुभं' शब्दों से युस् प्रत्यय हो मत्वर्थ में ।

४ दिक्शब्देभ्यः' इससे पूर्व वक्ष्यमाण जो प्रत्यय उनकी विभक्ति सञ्ज्ञा हो ।

५ 'किंसर्वनामबहुभ्योऽद्व्यादिभ्यः' यह दिक्शब्देभ्यः इससे पूर्व पूर्व अधिकार होता है ।

६ द्व्यादि भिन्न किंसर्वनामबहुशब्दप्रकृतिक पञ्चम्यन्त से तसिल् प्रत्यय विकल्प से हो ।

पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल्वा स्यात् ॥

**कु तिहोः[1] ७ । २ । १०४ ॥**

किमः कुः स्यात्तादौ हादौ च विभक्तौ परतः। कुतः। कस्मात्।

**इदम इश्[2] ५ । ३ । ३ ॥**

प्राग्दिशीये परे। इतः ॥

**अन्[3] ५ । ३ । ५ ॥**

एतदः प्राग्दिशीये। अनेकाल्त्वात्सर्वादेशः। अतः। अमुतः। यतः। ततः। बहुतः। द्व्यादेस्तु—द्वाभ्याम् ॥

**पर्यभिभ्यां च[4] ५ । ३ । ९ ॥**

आभ्यां तसिल् स्यात्। परितः। सर्वत इत्यर्थः। अभितः। उभयत इत्यर्थः ॥

**सप्तम्यास्त्रल्[5] ५ । ३ । १० ॥**

कुत्र। यत्र। तत्र। बहुत्र ॥

**इदमो हः[6] ५ । ३ । ११ ॥**

---

कस्मादिति कुतः। अस्मादिति-इतः। अनिति। एतदोऽनादेशः प्राग्दिशीये परतः। नकारोऽयं नानुबन्धः, किन्त्वादेशावयवः, तेन सर्वादेशः। 'न लोपः प्रातिपदिके'ति नलोपः। अमुष्मादिति अमुतः। बहुभ्य इति बहुतः। सप्तम्या इति। किंसर्वनामबहुभ्यः सप्तम्यन्तेभ्यस्त्रल्स्यात्। कस्मिन्निति

१ किम् शब्द को कु आदेश हो तादि हादि विभक्ति सञ्ज्ञक प्रत्यय परे रहते।

२ इदम् शब्द को इश् आदेश हो प्राग्दिशीय विभक्ति परे रहते।

३ एतत् शब्द को अन् आदेश हो, प्राग्दिशीय विभक्ति परे रहते।

४ परि और अभि शब्द से तसिल् प्रत्यय हो।

५ द्व्यादि भिन्न किं सर्वनाम बहुशब्द प्रकृतिक सप्तम्यन्त से त्रल् प्रत्यय हो।

६ इदम्शब्दप्रकृतिक सप्तम्यन्त से ह प्रत्यय हो।

त्रलोऽपवादः । इह ॥

**[1]किमोऽत् ५ । ३ । १२ ॥**

वाग्रहणमपकृष्यते । सप्तम्यन्तात्किमोऽद्वा स्यात् । पक्षे त्रल् ॥

**[2]क्वाऽति ७ । २ । १०५ ॥**

किमः क्वादेशः स्यादति । क्व । कुत्र ॥

**[3]इतराभ्योऽपि दृश्यन्ते ५ । ३ । १४ ॥**

पञ्चमीसप्तमीतरविभक्त्यन्तादपि तसिलादयो दृश्यन्ते । दृशिग्रहणाद्भवदादियोग एव । स भवान् । ततो भवान् । तत्र भवान् । तं भवन्तम् । ततो भवन्तम् । तत्र भवन्तम् । एवं दीर्घायुः । देवानां प्रियः । आयुष्मान् ॥

**[4]सर्वैकान्यकिंयत्तदः काले दा ५ । ३ । १५ ॥**

सप्तम्यन्तेभ्यः कालार्थेभ्यः स्वार्थे दा स्यात् ॥

**[5]सर्वस्य सोऽन्यतरस्यां दि ५ । ३ । ६ ॥**

कुत्र । बहुषु इति बहुतः । अस्मिन्निति इह । कस्मिन्निति क्व । कुत्र । एवमिति । ततो दीर्घायुः, तत्र दीर्घायु । ततो दीर्घायुषम्, तत्र दीर्घायुषमित्याद्यूह्यम् । एवं ततो देवानांप्रियः । तत्र देवानांप्रिय इत्यपि । एव तत आयुष्मान्, तत्र आयुष्मानित्यादि ।

१ किम् शब्द प्रकृतिक सप्तम्यन्त सुबन्त से अत् प्रत्यय हो विकल्प से ।

२ किम् शब्द को क्व आदेश हो अत् परे रहते ।

३ पञ्चमी सप्तमी से अतिरिक्त विभक्ति अन्त में जिसके उससे (प्रथमान्त द्वितीयान्त से ) भी तसिलादि प्रत्यय देखे जाते हैं ।

४ सर्व-एक अन्य किं-यत् तद् शब्द प्रकृतिक ( कालार्थक ) सप्तम्यन्त सुबन्त से स्वार्थ में दा प्रत्यय हो ।

५ सर्व शब्द को स आदेश हो दादि प्राग्दिशीय प्रत्यय परे रहते ।

हादौ प्राग्दिशीये सर्वस्य सो वा स्यात् । सर्वस्मिन् काले- सदा । सर्वदा । एकदा । अन्यदा । कदा । यदा । तदा । काले किम् ? । सर्वत्र देशे ॥

**इदमो र्हिल् ५ । ३ । १६ ॥**

'सप्तम्यन्तात् काले' इत्येव ॥

**एतेतौ रथोः ५ । ३ । ४ ॥**

इदम्शब्दस्य एत इत इत्यादेशौ स्तो रेफादौ थकारादौ च प्राग्दिशीये परे । अस्मिन्काले एतर्हि । काले किम् ? । इह देशे ॥

**अनद्यतने र्हिलन्यतरस्याम् ५ । ३ । २१ ॥**

कर्हि । कदा । यर्हि । यदा । तर्हि । तदा ॥

**एतदः ५ । ३ । ५ ॥**

'एत' 'इत' एतौ स्तो रेफादौ थकारादौ च प्राग्दिशीये । एत- स्मिन्काले एतर्हि ॥

**प्रकारवचने थाल् ५ । ३ । २३ ॥**

एकस्मिन् काले एकदा । तस्मिन् काले तदा ।
कस्मिन् काले ( अनद्यतने ) कर्हि । एवमग्रेऽपि ।

१ इदम् शब्द प्रकृतिक सप्तम्यन्त से काल अर्थ में र्हिल् प्रत्यय हो ।

२ इदम् शब्द को एत और इत ये आदेश हों रेफादि व थकारादि प्राग्दिशीय परे रहते ।

३ किमादि से अनद्यतन में र्हिल् प्रत्यय विकल्प से हो ।

४ एतद् शब्द को एत-इत ये आदेश हों रेफादि-थकारादि प्राग्दिशीय विभक्ति परे रहते ।

५ द्व्यादिभिन्न जो प्रकारवृत्ति जो कि सर्वनाम बहुशब्द उनसे थाल् प्रत्यय हो स्वार्थ मे ।

प्रकारवृत्तिभ्यः किमादिभ्यस्थाल् स्यात् स्वार्थे । तेन प्रकारेण—तथा । यथा ॥

इदमस्थमुः[2] ५ । ३ । २४ ॥

थालोऽपवादः ।

*एतदोऽपि[3] वाच्यः ॥

अनेन एतेन वा प्रकारेण इत्थम् ॥

किमश्च[4] ५ । ३ । २५ ॥

केन प्रकारेण कथम् ॥

इति प्राग्दिशीयाः ॥ १४ ॥

## अथ प्रागिवीयाः ।

अतिशायने तमबिष्ठनौ[5] ५ । ३ । ५५ ॥

अतिशयविशिष्टाऽर्थवृत्तेः स्वार्थे एतौ स्तः । अयमेषामतिशयेन आढ्यः—आढ्यतमः । लघुतमः । लघिष्ठः ॥

तिङश्च[6] ५ । ३ । ५६ ॥

तिङन्तादतिशये द्योत्ये तमप् स्यात् ॥

१ येन प्रकारेण-यथा ।

अयमेषामतिशयेन लघुरिति—लघिष्ठः ।

१ प्रकारवृत्ति इदम् शब्द प्रकृतिक सुबन्त से थमुप्रत्यय हो—स्वार्थ में ।

२ इदम् शब्द से थमु प्रत्यय हो ।

३ एतत् शब्द से भी थमुप्रत्यय हो ।

४ प्रकारवृत्ति किम्शब्द प्रकृतिक सुबन्त से थमुप्रत्यय हो स्वार्थ में ।

५ अतिशयविशिष्टार्थवृत्तिशब्दप्रकृतिक सुबन्त से तमप्—और इष्ठन् प्रत्यय हो स्वार्थ में ।

६ अतिशय अर्थ द्योत्य होने पर तिङन्त से तमप् प्रत्यय हो ।

**तरप्तमपौ घः[1] १ । १ । २२ ॥**

एतौ घसंज्ञौ स्तः ॥

**किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे[2] ५ । ४ । ११ ॥**

किम एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुः स्यान्न तु द्रव्यप्रकर्षे । किन्तमाम् । प्राह्णेतमाम् । पचतितमाम् । उच्चैस्तमाम् । द्रव्यप्रकर्षे तु—उच्चैस्तमस्तरुः ॥

**द्विवचनविभज्योपपदे तरबीयसुनौ[3] ५ । ३ । ५७ ॥**

द्वयोरेकस्याऽतिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः । पूर्वयोरपवादः । अयमनयोरतिशयेन लघुर्लघुतरः । लघीयान् । उदीच्याः प्राच्येभ्यः पटुतराः । पटीयांसः ॥

**प्रशस्यस्य श्रः[4] ५ । ३ । ६० ॥**

अस्य श्रादेशः स्यादजाद्योः परतः ॥

अतिशयेन किमिति किन्तमाम् । द्विवचनेति । द्वयोरर्थयोर्वचनं द्विवचनम् । येन पदेनार्थद्वयमुच्यते तद्द्विवचनमिति यावत् । विभक्तव्यं-विभज्यम् । द्विवचनञ्च विभज्यञ्चानयोः समाहारः—द्विवचनविभज्यं, तच्च तदुपपदञ्च—द्विवचनविभज्योपपदं, तस्मिन्निति विग्रहः । एवञ्च द्व्यर्थवाचके विभज्य चोपपदे सतीत्यर्थः । उपोच्चरितञ्च पदम्—उपपदं न तु कृत्रिमम्, तद्धितविधौ तदसम्भवात् । द्वयोरेकस्य अतिशये द्योत्ये विभक्तव्ये चोपपदे आभ्यामेतौ स्तः । द्विवचनोपपदमुदाहरति—अयमिति । विभज्योपपदे उदाहरति—उदीच्या इति । अत्र प्राच्या विभज्याः ।

१ तरप्—तमप् प्रत्यय की घसञ्ज्ञा हो ।

२ किम्—और एदन्त शब्द और तिङन्त और अव्यय से विहित जो घ तदन्त से आमुप्रत्यय हो । परन्तु द्रव्य प्रकर्ष में न हो ।

३ दोनों के मध्य में से एक का अतिशय द्योत्य होने पर और विभक्तव्य उपपद रहने पर सुबन्त और तिङन्त से तरप् और ईयसुन् प्रत्यय हो ।

४ प्रशस्य शब्द को श्र आदेश हो, अजादि (इष्ठन् ईयसुन्) प्रत्यय परे रहते ।

[१] प्रकृत्यैकाच् ६।४।१६३ ॥

इष्ठादिष्वेकाच् प्रकृत्या स्यात्। श्रेष्ठः। श्रेयान् ॥

[२] ज्य च ५।३।६१ ॥

प्रशस्यस्य ज्यादेशः स्यादिष्ठेयसोः। ज्येष्ठः ॥

[३] ज्यादादीयसः ६।४।१६० ॥

आदेः परस्य। ज्यायान् ॥

[४] बहोर्लोपो भू च बहोः ६।४।१५८ ॥

बहोः परयोरिमेयसोर्लोपः स्याद्बहोश्च भूरादेशः। भूमा। भूयान् ॥

[५] इष्ठस्य यिट् च ६।४।१५९ ॥

बहोः परस्य इष्ठस्य लोपः स्याद्यिडागमश्च। भूयिष्ठः ॥

[६] विन्मतोर्लुक् ५।३।६५ ॥

विनो मतुपश्च लुक् स्यादिष्ठेयसोः। अतिशयेन स्रग्वी स्रजिष्ठः। स्रजीयान्। अतिशयेन त्वग्वान्—त्वचिष्ठः। त्वचीयान् ॥

[७] ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ५।३।६७ ॥

प्रकृत्येति। तेन 'टे'रिति 'नस्तद्धिते' इति च टिलोपो न। श्रेष्ठः। ज्यादादिति। अतिशयेन प्रशस्य इति श्रेयान्। अतिशयेन प्रशस्यः—ज्येष्ठः। ज्यादिति। ज्यादुत्तरस्य ईयसुन आकारादेशः। अतिशयेन बहुः—भूमा।

१ एकाच् प्रकृति से रहे इष्ठादि परे रहते।

२ प्रशस्य को ज्य आदेश हो इष्ठन् और ईयसुन् प्रत्यय परे रहते।

३ ज्य से उत्तर जो ईयसुन् प्रत्यय उसको आकार आदेश हो।

४ बहुशब्द से परे इमनिच् और ईयसुन् प्रत्यय का लोप हो और बहुशब्द को भू आदेश हो।

५ बहुशब्द से परे इष्ठन् प्रत्यय का लोप हो और इष्ठन् को इट् का आगम हो।

६ विन् और मतुप् प्रत्यय का लुक हो इष्ठन् और ईयसुन् परे रहते।

७ ईषदसमाप्ति अर्थ में कल्पप् देश्य और देशीयर् प्रत्यय हो।

ईषदूनो विद्वान्—विद्वत्कल्पः । विद्वद्देश्यः । विद्वद्देशीयः । पचतिकल्पम् ॥

**विभाषा सुपो बहुच् पुरस्तात्तु ५ । ३ । ६८ ॥**

ईषदसमाप्तिविशिष्टेऽर्थे सुबन्ताद्बहुज्वा स्यात्स च प्रागेव न तु परतः । ईषदूनः पटुः—बहुपटुः । पटुकल्पः । सुपः किम् ? । यजतिकल्पम् ॥

**प्रागिवात्कः ५ । ३ । ७० ॥**

'इवे प्रतिकृता'वित्यतः प्राक्काधिकारः ॥

**अव्ययसर्वनाम्नामकच् प्राक् टेः ५ । ३ । ७१ ॥**

काऽपवादः । तिङश्चेत्यनुवर्तते ॥

**अज्ञाते ५ । ३ । ७३ ॥**

कस्यायमश्वः—अश्वकः । उच्चकैः । नीचकैः । सर्वकेः । (ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र सुबन्तस्य ) । युष्मकाभिः । युवकयोः । त्वयका ॥

**कुत्सिते ५ । ३ । ७४ ॥**

कुत्सितोऽश्वः—अश्वकः ॥

---

तिङन्तादुदाहरति—**पचतिकल्पमिति** । बहुपटुः=किञ्चिच्चतुरः । **अनुवर्त्तत इति** । मण्डूकप्लुत्येति भाव. । एवञ्च 'पचतकी'त्यादौ तिङन्तेभ्योऽप्यकच् ।

१ ईषदसमाप्तिविशिष्ट अर्थ में सुबन्त से बहुच् प्रत्यय हो विकल्प करके और वह प्रकृति से पूर्व में ही हो, परे न हो ।

२ 'इवे प्रतिकृतौ'-इस सूत्र से पूर्व कप्रत्यय का अधिकार है ।

३ अव्ययसञ्ज्ञक और सर्वनामसञ्ज्ञक शब्दों की टि से पूर्व अकच् प्रत्यय हो।

४ अज्ञात अर्थ में क प्रत्यय हो ।

५ तत्तत्प्रातिपदिक से कुत्सित अर्थ में क प्रत्यय हो ।

**किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच् ५ । ३ । ९२ ॥**[1]

अनयोः कतरो वैष्णवः । यतरः । ततरः ॥

**वा बहूनां जातिपरिप्रश्ने डतमच् ५ । ३ । ९३ ॥**[2]

जातिपरिप्रश्ने इति प्रत्याख्यातमाकरे । बहूना मध्ये एकस्य निर्धारणे डतमज्वा स्यात् । कतमो भवतां कठः । यतमः । ततमः । वाग्रहणमकजर्थम् । यकः । सकः ॥

**इति प्रागिवीयाः ॥ १५ ॥**

# अथ स्वार्थिकाः

**इवे प्रतिकृतौ ५ । ३ । ९६ ॥**[3]

कन्स्यात् । अश्व इव प्रतिकृतिः—अश्वकः । सर्वप्रातिपदिकेभ्यः स्वार्थे कन् । अश्वकः ॥

**तत्प्रकृतवचने मयट् ५ । ४ । २१ ॥**[4]

प्राचुर्येण प्रस्तुतं प्रकृतं, तस्य वचनं प्रतिपादनम् । भावे अधिकरणे वा ल्युट् । आद्ये——प्रकृतम्—अन्नम्—अन्नमयम् । अपूपमयम् । द्वितीये तु—अन्नमयो यज्ञः । अपूपमयं पर्व ॥

---

कठः = कठशाखाध्यायी । अध्येतृप्रत्ययस्य 'कठचरकादि'तिलुक् । अश्व एव—अश्वकः । प्रतिकृति = मूर्त्तिः । ( मूर्त्ति तसवीर' 'फोटो' )

१ दोनों में से एक का निर्धारण करने पर किं यत् और तत् शब्द से डतरच् प्रत्यय हो ।

२ अनेकों के मध्य में एक का निर्धारण करने पर किं—यत्—और तत्—शब्द से डतमच् प्रत्यय हो विकल्प से ।

३ प्रथमान्त से इव अर्थ में कन् प्रत्यय हो वह सदृश यदि प्रतिकृति हो तो ।

४ प्रथमान्त से प्रकृतवचन में मयट् प्रत्यय हो ।

प्रज्ञादिभ्यश्च ५ । ४ । ३८ ॥

अण् स्यात् । प्रज्ञ एव प्राज्ञः । प्राज्ञी स्त्री । दैवतः । बान्धवः ॥

बह्वल्पार्थाच्छस् कारकादन्यतरस्याम् ५ । ४ । ४२ ॥

बहूनि ददाति बहुशः । अल्पशः ॥

*आद्यादिभ्यस्तसेरुपसंख्यानम् ॥

आदौ—आदितः । मध्यतः । अन्ततः । पृष्ठतः । पार्श्वतः । आकृतिगणोऽयम् । स्वरेण स्वरतः । वर्णतः ॥

कृभ्वस्तियोगे संपद्यकर्तरि च्विः ५ । ४ । ५० ॥

*अभूततद्भाव इति वक्तव्यम् ॥

विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानाद्विकारशब्दात्स्वार्थे च्विर्वा स्यात्करोत्यादिभिर्योगे ॥

अस्य च्वौ ७ । ४ । ३२ ॥

अवर्णस्य ईत्स्यात् च्वौ । वेर्लोपे च्व्यन्तत्वादव्ययत्वम् ।

---

अणिति । स्वार्थे इति शेषः । बन्धुरेव—बान्धवः । अल्पेभ्यो ददाति अल्पशः । 'तद्धितश्चासर्वविभक्ति'रित्यव्ययत्वम् । मध्ये इति मध्यतः । वर्णेन वर्णतः । सार्वविभक्तिकस्तसिः ।

अव्ययत्वमिति । च्व्यन्तस्य निपाततया 'स्वरादिनिपातमव्यय'मिति

---

१ प्रज्ञादिगणपठित शब्द प्रकृतिक प्रथमान्त से अण् प्रत्यय हो स्वार्थ में ।

२ बह्वर्थक और अल्पार्थक जो कारक उससे शस् प्रत्यय हो विकल्प से ।

३ आद्यादि गणपठित शब्दप्रकृतिक प्रथमान्त से तसि प्रत्यय हो ।

४ विकारात्मत्व को प्राप्त होने वाली जो प्रकृति उसमें वर्तमान जो विकारवाची शब्द उससे स्वार्थ में च्वि प्रत्यय हो विकल्प से कृ—भू—और अस्ति के योग में ।

५ अवर्ण को ईकारादेश हो च्विप्रत्यय परे रहने ।

अकृष्णः कृष्णः संपद्यते तं करोति कृष्णीकरोति । ब्रह्मीभवति । गङ्गीस्यात् ।

*अव्ययस्य च्वावीत्वं नेति वाच्यम् ॥[1]

दोषाभूतमहः । दिवाभूता रात्रिः ॥

**विभाषा साति कार्त्स्न्ये ५ । ४ । ५२ ॥**[2]

च्विविषये सातिर्वा स्यात्साकल्ये ॥

**सात्पदाद्योः ८ । ३ । १११ ॥**[3]

सस्य षत्वं न स्यात् । कृत्स्नं शस्त्रमग्निः संपद्यते—अग्निसाद्भवति । दधि सिञ्चति ॥

**च्वौ च ७ । ४ । २६ ॥**[4]

च्वौ च परे पूर्वस्य दीर्घः स्यात् । अग्नीभवति ॥

**अव्यक्तानुकरणाद्ध्यजवरार्धादनितौ डाच् ५ । ४ । ५७ ॥**

द्व्यजेव अवरं=न्यूनं, न तु ततो न्यूनम्। अनेकाजिति यावत् । तादृशमर्धं तस्य तस्माड्डाच् स्यात् कृभ्वस्तिभिर्योगे ।

अव्ययत्वमित्यर्थः । सिञ्चतीति । पदादित्वात्सिञ्चतीत्यत्र सस्य षो न । शस्त्रमिति जातावेकवचनं, सर्वाणि शस्त्राणीत्यर्थः ।

१ अव्ययसम्बन्धी अवर्ण को ईत्व न हो च्विप्रत्यय परे रहते ।

२ च्वि के विषय में साति प्रत्यय हो विकल्प से, कार्त्स्न्य ( सम्पूर्ण ) अर्थ द्योत्य हो तो ।

३ पद के आदि का जो सकार और साति प्रत्यय का सकार उसको षत्व न हो ।

४ च्वि प्रत्यय परे रहते पूर्व को दीर्घ हो ।

अव्यक्तानुकरण जो शब्द द्व्यजवरार्द्ध ( अर्थात्—दो अच् से कम नहीं है अर्ध में जिसके) उससे डाच् प्रत्यय हो कृ-भू-अस्ति के योग में इति परे न हो तो ।

*डाचि विवक्षिते द्वे बहुलम् ॥[1]

—इति डाचि विवक्षिते द्वित्वम् ।

*नित्यमाम्रेडिते डाचीति वक्तव्यम् ॥[2]

डाच्परं यदाम्रेडितं तस्मिन्परे पूर्वपरयोर्वर्णयोः पररूपं स्यात् । इति तकारपकारयोः पकारः । पटपटाकरोति । अव्यक्तानुकरणात् किम् ? । ईषत्करोति । द्व्यजवरार्धात्किम् ? । श्रत्करोति । अवरेति किम् ? । खरटखरटाकरोति । अनितौ किम् ? । पटिति करोति ॥

इति स्वार्थिकाः ॥ १८ ॥ इति तद्धिताः ॥

# अथ स्त्रीप्रत्ययप्रकरणम् ॥

**स्त्रियाम् । ४ । १ । ३ ॥**[3]

अधिकारोऽयं 'समर्थाना' मिति यावत् ।

**अजाद्यतष्टाप् । ४ । १ । ४ ॥**[4]

अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं तत्र द्योत्ये टाप्स्यात् ।

---

द्वे=द्वित्वम् ।

***इति श्रीगुरुप्रसादशास्त्रिविरचितायां सरलायां तद्धितप्रकरणम्***

अजशब्द आदिर्यस्यासौ—अजादिः । अजादिश्च अच्चानयोः समाहारः—

१ डाच् प्रत्यय की विवक्षा में द्वित्व हो बहुलता से ।

२ डाच् परे हैं जिसके ऐसा जो आम्रेडित उसके परे रहते पूर्व पर के वर्ण को पररूप हो ।

३ "समर्थाना प्रथमाद्वा" इस सूत्र तक "स्त्रियाम्" यह अधिकार होता है ।

४ अज शब्द है आदि में जिसके ऐसा जो अजादिगण उसका और अकारान्त का-वाच्य जो स्त्रीत्व, वह द्योत्य होने पर तद्द्योतक टाप् प्रत्यय हो ।

अजा । एडका । अश्वा । चटका । मूषिका । बाला । वत्सा । होडा । मन्दा । विलाता । मेधा । गङ्गा । सर्वा । इत्यादि ।

**उगितश्च । ४ । १ । ६ ॥**[1]

उगिदन्तात्प्रातिपदिकात्स्त्रियां ङीप्स्यात् । भवती । भवन्ती । पचन्ती ॥

**टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः । ४ । १ । १५ ॥**[2]

अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप्स्यात् । कुरुचरी । नदट्-नदी । देवट्-देवी । सौपर्णेयी । ऐन्द्री । औत्सी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । पञ्चतयी ।

अजादयत्, तस्मात् अजाद्यतः । अच् प्रत्याहारः आदिर्यस्येति तु नार्थः, 'खट्वाया' इत्यादिनिर्देशात् । **अजेति** । 'अजत्वजातिविशिष्टा स्त्री'ति विग्रहे 'जातेरस्त्री'ति ङीषं बाधित्वा टाप् । एवम् एडका, अश्वा, चटका, मूषिकेत्यत्रापि बोध्यम् । बाला वत्सा होडा मन्दा विलातेत्यत्र बालत्ववयोविशिष्टा स्त्री बालेत्येव विग्रहः । 'वयसि प्रथमे' इति ङीप बाधित्वा टाप् ।

**भवन्तीति** । शतृप्रत्ययान्तत्वेनोगित्त्वान्ङीप् । कुरुषु चरतीति **कुरुचरी** । अत्र चरेष्ट इति टप्रत्ययः । टित्त्वान्ङीप् । **नदीति** । पचादिषु 'नदट्' इत्यादि निपातनाट्टित्त्वान्ङीप् ।

सुपर्ण्या अपत्यं स्त्री **सौपर्णेयी** । स्त्रीभ्यो ढक् । निरनुबन्धकस्याऽसम्भवाड्ढपदेन ढको ग्रहणम् । इन्द्रो देवता अस्या **ऐन्द्री** । 'सास्य देवते'त्यण् । उत्से भवा-**औत्सी** । 'उत्सादिभ्योऽञ्' । ऊरू प्रमाणमस्या ऊरुद्वयसी । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति द्वयसजादि । पञ्च अवयवा अस्याः-

---

१ उगिदन्त जो प्रातिपदिक उससे ङीप् प्रत्यय हो स्त्रीत्व द्योत्य हो तो ।

२ अनुपसर्जन जो टित्, तदन्त जो प्रातिपदिक और ढ-अण्-अञ्-द्वयसच्-दघ्नच्-मात्रच्-तयप्-ठक्-ठञ्-कञ् और क्वरप् एतत्प्रत्ययान्त जो प्रातिपदिक उससे ङीप् हो स्त्रीत्व द्योत्य हो तो ।

आक्षिकी । प्रास्थिकी । लावणिकी । यादृशी । इत्वरी ।

*नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्[1] ॥

स्त्रैणी । पौंस्नी । शाक्तिकी । याष्टीकी । आढ्यङ्करणी । तरुणी । तलुनी ।

यञश्च[2] । ४ । १ । १६ ॥

यञन्तात् स्त्रियां ङीप्स्यात् । अकारलोपे कृते ॥

हलस्तद्धितस्य[3] ६ । ४ । १५० ॥

हलः परस्य तद्धितयकारस्योपधाभूतस्य लोप ईति परे । गार्गी ॥

प्राचां ष्फ तद्धितः[4] । ४ । १ । १७ ॥

यञन्तात् ष्फो वा स्यात्स च तद्धितः ॥

पञ्चतयी । 'सङ्ख्याया अवयवे तयप्' । अक्षैर्दीव्यति आक्षिकी । 'तेन दीव्यती'ति ठक् ।

लवणं पण्यमस्याः लावणिकी । 'लवणाट्ठञ्' । यादृशीति । 'त्यदादिषु दृश' इति कञ् । 'आ सर्वनाम्न' इत्याकारः । एति तच्छीला इत्वरी । 'इणनशजिसर्तिभ्यः क्वरप्' । स्त्रियां जाता स्त्रैणी । पुंसि भवा पौंस्नी । 'स्त्रीपुंसाभ्या' मिति नञ्स्नञौ । शक्तिः प्रहरणमस्याः शाक्तिकी । 'शक्तियष्ट्योरीकक्' । अनाढ्य आढ्यः क्रियतेऽनयेति विग्रहः । 'आढ्यसुभगे'ति कृञः ख्युन् । तरुणत्वविशिष्टा स्त्री तरुणी । एवं तलुनी । तरुणी । तलुनी=युवतिः ।

लोप इति । 'यस्येति चे'त्यकारलोपे कृते ।

गर्गस्य गोत्रापत्यं स्त्री गार्गी ।

१ नञ् स्नञ्-ईकक् और ख्युन् प्रत्ययान्त जो प्रातिपदिक-और तरुण तलुन जो प्रातिपदिक उनसे ङीप् प्रत्यय हो स्त्रीत्व द्योत्य हो तो ।

२ यञ् प्रत्ययान्त जो प्रातिपदिक उससे ङीप् प्रत्यय हो स्त्रीत्व द्योत्य हो तो ।

३ हल् से परे तद्धित उपधाभूत जो यकार का लोप हो ईकार परे रहते ।

४ यञ् प्रत्ययान्त जो प्रातिपदिक उससे ष्फप्रत्यय हो विकल्प से, और उसकी तद्धितसञ्ज्ञा हो ।

**षिद्गौरादिभ्यश्च ४ । १ । ४१ ॥**[1]

षिद्भ्यो गौरादिभ्यश्च स्त्रियां ङीष्स्यात् । गार्ग्यायणी । नर्तकी । गौरी । अनडुही । अनड्वाही । आकृतिगणोऽयम् ॥

**वयसि प्रथमे ४ । १ । २० ॥**[2]

प्रथमवयोवाचिनोऽदन्तात्स्त्रिया ङीप्स्यात् । कुमारी ॥

**द्विगोः ४ । १ । २१ ॥**[3]

अदन्ताद्द्विगोर्ङीप्स्यात् । त्रिलोकी । अजादित्वात्त्रिफला । त्र्यनीका सेना ॥

**वर्णादनुदात्तात्तोपधात्तो नः ४ । १ । ३९ ॥**[4]

वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप्, तकारस्य नकारादेशश्च । एनी । एता । रोहिणी । रोहिता ॥

गर्गस्य गोत्रापत्यं स्त्री **गार्ग्यायणी** ।

कुमारत्ववयोविशिष्टा स्त्री **कुमारी** । त्रयाणां लोकानां समाहारः **त्रिलोकी** । 'तद्धितार्थे'ति द्विगुः ।

त्रयाणामनीकानां समाहारः **त्र्यनीका** । अजादेराकृतिगणत्वाट्टाप् । **अनीकम्**=अग्रभाग ।

एतत्वगुणविशिष्टा स्त्री **एता** । 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः । **एता**=चित्रवर्णवती ।

१ षित् प्रत्ययान्त जो प्रातिपदिक और गौरादिगणपठित शब्द जो प्रातिपदिक उनसे ङीष् प्रत्यय हो ।

२ प्रथम वयोवाची जो अदन्त प्रातिपदिक उससे ङीप् प्रत्यय हो ।

३ द्विगु समास में अदन्त जो प्रातिपदिक उससे ङीप् हो ।

४ वर्णवाची जो अनुदात्तान्त तोपध तदन्त जो अनुपसर्जन प्रातिपदिक उससे ङीप् प्रत्यय हो विकल्प से और तकार को नकारआदेश हो ।

## वोतो गुणवचनात् ४ । १ । ४४ ॥

उदन्ताद्गुणवाचिनो वा ङीष्स्यात् । मृद्वी । मृदुः ॥

## बह्वादिभ्यश्च ४ । १ । ४५ ॥

एभ्यो वा ङीष् स्यात् । बह्वी । बहुः ॥

*कृदिकारादक्तिनः ।

रात्रिः । रात्री ॥

*सर्वतोऽक्तिन्नर्थादित्येके ॥

शकटी । शकटिः ॥

## पुंयोगादाख्यायाम् ४ । १ । ४८ ॥

या पुमाख्या पुंयोगात्स्त्रियां वर्तते ततो ङीष् । गोपस्य स्त्री गोपी ॥

*पालकान्तान्न ।

---

कृदिति । कृदिकारान्तात् क्तिन्नन्तवर्जितान्ङीष् । सर्वत इति । न केवल कृदिकारान्तादेव, किन्तर्हि, सर्वस्मादपि क्तिन्नर्थवर्जितादित्येके आचार्या मन्यन्ते इत्यर्थः । पुमाख्या=पुंवाचकः । पचाद्यजन्तोऽयम् ।

---

१ गुणवाची जो उदन्त प्रातिपदिक उससे ङीष् हो विकल्प से स्त्रीत्वे द्योत्ये।

२ बह्वादि गणपठित जो प्रातिपदिक उससे ङीष् प्रत्यय हो विकल्प से ।

३ क्तिन् अवयव भिन्न जो कृत् का इकार तदन्त जो प्रातिपदिक उससे ङीष् प्रत्यय हो विकल्प से ।

४ क्तिन्नर्थ प्रत्ययावयव से भिन्न जो इकार तदन्त प्रातिपदिक मात्र उससे ङीष् प्रत्यय हो विकल्प से किसी आचार्य के मत में ।

५ जो पुंवाचक शब्द पुंयोग से स्त्रीलिङ्ग में वर्तमान हो, उससे ङीष् हो ।

६ पालक शब्द अन्त में जिसके ऐसा जो शब्द उससे ङीष् प्रत्यय न हो ।

**[1]प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ७ । ३ । ४४ ॥**

प्रत्ययस्थात्कात्पूर्वस्याऽकारस्येकारः स्यादापि, स आप् सुपःपरो न चेत् । गोपालिका । अश्वपालिका । सर्विका । कारिका । अतः किम्? । नौका । प्रत्ययस्थात्किम्? । शक्नोतीति शका । असुपः किम्? । बहुपरिव्राजका नगरी ॥

*[2]सूर्याद्देवतायां चाब्वाच्यः ॥

सूर्यस्य स्त्री देवता सूर्या । देवताया किम्? ।

*[3]सूर्याऽगस्त्ययोश्छे च ङ्यां च* ॥

यलोपः । सूरी । कुन्ती । मानुषीयम् ॥

**इन्द्र[4]वरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुला-चार्याणामानुक् ४ । १ । ४९ ॥**

एषामानुगागमः स्यात् ङीष् च । इन्द्रस्य स्त्री इन्द्राणी । वरुणानी । भवानी । शर्वाणी । रुद्राणी । मृडानी ।

*[5]हिमारण्ययोर्महत्त्वे ॥

महद्धिमं हिमानी । महदरण्यम्—अरण्यानी ।

इयमिति । इयं=कुन्ती, मानुषी, न देवीत्याशयः । हिमेति । हिमाऽरण्ये-

१ प्रत्यय का जो ककार उससे पूर्व जो अकार उसको इकारादेश हो, आप् परे रहते यदि वह आप् सुप् से परे न हो ।

२ सूर्य शब्द यदि देवता अर्थ में वर्तमान हो तो चाप् प्रत्यय हो तो ।

३ सूर्य और अगस्त्य शब्द का जो यकार उसका लोप हो छ और ङी प्रत्यय परे रहते ।

४ इन्द्र-वरुण-भव-शर्व-रुद्र-मृड-हिम-अरण्य-यव-यवन-मातुल और आचार्य इनको आनुक् का आगम हो और इनसे ङीप् प्रत्यय हो ।

५ हिम और अरण्य शब्द से महत्त्व अर्थ में ङीष् और आनुक् हो ।

*यवाद्दोषे[1] ॥

दुष्टो यवो यवानी ॥

*यवनाल्लिप्याम्[2] ॥

यवनानां लिपिर्यवनानी ॥

*मातुलोपाध्याययोरानुग्वा[3] ॥

मातुलानी । मातुली । उपाध्यायानी । उपाध्यायी ॥

*आचार्यादणत्वं च[4] ॥

आचार्यस्य स्त्री आचार्यानी ॥

*अर्यक्षत्रियाभ्यां वा स्वार्थे[5] ॥

अर्याणी । अर्या । क्षत्रियाणी । क्षत्रिया ॥

क्रीतात्करणपूर्वात्[6] । ४ । १ । ५० ॥

शब्दाभ्या महत्त्वे ङीष् आनुक् च भवति । यवानी='अजवाइन' इति प्रसिद्धा ।

मातुलस्य स्त्री मातुलानी (='मामी')।

उपाध्यायस्य स्त्री उपाध्यायानी । अर्यैव अर्याणी । 'अर्याणी स्वयमर्या स्यात्क्षत्रिया क्षत्रियाण्यपि' इत्यमरः ।

१ यव शब्द से दोष अर्थ में ङीष् और आनुक् हो ।

२ यवन शब्द से लिपि अर्थ में ङीष् और आनुक् होता है ।

३ मातुल और उपाध्याय शब्द से ङीप् हो और आनुक् का आगम हो विकल्प से ।

४ आचार्य शब्द से ङीष् और आनुक् हो । और णत्व का अभाव हो ।

५ अर्य और क्षत्रिय शब्द से स्वार्थ में ङीष और आनुक् हो विकल्प से ।

६ क्रीत शब्द अन्त में और करण कारक आदि में है जिसके ऐसा जो अदन्त प्रातिपदिक उससे ङीष् हो ।

क्रीतान्तादन्तात्करणादेः स्त्रियां ङीष् स्यात् । वस्त्रक्रीती । क्वचिन्न । धनक्रीता ॥

**स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ४ । १ । ५४ ॥**[1]

असंयोगोपधमुपसर्जनं यत्स्वाङ्गं तदन्तादन्तान्ङीष्वा स्यात् । केशानतिक्रान्ता अतिकेशी । अतिकेशा । चन्द्रमुखी । चन्द्रमुखा । असंयोगोपधात्किम् ? । सुगुल्फा । उपसर्जनात्किम् ? । सुशिखा ॥

**न क्रोडादिबह्वचः ४ । १ । ५६ ॥**[2]

क्रोडादेर्बह्वचश्च स्वाङ्गान्न ङीष् । कल्याणक्रोडा । आकृतिगणोऽयम् । सुजघना ।

**नखमुखात्संज्ञायाम् ४ । १ । ५८ ॥**[3]

न ङीष् ॥

**पूर्वपदात्संज्ञायामगः ८ । ४ । ३ ॥**[4]

वस्त्रेण क्रीता **वस्त्रक्रीती** । **धनेति** । 'कर्तृकरणे' इत्यत्र बहुलग्रहणात्कचित्सुबुत्पत्त्यनन्तरं समासे सुबुत्पत्तेः पूर्वं टाप्यदन्तत्वाऽभावान्न ङीपित्याशयः ।

कल्याणं क्रोडं यस्याः सा **कल्याणक्रोडा** । 'न ना क्रोडं भुजान्तरम्' इत्यमरः । सुष्ठु जघनं यस्याः सा—**सुजघना** । 'पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः' इत्यमरः ।

१ संयोगोपध से भिन्न उपसर्जन जो स्वाङ्गवाचिशब्द, तदन्त जो अदन्त प्रातिपदिक, उससे ङीष हो विकल्प से ।

२ क्रोडादिगणपठित जो प्रातिपदिक और बहच्-स्वाङ्गवाची जो प्रातिपदिक उससे ङीप् प्रत्यय नहीं हो ।

३ नखमुखशब्दान्त जो प्रातिपदिक उससे ङीष् नहीं हो सञ्ज्ञा में ।

४ पूर्वपद में स्थित जो निमित्त ( रेफ षकार ) उससे परे जो नकार उसको णत्व हो सञ्ज्ञा में । परन्तु गकार के व्यवधान में नहीं हो ।

पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात्संज्ञायां, न तु गकारव्यवधाने । शूर्पणखा । गौरमुखा । संज्ञायां किम् ? । ताम्रमुखी कन्या ॥

**[1]जातेरस्त्रीविषयादयोपधात् ४ । १ । ६३ ॥**

जातिवाचि यन्न च स्त्रियां नियतमयोपधं ततः स्त्रियां ङीप् स्यात् । तटी । वृषली । कठी । बह्वृची । जातेः किम् ? मुण्डा । अस्त्रीविषयात्किम् ? । बलाका । अयोपधात्किम् ? । क्षत्रिया ॥

**[2]योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः ।**

हयी । गवयी । मुकयी । हलस्तद्धितस्येति यलोपः । मनुषी ॥

***[3]मत्स्यस्य ङ्याम् ॥**

यलोपः । मत्सी ॥

**[4]इतो मनुष्यजातेः ४ । १ । ६५ ॥**

ङीप् । दाक्षी ॥

**[5]ऊङुतः ४ । १ । ६६ ॥**

उदन्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात् । कुरूः । अयोपधात्किम् ? । अध्वर्युर्ब्राह्मणी ॥

---

दक्षस्य गोत्रापत्यं स्त्री दाक्षी । 'अत इ'ञिति इञन्तान्ङीपि 'यस्येति च'

१ नित्य स्त्रीलिङ्ग से भिन्न और यकारोपध से भिन्न जो जातिवाचक उससे ङीप् हो ।

२ योपध के प्रतिषेध में हय गवय-मुकय-मनुष्य और मत्स्य इनका प्रतिषेध नहीं होता है । अर्थात् इनसे योपधों से भी ङीप् होता है ।

३ मत्स्यशब्दावयव यकार का लोप हो ङी परे रहते ।

४ मनुष्यजातिवाचक इदन्त से ङीप् हो ।

५ यकारोपध से भिन्न मनुष्यजाति वाचक उदन्त प्रातिपदिक से ऊङ् हो स्त्रीत्व द्योत्य हो तो ।

**पङ्गोश्च ४ । १ । ६८ ॥**[1]

पङ्गूः ।

***श्वशुरस्योकाराकारलोपश्च ॥**[2]

श्वश्रूः ॥

**ऊरूत्तरपदादौपम्ये ४ । १ । ६९ ॥**[3]

उपमानवाचि पूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् स्यात् । करभोरूः ॥

**संहितसफलक्षणवामादेश्च ४ । १ । ७० ॥**[4]

अनौपम्यार्थं सूत्रम् । संहितोरूः । शफोरूः । लक्षणोरूः । वामोरूः ॥

**शार्ङ्गरवाद्यञो ङीन् ४ । १ । ७३ ॥**[5]

शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात् ।

तीकारलोपः । करभाविव ऊरू यस्याः सा करभोरूः । 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः' इत्यमरः ।

संहितौ ऊरू यस्याः सा **संहितोरूः** । **संहितौ**=मिलितौ । शफाविव संश्लिष्टौ

१ पङ्गु शब्द से ऊङ् हो स्त्रीलिङ्गमें ।

२ श्वशुर शब्द के उकार और अकार का लोप हो, और ऊङ् प्रत्यय हो ।

३ उपमानवाचक शब्द पूर्वपद में और ऊरु शब्द उत्तर पद में है जिसके ऐसा जो प्रातिपदिक उससे ऊङ् हो ।

४ संहित–शफ–लक्षण और वाम ये शब्द आदि में जिसके और ऊरु शब्द उत्तर पद में है जिसके ऐसा जो प्रातिपदिक उससे ऊङ् हो ।

५ शार्ङ्गरवादि गणपठित जो प्रातिपदिक, और अञ् का जो अकार तदन्त जो जातिवाचक प्रातिपदिक–उससे ङीन् प्रत्यय हो ।

शार्ङ्गरवी । बैदी । ब्राह्मणी । नृनरयोर्वृद्धिश्च[1] । नारी ॥

यूनस्तिः[2] ४ । १ । ७७ ॥

युवन्शब्दात्स्त्रियां तिः प्रत्ययः स्यात् । युवतिः ॥

इति स्त्रीप्रत्ययाः ॥

शास्त्रान्तरे प्रविष्टानां बालानां चोपकारिका ।

कृता वरदराजेन लघुसिद्धान्तकौमुदी ॥ १ ॥

इति श्रीवरदराजकृता लघुसिद्धान्तकौमुदी [ समाप्ता ] ॥

ऊरू यस्याः सा शफोरूः । वामौ—सुन्दरौ—ऊरू यस्याः सा वामोरूः । श्वशुरोरपत्यं स्त्री शार्ङ्गरवी । विदस्य गोत्रापत्यं स्त्री बैदी ।

शास्त्रान्तरे=तर्कादिशास्त्रे, काव्ये कोशादौ च प्रविष्टानाम्=अन्तर्भूतानाम् । उपकारिका=उपकारकारिका । केचित्तु—'शास्त्रान्तरे अप्रविष्टाना'मिति च्छित्वा—शास्त्रान्तरज्ञानविकलाना बालानामपि उपकारिकेत्यर्थमाहुः ।

इति पण्डितराज—न्यायरत्न—मरुमण्डल प्रचण्डमार्त्तण्ड—श्रीसाहिरामजिच्छास्त्रिणां पौत्रेण, प्रतिवादिभयङ्कर-न्यायाचार्य—श्रीशिवनारायणशास्त्रिणाम्पुत्रेण, सतीसार्वभौमराजलक्ष्मीगर्भसम्भवेन, श्रीगुरुप्रसादशास्त्रिणा सङ्कलिताया लघुसिद्धान्तकौमुदीविषमपदटीकायां सरलाख्यायां स्त्रीप्रत्ययप्रकरणम् ।



१ नृ और नर प्रातिपदिक से ङीन् हो और वृद्धि हो ।

२ युवन् शब्द से ति प्रत्यय हो स्त्रीत्व द्योत्य हो तो ।

इति श्रीगुरुप्रसादशास्त्रिकृता लघुकौमुदीभाषाटीका

[ प्रथम श्रावणकृष्णा १४–१९९६ ]

# अथ लघुसिद्धान्तकौमुदीस्थसूत्राणा-मकारादिवर्णानुक्रमेण सूची ।

१ अइउण् । २ ऋऌक् । ३ एओङ् । ४ ऐऔच् । ५ हयवरट् । ६ लण् । ७ ञमङणनम् । ८ झभञ् । ९ घढधष् । १० जबगडदश् । ११ खफछठथचटतव् । १२ कपय् । १३ शषसर् । १४ हल् । इति १४ माहेश्वराणि सूत्राणि ।

इति लघुसिद्धान्तकौमुदीस्थसूत्राणामकारादिवर्णानुक्रमसूची ।

# अथ लघुकौमुदीप्रश्नप्रदीपतः

## प्रयोगलेखनप्रकारः ।

### ब्रह्मर्षिः ।

ब्रह्मा ऋषिरित्यत्र 'आद्गुण' इत्यनेनाऽकारऋकारयोस्स्थाने अकारे गुणे 'उरण् रपरः' इति रपरे च ब्रह्मर्षिरिति सिद्ध्यति । पक्षे 'ऋत्यकः' इत्यनेन ह्योत्तरवर्त्याकारस्य ह्रस्वे प्रकृतिभावे च कृते ब्रह्म ऋषिरिति सिध्यति।

### उत्थानम् ।

उत् स्थानम्—इत्यत्र 'उदः स्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णः क्व स्यादित्याशङ्कायां तस्मादित्युत्तरस्य, इत्यनेन स्थेत्यकारस्य प्राप्ते तं प्रबाध्य 'आदेः परस्य' इत्यनेन सकारस्य पूर्वसवर्णे थत्वे उद् थ् थानम्' इति दशायां झरो झरीत्यनेन थलोपे 'खरिचेति दकारस्य तकारे तत्सिद्धिः ।

### शिवो वन्द्यः ।

शिव स् वन्द्यः, इत्यत्र ससजुषो रुः, इति सस्य रुत्वे हशि च, इत्यनेन रोरुत्वे 'आद्गुणः' इत्यनेन पूर्वपरयोः स्थाने गुणे च शिवो वन्द्यः' इति ।

### मनोरथः ।

मनस् रथः—इत्यत्र 'ससजुषो रुः' इत्यनेन सस्य रुत्वे कृते 'हशि चे' त्यनेन रोरुत्वे प्राप्ते 'रोरि' इत्यनेन च रस्य लोपे प्राप्ते अनयोर्मध्ये

कतरेण भाव्यमित्याशङ्कायाम् विप्रतिषेधे परं कार्यम् इति सूत्रबलेनात्र परत्वात् 'रोरि' इत्यनेन लोप एव प्राप्ते पूर्वत्रासिद्धमिति सूत्रेण हशि च इति सूत्रस्य सपादसप्ताध्यायीस्थत्वाद् 'रोरि' इत्यस्य च त्रिपादिस्थत्वात्, हशि च' इति सूत्रापेक्षया 'रोरि' इत्यस्याऽसिद्धत्वेन 'हशि चे' त्यनेन रस्योत्वे 'आद्गुणः इति गुणे च कृते मनोरथ इति सिध्यति ।

## सख्युः, पत्युः, क्रोष्टुः, इति ।

सखिशब्दात्प्रातिपदिकत्वेन ङसि, अनुबन्धस्येत्संज्ञालोपे 'इको यणचि, इति यणि सख् य् अस् इति जाते 'ख्यत्यात्परस्य' इत्यकारस्योकारादेशे सस्य रुत्वे विसर्गे च सख्युरिति ।

पतिशब्दात् षष्ठ्येकवचने ङसि विभक्तौ, अनुबन्धलोपे 'इको यणची'ति यणादेशे 'ख्यत्यात्परस्य, इत्यकारस्योकारे सस्य रुत्वे विसर्गे च पत्युरिति ।

क्रोष्टुशब्दात् ङस् विभक्तौ 'लशक्वतद्धिते, इति ङकारस्येत्संज्ञाया लोपे विभाषा तृतीयादिष्वचि इत्यनेन क्रोष्टोस्तृज्वद्भावे ऋत उत् इति सूत्रेण ऋकाराकारयोः स्थाने उदादेशे रपरे च रात्सस्येति सकारस्य लोपे रेफस्य विसर्गे क्रोष्टुरिति । पक्षे 'घेर्ङिति' इति गुणे 'ङसिङसोश्चेति पूर्वरूपे सस्य रुत्वे विसर्गे च क्रोष्टोः, इति सिद्ध्यति ।

## अयात् ।

-या धातोः 'लुङि'त्यनेन लुङि 'तिप्तस्झी'त्यादिना लुङ स्तिपि 'च्लि लुङी'ति च्लौ' 'च्लेःसिच्' इति च्लेः सिजादेशे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः, इत्यडागमे 'इतश्चेति सूत्रेण तिप इकारलोपे 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सिचो लुकि अयादिति रूपम् ।

## एधाञ्चक्रे ।

एध् धातोः 'परोक्षे लिट्' इति लिटि अनुबन्धलोपे 'इजादेश्च गुरुमतोऽनृच्छः' इति सूत्रेणामि कृते 'आमः' इति लिटो लुकि एध् आम् इति जाते 'कृञ्चानुप्रयुज्यते लिटि' इत्यनेन लिट्परककृञि अनुप्रयुक्ते एधाम् कृ लिट् इति जाते 'लिटस्तझयोरेशिरेच्' इति एशि कृते शलोपे च जाते एधाम् कृ ए इत्यवस्थायाम् 'लिटि धातोरनभ्यासस्य' इति द्वित्वे 'उरत्' इत्यभ्यासऋकारस्थाने अकारे रपरे च 'हलादिः शेषः' इति शेष-हल्लोपे एधाम् क कृ ए इति जाते 'कुहोश्चुरित्यनेन कस्य चकारे मस्याऽनुस्वारे परसवर्णे' 'इको यणचीति' यणि च कृते एधाञ्चक्रे 'इति सिद्धम् ।

## अवोढाम् ।

वह् धातोर्लुङि तसि च्लौ सिचि अनुबन्धलोपे 'तस्थस्थमिपां तान्तन्तामः' इति तसस्तामि 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यटि, अ वह् स् ताम् इति जाते 'झलो झलीति सलोपे 'हो ढः' इति हस्य ढत्वे 'झषस्तथोर्धोऽधः' इति तस्य धत्वे 'ष्टुना ष्टुः' इति धस्य ढत्वे अ वढ् ढाम् इति जाते ढो ढे लोपः' इति ढलोपे 'सहिवहोरोदवर्णस्य' इति वकारोत्तरवर्तिनोऽकारस्यौकारे कृते अवोढाम् इति रूपम् ।

## पारदृश्वा ।

पारं दृष्टवान् इति विग्रहे 'दृशेः क्वनिप्' इति क्वनिपि 'हलन्त्यम्' इति पस्येत्संज्ञायाम् 'उपदेशेऽजनुनासिक इत्' इतीकारस्येत्संज्ञायाम् 'लशक्वतद्धिते' इति ककारस्येत्संज्ञाया 'तस्य लोपः' इत्यनेन पस्य इकारस्य कस्य च लोपे पारदृश् वन् इति जाते प्रातिपदिकत्वात्सौ हल्ङ्यादिना सोर्लोपे सर्वनामस्थाने चाऽसम्बुद्धाविति नान्तोपधाया दीर्घत्वे न लोपः प्रातिपदिकान्तस्य, इति नलोपे च कृते पारदृश्वा इति सिद्धम् ॥

## गार्ग्यायणी ।

गार्ग्यशब्दात् प्राचां ष्फ तद्धित इति ष्फ प्रत्यये षः प्रत्ययस्येति षकारस्येत्संज्ञाया तस्य लोप इति लोपे च 'आयनेयीनियः फढखछघां प्रत्ययादीनामिति सूत्रेण फस्यायनादेशे नस्य णत्वे यस्येति चेत्यकारलोपे गार्ग्यायण इति सम्पन्ने षिद्गौरादिभ्यश्चेति ङीषि ङकारषकारयोरित्संज्ञाया लोपे च यचि भमिति भसंज्ञायाम् यस्येति चेति णकारोत्तरस्याकारस्य लोपे च कृते गार्ग्यायणीति जायते ।

## वस्त्रक्रीती ।

वस्त्रेः क्रीता या सा वस्त्रक्रीतीत्यत्र वस्त्रक्रीतशब्दात् 'क्रीतात्करणपूर्वात्, इति ङीषि ङकारषकारयोरित्संज्ञाया लोपे च यचि भमिति भसंज्ञाया यस्येति चेति अकारलोपे प्रातिपदिकत्वे हल्ङ्यादिलोपे च सिद्धिः ।

## पौर्वशालः ।

पूर्वस्यां शालायां भवः—इति विग्रहे 'तद्धितार्थोत्तरपदसमाहारे च' इति तद्धितार्थे समासे सुपो लुकि पूर्वा शाला इति जाते 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इत्यनेन पुंवद्भावे 'दिक्पूर्वपदात् संज्ञायां ञः' इत्यनेन ञप्रत्यये—अनुबन्धलोपे 'तद्धितेष्वचामादेः' इत्यनेन पकारोत्तरवर्त्युकारस्यौकारवृद्धौ 'यस्येति च' इत्यनेन भसंज्ञकस्य लकारोत्तरवर्त्याकारस्य लोपे विभक्तिकार्ये च पौर्वशाल इति सिद्धम् ॥

## तवल्कारः ।

तव ऌकार इत्यवस्थायाम् आद्गुणः' इति पूर्वपरयोः स्थाने स्थानप्रयत्नसाम्यात् अल्पे गुणे उरण् रपर, इति लपरे च कृते तवल्कार इति ॥

## विष्ण इह ।

विष्णो इहेत्यवस्थायाम् एचोऽयवायावः इति सूत्रेण णकारोत्तरवर्तिन ओकारस्य यथासंख्यमनुदेशः समानामिति साहाय्येनावादेशे विष्ण अव् इह इति दशायां लोपः शाकल्यस्येति वकारलोपे कृते आद्गुण इति शास्त्रेण प्राप्तो गुणो न भवति पूर्वत्रासिद्धमिति शास्त्रेण सपादसप्ताध्यायिन', आद्गुण इति सूत्रदृष्टया त्रिपादिनो लोपः शाकल्यस्येत्यस्यासिद्धत्वेन मध्ये वकारेण व्यवधानात्, तेन विष्ण इह इति । लोपाऽभावपक्षे तु विष्णविह इति रूपं जायते ।

## सञ्छम्भुरित्यादि ।

सन् शम्भुः इत्यत्र शि तुक् इत्यनेन पदान्तस्य नस्य तुकि अनुबन्धलोपे शश्छोऽटि इत्यनेन शम्भुरिति शकारस्य छत्वे सन् त्छम्भुरिति जाते स्तोः श्चुना श्चुरिति तकारस्य श्चुत्वेन चकारे पुनस्तेनैव सूत्रेण नकारस्य श्चुत्वेन ञकारे झरो झरि सवर्णे इति चकारलोपे सञ्छम्भुरिति, चलोपाभावे सञ्च्छम्भुरिति, छत्वाऽभावे तकारस्य चुत्वे सञ्च्शम्भुरिति, तुगभावपक्षे नस्य चुत्वेन ञकारे सञ्शम्भुरिति एवं रूपचतुष्टयं भवति ।

## सखा ।

सखिशब्दात् प्रातिपदिकत्वेन सौ 'अनङ् सौ' इति सूत्रेणाऽनङि अनेकाल्शित्सर्वस्य, इत्यनेन सर्वस्य सखिशब्दस्य स्थाने प्राप्ते तं प्रबाध्य ङिच्चेत्यनेनान्त्यखकारोत्तरवर्तीकारस्याऽनङि कृते अनुबन्धलोपे सखअन् सु इत्यवस्थायाम् 'अलोऽन्त्यात् पूर्वउपधा' इत्यनेनोपधासंज्ञाया 'सर्वनामस्थाने चाऽसम्बुद्धौ, इत्यनेन नान्तस्योपधाया दीर्घे 'उपदेशेऽजनुनासिक इत्' इत्यनेन सोरोरित्संज्ञाया 'तस्य लोपः, इति लोपे 'अपृक्त एकाल्

प्रत्ययः' इत्यनेन सस्याऽपृक्तसंज्ञायां 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' इत्यनेन सकारलोपे 'न लोपः प्रातिपदिकान्तस्य' इति नलोपे च सखा-इति सिद्धम् ।

## मघोनः ।

मघवन्शब्दात् शसि शकारस्येत्संज्ञाया लोपे च 'श्वयुवमघोनामतद्धिते' इति सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'आद्गुणः' इति गुणे सस्य रुत्वे विसर्गे च मघोन इति दिक् ।

## गोपायाञ्चकार ।

ऊकारेत्संज्ञकगुपूधातोः 'गुपूधूपविच्छिपणिपनिभ्य आयः, इत्यायप्रत्यये पुगन्तलघूपधस्य चेति गुणे च जाते सनाद्यन्ता धातव इति गोपाय इत्यस्य धातुत्वे धातुत्वात् परोक्षे लिडिति लिटि गोपाय इत्यस्यानेकाच्त्वात् 'कास्यनेकाजाम् वक्तव्यः' इति वार्तिकेनामि अतो लोप इत्यकारलोपे गोपाय आम् लिट् इति जाते हलन्त्यमित्यनेनामो मकारस्येत्संज्ञायां तस्य लोप इति तस्य लोपे च प्राप्ते आस्कासोराम्विधानान्मस्येत्त्वाभावेन लोपाभावे 'आमः' इति लिटो लुकि गोपायाम् इति जाते 'कृञ्चानुप्रयुज्यते लिटि' इति सूत्रेण लिट्परकृञोऽनुप्रयोगे लिटस्तिपि तिपो णलि—अनुबन्धलोपे गोपायाम् कृ अ इति जाते 'लिटि धातोरनभ्यासस्ये'ति कृञो द्वित्वे पूर्वोऽभ्यास इति पूर्वस्य कृञोऽभ्याससंज्ञायाम् उरदिति अभ्यासऋकारस्य अकारे उरण्रपर इति रपरे हलादिः शेष इति रेफस्य लोपे, कुहोश्चुरिति पूर्वस्य ककारस्य चकारे मोऽनुस्वार इति मकारस्यानुस्वारे वापदान्तस्येति परसवर्णे—अचोञ्णिति इति वृद्धौ उरण् रपर इति रपरत्वे तत्सिद्धिः ।

## अचीकमत ।

कम धातोः सकाशात् 'कमेर्णिङ्' इत्यनेन णिङि 'अत उपधायाः' इति वृद्धौ ततः कामीत्यस्य धातुसंज्ञायां 'लुङ् चे'ति लुङि तस्य तादेशे 'च्लि लुङी'ति च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि—अनुबन्ध-स्येत्संज्ञाया लोपे च काम् इ अत इति स्थिते 'णेरनिटि' इति णेर्लोपे 'णौ चङ्युपधाया ह्रस्वः' इत्युपधाह्रस्वे कृते चङीत्यनेन कमित्यस्य द्वित्वे 'हलादिः शेषः' इति मलोपे क कम् अत इति दशायां 'कुहोश्चु' रित्यनेनाऽभ्यास-ककारस्य चकारे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इत्यनेन सन्वद्भावे 'सन्यतः' इत्यभ्यासाकारस्येकारे, 'दीर्घो लघोः' इत्यनेनाभ्यासेकारस्य दीर्घे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यनेन अडागमे च-अचीकमत-इति सिद्धम् ।

## प्रार्च्छति ।

प्र ऋच्छति इत्यत्र उपसर्गाः क्रियायोगे इति सूत्रेण प्र इत्यस्योप-सर्गसंज्ञायामुपसर्गादृति धातौ इति पूर्वपरयोः स्थाने वृद्धौ उरण् रपर इति रपरत्वे च प्रार्च्छति-इति सिद्धम् ।

## गवाग्रम् ।

गो अग्रमिति विग्रहे सर्वत्र विभाषागोः इति सूत्रेण प्राप्तं प्रकृति-भावं परत्वात् प्रबाध्य अवङ् स्फोटायनस्येति-अवङि अनुबन्धस्य ङकारस्ये-त्संज्ञाया लोपे च 'अकः सवर्णे दीर्घः' इति सूत्रेण वकारोत्तरवर्त्यकार-अग्रे-घटकाद्याऽकारयोः स्थाने दीर्घे गवाग्रम् इति सिद्धम् ।

## हरौ ।

हरिशब्दात् प्रातिपदिकत्वे ङिविभक्तौ-अनुबन्धलोपे 'शेषो घ्यसखि, इति हरीत्यस्य घिसंज्ञायाम् 'अच्च घेः', इत्यनेन ङेरौकारादेशे घिसंज्ञकस्येकारस्य चाऽकारादेशे वृद्धौ च हराविति साधु ।

## अनड्वान् ।

अनडुह्शब्दात् सुविभक्तौ 'मिदचोऽन्त्यात्परः, इतिशास्त्रमहिम्ना चतुरनडुहोरामुदात्तः, इतिसूत्रेणोकारात् परे आमि कृते अनुबन्धलोपे 'सावनडुहः' इति-आमः परे नुमि कृते-उकारमकारयोरित्संज्ञायां लोपे च-अनडुआन् ह् नु इति जाते उकारलोपे 'हल्ङ्याब्भ्यः' इत्यादिसूत्रेण सुस्यलोपे 'संयोगान्तस्य लोपः' इति हकारलोपे च कृते प्राप्तस्य 'न लोपः प्रातिपदिकान्तस्य' इति शास्त्रस्य दृष्ट्या 'पूर्वत्रासिद्धम्' इतिशास्त्रबलेन संयोगान्तलोपस्यासिद्धत्वात् नलोपाऽभावे 'इको यणचि' इति सूत्रेण डकारोत्तरवर्त्युकारस्य वकारे अनड्वानिति सिद्धम् ।

## आभ्याम् ।

इदंशब्दात् भ्याम् विभक्तौ 'त्यदादीनामः. इति मस्यात्वे अतो गुणे, इति पररूपे, हलिलोपः, इति-इद्भागस्य लोपेप्राप्ते 'अलोऽन्त्यस्य, इति सूत्रेण दस्यैव लोपः स्यात्-इत्याशङ्कायाम् 'नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे' इति परिभाषया अलोऽन्त्यस्याऽप्राप्तौ-इद्भागस्यैव लोपे-अवशिष्टाकारस्य 'आद्यन्तवदेकस्मिन्' इतिशास्त्रसाहाय्येन सुपि च इति सूत्रेण दीर्घत्वे आभ्यामिति रूपं जातम् ।

## अमीभिः ।

अदस्शब्दात् तृतीयाबहुवचने भिसि समागतायां 'त्यदादीनामः' इति सस्यात्वे 'अतो गुणे' इति पररूपे च कृते नेदमदसोरिति ऐसनिषेधे 'बहुवचने झल्ये'दिति सूत्रेणाकारस्यैत्वे 'एत ईद्बहुवचने' इत्येकारस्येत्वे दकारस्य मकारे 'ससजुषो रुः' इति सकारस्य रुत्वे रेफस्य विसर्गे च कृते अमीभिरिति सिद्धम् ।

## अशिश्रियत् ।

श्रिधातोर्लुङि तिपस्मीति लुङस्तिपि 'च्लि लुङि' इति च्लौ णिश्रिद्रुस्रुभ्यः कर्तरि चङ् इति चङि अनुबन्धलोपे च श्रि-अ-ति इति स्थिते 'चङि' इति श्रीत्यस्य द्वित्वे 'हलादिः शेषः' इति रलोपे च कृते शिश्रि अ ति इति जाते 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यटि 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इति इकारस्येयङादेशे 'इतश्च' इति तिप इकारलोपे अशिश्रियत् इति सिद्ध्यति ।

## अनुरूपम् ।

रूपस्य योग्यम् अनुरूपमिति विग्रहे 'अव्ययं विभक्ती'त्यादि सूत्रेण समासे 'प्रथमानिर्दिष्टं समास उपसर्जनम्' इत्यनेन अनु–इत्यस्योपसर्जनसंज्ञायाम् 'उपसर्जनं पूर्वम्,' इत्यनेनोपेत्यस्य प्राक् प्रयोगे 'सुपो धातुप्रातिपदिकयोः' इत्यनेन सुपोलुकि ततः प्रातिपदिकत्वेन सौ, अनुबन्धलोपे 'अव्ययादाप्सुपः' इति सोर्लुकि प्राप्ते 'नाव्ययीभावादतोऽम्त्वपञ्चम्याः' इत्यनेनामि 'अमिपूर्वः' इति पूर्वरूपे अनुरूपमितिसिद्धम् ।

## जनमेजयः ।

जनान् एजयति इति विग्रहे णिजन्तएजिधातोः 'एजेः खश्' इति खशि खशयोर्लोपे 'कर्त्तरि शप्' इति शपि अनुबन्धलोपे कर्तृकर्मणोरित्यादिना कर्मणि षष्ठ्यां समासेन प्रातिपदिकत्वात् सुपो लोपे 'अतो गुणे' इति पररूपे 'अरुर्द्विषजन्तस्य मुम्' इति मुमि उकारमकारयोर्लोपे जनम् एज् इ अ इति जाते 'सार्वधातुकार्धधातुकयोः' इति सूत्रेण णिच इकारस्य गुणे 'एचोयवायावः' इति एकारस्यायादेशे विभक्तिकार्य्ये च कृते जनमेजय इति सिद्धम् ।

## अहर्गणः ।

अहन् गण—इत्यवस्थायां 'रोः सुपि' इति सूत्रेण सम्पूर्णस्याऽहन् शब्दस्य रुत्वे प्राप्ते 'अलोऽन्त्यस्य' इति परिभाषासूत्रेण अन्त्यनकारस्यरुत्वे अनुबन्धलोपे अहर्गण इति सिद्धम् ।

## बहुश्रेयस्याम् ।

बहुश्रेयसीशब्दात् प्रातिपदिकत्वेन ङिविभक्तौ ङकारस्येत्संज्ञाया लोपे च 'यूस्त्र्याख्यौनदी, इति सूत्रेण बहुश्रेयसीत्यस्य नदीसंज्ञायाम् 'आण् नद्याः, इत्यादि च 'ङेराम्नद्याम्नीभ्यः' इति ङेरामि 'इकोयणचीति यणादेशे वृद्धौ च बहुश्रेयस्यामिति सिद्धम् ।

## पन्थाः ।

पथिन्शब्दात् सौ 'पथिमथ्यृभुक्षामात्' इत्यनेननकारस्यात्वे 'इतोऽत्सर्वनामस्थाने' इति थकारोत्तरवर्तीकारस्याकारे 'थो न्थः' इति थस्य न्था-

देशे 'अकः सवर्णे दीर्घः' इति दीर्घे सु इत्यस्योकारस्येत्संज्ञायां लोपे सस्य रुत्वे विसर्गे पन्था इति जातम् ।

## प्राञ्चः ।

प्र पूर्वकात् अञ्च् धातोः क्विनि जसि विभक्तौ 'अनिदितां हल उपधायाः क्ङिति' इति सूत्रेण नस्य लोपे 'अचः' इत्यनेनाकारलोपे, 'चौ' इति पूर्वस्याणो दीर्घे प्राच् जस् इति दशायां जस्येत्संज्ञायां लोपे न सकारस्य रुत्वे विसर्गे च प्राञ्चः—इति साधु ।

## अचूचुरत् ।

चुर् धातोः 'सत्यापपाशे'त्यादिना सूत्रेण णिचि 'पुगन्तलघूपधस्य च' इत्यनेन गुणे 'चोरि—इत्यस्य धातुसंज्ञायां 'धातोर्लुङि' लुङि तिपि अडागमे च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इत्यनेन च्लेश्चङि—अनुबन्धलोपे 'इतश्चे'त्यनेन इकारलोपे 'णेरनिटि' इत्यनेन णिलोपे 'णौ चङ्युपधाया ह्रस्वः' इत्यनेन उपधाह्रस्वे 'चङि' इति द्वित्वे अभ्यासादिकार्ये 'दीर्घो लघोः' इत्यनेनाऽभ्यासस्य दीर्घे अचूचुरदिति जातम् ।

## रूपवद्भार्यः ।

रूपवती भार्या यस्य इति विग्रहे 'अनेकमन्यपदार्थे' इत्यनेन समासे समासात् सुपो लुकि 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु' इति रूपवतीत्यस्य पुंवद्भावे 'गोस्त्रियोरुपसर्जनस्य' इति भार्या इत्यस्य यकारोत्तरवर्त्याकारस्य ह्रस्वे स्वाद्युत्पत्तौ विभक्तिकार्ये रूपवद्भार्यः—इति जातम् ।

## एतन्मुरारिः ।

एतद् मुरारिः-इत्यत्र 'यरोऽनुनासिकेऽनुनासिकोवा, इत्यनेन स्थानप्रयत्नैक्यात् दकारस्य मकारे एतन्मुरारिरिति, अनुनासिकाऽभावपक्षे एतद्-मुरारिरिति च सिध्यति ।

## क्रोष्टुः ।

क्रोष्टु शब्दात् ङसि विभक्तौ अनुबन्धकार्ये 'विभाषातृतीयादिष्वचि, इत्यनेन क्रोष्टु-इत्यस्य तृज्वद्भावे क्रोष्टृ अस् इति स्थिते 'ऋत् उत् , इति पूर्वपरयोरुत्वेरपरे च 'रात्सस्य, इति सस्य लोपे 'खरवसानयोर्विसर्जनीयः' इत्यनेन रस्य विसर्गे क्रोष्टुः इति । तृज्वद्भावाऽभावपक्षे घिसंज्ञाया 'घेर्ङिति, इति गुणे 'ङसिङसोश्च, इति पूर्वरूपे क्रोष्टोः-इति रूपं जायते ।

## कुम्भकारः ।

कुम्भं करोतीति विग्रहे 'कर्मण्यण्' इत्यनेनाऽणि णकारस्येत्संज्ञाया लोपे कर्मणि षष्ठ्या च उपपदसमासे प्रातिपदिकसंज्ञाया प्रातिपदिकत्वेन 'सुपोधातुप्रातिपदिकयोः' इत्यनेन सुपोलुकि कुम्भ कृ अ इति स्थिते 'अचोऽञ्णिति इत्यनेन ऋ-इत्यस्यवृद्धौ रपरत्वे प्रातिपदिकत्वे विभक्तिकार्ये च कुम्भकार इति सिद्धम् ।

## चित्रगुः ।

चित्रा गावो यस्य इति विग्रहे 'अनेकमन्यपदार्थे, इत्यनेन बहुव्रीहिसमासे कृत्तद्धितेतिप्रातिपदिकत्वात् 'सुपोधातुप्रातिपदिकयोः' इति सुपोलुकि 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु, इत्यनेन चित्रेत्यस्य पुंवद्भावे गोस्त्रियोरुपसर्जनस्य, इत्यनेन गो इत्यस्य

ओकारस्य ह्रस्वे प्रातिपदिकत्वेन 'स्वाद्युत्पत्तौ विभक्तिकार्ये च चित्रगुः इति साधु ।

## यूनः ।

युवन् शब्दात् द्वितीयाबहुवचने शसि समागते लशक्वतद्धिते इति शस्येत्संज्ञाया तस्य लोप इति लोपे च कृते युवन् अस् इति स्थिते श्वयुवमघोनामतद्धिते इति वकारस्योकारे सम्प्रसारणे यु उ अन् अस् इति जाते सम्प्रसारणाच्चेति उकाराकारयोः स्थाने पूर्वरूपे 'अकः सवर्णे दीर्घः' इति दीर्घे यून् अस् इति दशाया पुनरपि श्वयुवमघोनेत्यादिना यकारस्य सम्प्रसारणे प्राप्ते न सम्प्रसारणे सम्प्रसारणमिति प्राप्तस्य सम्प्रसारणस्य निषेधे सस्य रुत्वे रेफस्य विसर्गे च कृते यूनः इति रूपं जायते ।

## षट्त्सन्तः ।

षड् सन्तः—इत्यत्र 'डःसिधुट्' इत्यनेन सस्य धुटि 'आद्यन्तौ टकितौ' इति बलेन सस्यादौ कृते षड्धुट् सन्त इति स्थिते—इत्सञ्ज्ञालोपयोश्च कृतयोः 'खरि च' इत्यनेन धकारस्य तकारे पुनः डस्य टत्वे च कृते षट्त्सन्त इति साधु ।

इयं प्रक्रियाऽत्रत्या भाषा च नाऽस्माकमिति अत्रत्यसूक्ष्मत्रुटीनां न वयं दोषभाज इति तु गौडाः ।

# लघुकौमुद्याः ३७ वर्षाणां प्रश्नपत्राणि

## १९०१

१ प्राच्छेति, गवाग्रम् ,रामश्चिनोति, वाग्धरिः,हरीरम्यः कथमेतेषां साधुत्वम् ।
२ हरौ, मत्याम् , दध्नि, एतानि रूपाणि साधयत ।
३ अनड्वान्, आभ्याम् ,अष्टौ, अमीभिः एतेषां सिद्धिप्रकारः प्रदर्शनीयः ।
४ बभूविथ, शृण्वः, अशिश्रियत्, आनक्, गृहाण, अवीभवत्, एतेषां साधुत्वं प्रदर्शयत ।
५ अनुरूपम्, महादेवः, ज्यायान्, एतेषां साधुत्वमुच्यताम् ।
६ जनमेजयः, द्रोणः, अनयोः साधुत्वं ब्रूत ।
७ कारिका, मातुलानी । अनयोः सिद्धिं प्रदर्शयत ।

## १९०२

१ कृष्णर्धिः, भगवाँस्तनोति, अहर्गणः,एष हसति—एतानि रूपाणि साधयत ।
२ सर्वेषाम्, सखा, बहुश्रेयस्याम्, तिसृणाम्, श्रुक्षु, पन्थाः, प्राचः, चूर्नाम् । एते साध्याः ।
३ गोपायाञ्चकार, अयुः, इयाज, एधि, अजनि, असात्, अचूचुरत् । एषां सिद्धिं प्रदर्शयत ।
४ भाविता, अभाजि, अनयोः साधुत्वमुच्यताम् ।
५ सुशर्मा । पचमानं चैत्रं पश्य । अनयोः साधुत्वं ब्रूत ।
६ हरित्रातः, रूपवद्भार्यः, द्वैमातुरः, तावकीनः, त्रिलोकी, चन्द्रमुखी । एतेषां शब्दानां साधनं स्वाधीतव्याकरणानुसारेण कार्यम् ।

## १९०३

१ विष्णोऽव, एतन्मुरारिः, सञ्छमु, हरिश्शेते । कथमेतेषां साधुत्वम्? ।

२ हरिणा, सखा, क्रोष्टुः, दध्ना । एतानि रूपाणि साधयत ।

३ अनड्वान्, असौ, पुमान्, अमूषाम् । एषां सिद्धिप्रकारः प्रदर्शनीयः ।

४ अभूवन्, जग्मतुः, वाढा, जहि, अजनि, अगिनट् । एषां साधुत्वं प्रदर्शयत ।

५ राजयुध्वा, क्षाम्मः । अनयोः साधुत्वमुच्यताम् ।

६ कुम्भकारः, चित्रगुः, गार्ग्य, मेधावी । एषां साधुत्वं ब्रूत ।

७ गोपालिका, आचार्यानी । एते साध्यौ ।

## १९०४

१ प्रौढः, प्राच्छति, तच्छास्त्रम्, एप विष्णुः । एतानि साध्यानि ।

२ हरौ, पत्युः, सर्वस्याम्, धुट्सु, अष्टानाम्, चतसृणाम्, युष्माकम् । एषां साधुत्वं प्रदर्शयत ।

३ भवेयुः, ऊढः, वर्त्स्यति, शेरते, अबोधि, अकार्षीत् एषां शब्दानां साधनं कार्यम् ।

४ कुरुचरः, मित्रः, अनरूपम्, अनश्वः, पौरन्दरिः, तावकीनः, एषां साधुत्वं विग्रहवाक्यानि च ब्रूत ।

५ पाचिका, पचन्ती, चन्द्रमुखी, एषां सिद्धिं प्रदर्शयत । स्वपरिगृहीत-व्याकरणानुसारेणोत्तराणि कार्याणि ।

## १९०५

१ कृष्णर्द्धिः, सञ्छम्सुः, मनोरथः, उत्थानम् । एतानि रूपाणि साधयत ।

२ सर्वेषाम्, मत्याम्, दध्ना, पन्थाः, तुभ्यम, धीमान्, अहोभ्याम् । एषां साधुत्वं प्रदर्शयत ।

३ अभवन्, अशिश्रियत्, ईयतुः, अजुहवुः, बुभूषति । एषां सिद्धिप्रकारः प्रदर्शनीयः ।

४ प्रियंवदः, उपकृष्णम्, लूनः, वीरपुरुषकः, गार्ग्यः, वैयाकरणः । एषां साधुत्वं विग्रहवाक्यानि च ब्रूत ।

५ मूर्द्धी, चन्द्रमुखी, वरुणानी । एषां सिद्धिं प्रदर्शयत ।

स्वाधीतव्याकरणानुसारेणाक्षराणि लेख्यानि ।

१९०६

१ हरेऽव, गवेन्द्रः, भो देवाः, मनोरथः । एतानि साधयत ।

२ सख्युः, क्रोष्टु, दधनि, धुक्षु, मघोनः, महान्, अस्याः । एषां साधुत्वं ब्रूत ।

३ बभूव ईजतुः, अधिजगे, जुहुधि, गृहाण । एषां सिद्धिप्रकारः प्रदर्शनीयः ।

४ राजयुध्वा, हित्वा, अनश्वः, चित्रगुः, वैयाकरण, तावकीनः, एषां साधुत्वं विग्रहवाक्यानि च ब्रूत ।

५ पचन्ती, सर्विका, सुमुखी, एषां सिद्धिं प्रदर्शयत ।

१९०७

१ कृष्णर्द्धिः, गवाग्रम्, सञ्छम्भुः, शिवोऽर्च्यः । एतानि साधयत ।

२ सखा, बहुश्रेयस्याम्, सर्वस्याम्, अस्मै, यूनः, उदीचः, पुमान् । एषां साधुत्वं ब्रूत ।

३ अभूवम्, गापायाञ्चकार, अधिजगे, बिभर्ति, गृहाण । एतान् साधयत ।

४ जनमेजयः, उपकृष्णम्, महाराजः, औपगवः, लघीयान् । एषां साधुत्वं विग्रहवाक्यानि च प्रदर्शयत ।

१९०८

१ प्राच्छति, तच्छिवः, प्राङ्षष्ठः, मनोरथः । एतानि रूपाणि साधयत ।

२ हरेः, क्रोष्टुः, मत्याम्, पन्थाः, अह्नानाम्, अमुष्यै । एषां साधुत्वं प्रदर्शयत

३ प्रभवाणि, एधाञ्चक्रे, ईजतु, मुक्षाष्ट, अबिभः, वृश्चात्, एषां सिद्धिप्रकारः प्रदर्शनीयः ।

४ शिष्यः, पचमानं चैत्रं पश्य, महाराजः, चित्रगुः, सैनापत्यम्, राजन्यः । एषां साधुत्वं विग्रहवाक्यानि च ब्रूत ।

५ गोपी, गार्ग्यायणी, अतिकेशी । एषां सिद्धिं प्रदर्शयत ।

## १९०९

१ कृष्णर्धिः, षट्सन्तः, पुंस्कोकिलः, शिवोऽर्च्यः। एतानि रूपाणि साधयत।

२ हरे, बहुश्रेयस्याम्, दध्ना, मघवान्, तिरश्चः, एषां सिद्धिं प्रदर्शयत।

३ बभूव, अचीकमत, अधिजगे, त्रभ्रष्ठ, एषां सिद्धिप्रकारः प्रदर्शनीयः।

४ देयम्, सरसिजम्, अध्यात्मम्, पीताम्बरः, गार्ग्यायणः, ज्यायान्, एषां साधुत्वं विग्रहवाक्यानि च ब्रूत।

५ गार्गी, चन्द्रमुखी, नारी, एतानि रूपाणि साधयत।

## १९१०

१ उपैधते, उत्थानम्, भो देवाः, एतानि रूपाणि साधयत।

२ सर्वेषाम्, सखा, श्रियै, पन्थाः, पुमान्। एषां साधुत्वं प्रदर्शयत।

३ अगौताम्, ईयतुः, अबिभः, अक्राक्षीत्। एषां सिद्धिप्रकारः प्रदर्शनीयः।

४ जनमेजयः, रागः, उपकृष्णम्, व्यूढोरस्कः, सैनापत्यम्, भूयिष्ठः। एषां साधुत्वं विग्रहवाक्यानि च ब्रूत।

५ सर्विका, शर्वाणी, दाक्षी। एतानि रूपाणि साधयत।

## १९११

१ गव्यूतिः, तवल्कारः, प्रेजते, उपैति, किम्वुक्तम्, विद्वाँल्लिखति, सन्त्स, नॄँः पाहि, चक्रिंस्त्रायस्व, एष विष्णुः, सैष दाशरथी रामः, एतेषां सन्धिविश्लेषः कार्यः। अत्र सूत्राणामुपस्थापनमनपेक्षितम्।

२ 'प्रश्नः' इत्यत्र कथं न श्चुत्वम्? 'सम्राट्' इत्यत्र मस्य कथं नानुस्वारः? 'षट् ते' इत्यत्र कथं न ष्टुत्वम्? 'त आगच्छन्ति' इत्यत्र च कथं न स्वरसन्धिः?

३ उभशब्दस्य सर्वादिगणे कथं पाठः?।

४ त्रयः, प्रध्यि, प्रणीणि, लिट्त्सु, विश्वाराट्। एतेषां साधुत्वं प्रदर्शनीयम्।

५ देव, अनडुह्, मातुल, श्वशुर, नर, शकट, युवन्, एतेषां स्त्रियां प्रथमैकवचने रूपाणि ब्रूत।

६ अरण्यानी, यवानी, एनी, एतानि साधयत ।

७ श्रेष्ठः, एतर्हि, कदा, स्त्रैणम्, प्रातृपेण्यम्, एतानि साधयत ।

८ सुराजा, द्व्यङ्गुलम्, भूतपूर्वः, दुर्यवनम्, नखनिर्भिन्नम्, पञ्चगवम्, अब्राह्मणः, स्त्रीप्रमाणः, जलजाक्षी, एतेषां विग्रहवाक्यानि प्रदर्शयानि ।

९ मा स्म भूः, जक्षिम, अग्निमरुः, व्यत्स्यति, भक्षीष्ट, दीयते, जरीगृह्यते । एतानि साधयत ।

१० भिदेलिमाः, दानीयः, कुशः, पक्वः, जगन्वान्, वराकः दर्शकः, पाकः, वेपथुः, सम्पत्तिः । एतेषां प्रकृतिप्रत्ययविश्लेषः कार्यः ।

१९१२

१ गो—अग्रम् इति स्थिते कानि सन्धिकार्याणि प्राप्नुवन्ति ? । कृतेषु सन्धिकार्येषु कानि चास्य रूपाणि जायन्ते ।

२ अद्भिः, महाम्, भृट्, अतिचम्वाः । एतानि साधयत ।

३ घिसंज्ञाकार्याणि सोदाहरणानि ब्रूत ।

४ कण्ठेकालः, घनश्यामः यूपदारु, अधिहरि । एतेषां विग्रहवाक्यानि साधकसूत्राणि च ब्रूत ।

५ भूयिष्ठः, कथम्, म्रदिमा, पाणिनीयम्, एतेषां प्रकृतिप्रत्ययविश्लेषः कार्यः ।

७ चिकीर्षा, यशः, कालिम्मन्या, अस्तानि, बोभूयुः । एतान् साधयत ।

१९१३

१ श्वश्रूः मानुषी, शकटी, मन्दा, एतानि साधयत ।

२ पितरौ, प्रपर्णः, राजदन्तः, अतिमालः । एतेषां विग्रहवाक्यानि साधकसूत्राणि च ब्रूत ।

३ श्रेयान्, कर्हि, अतः, अर्णवः, हैयङ्गवीनम् । एतेषां प्रकृतिप्रत्ययविश्लेषः कार्यः ।

४ 'सुधां क्षीरनिधिं मथ्नाति' इत्यस्य गौणकर्मत्वविवक्षायां 'सुधाम् इत्यस्य' किंरूपं भविष्यति । ?

५ पाकः, स्तोत्रम्, जगन्वान्, अदायि, अशिनट्, एतानि साधयत ।
६ 'आस्तेसिचो ऽपृक्ते', इति सूत्रे 'अस्ति', इत्यस्य कोऽर्थः ।
७ नदीसंज्ञाकार्याणि सोदाहरणानि ब्रूत ।
८ पुंस्कोकिलः, किम् ह्लयति, तच्छिवः । विष्ण इति । कर्कन्धु । एतेषां सन्धिविश्लेषः कार्यः ।

१९१४

१ गव्यूतिः । उपैधते । उत्थानम् । तच्छिवः । एतानि साधयत ।
२ सखा । पत्युः । सर्वस्याम् । जरसः । श्रीपम् । हे अनड्वन् । यूनः । युष्माकम् । एतानि साध्यानि ।
३ अधिहरि । अभूवन् । ऐधिढ्वम् । वर्त्स्यति । अजुहवुः। एतानि साधयत
४ कुरुचरः । यशस्करी । अनश्वः । उपकृष्णम् । गार्ग्यः। एतानि साधयत
५ गौरी । मृद्वी । गोपी । सुमुखी । एतेषां सिद्धि प्रदर्शयत ।

१९१५

१ यवनानी, रोहिणी, मन्दा, गौरमुखा । एतानि साधयत ।
२ बहुपटुः, उच्चकैः, क्व, प्रथिमा, अधार्मिकः । एषां प्रकृतिप्रत्ययविश्लेषः कार्यः ।
३ युक्तयोगः, अहोरात्रः, शाकपार्थिवः, दुर्यवनम्, शष्कुलाखण्डः । तेषु विग्रहवाक्यानि साधारणसूत्राणि च ब्रूत ।
४ आधारभेदान् सोदाहरणान् प्रदर्शय ।
५ 'षष्ठी शेषे' इति 'शेष' इत्यस्य कोऽर्थः ? ।
६ दुष्करः,निकायः, पारदृश्वा, अवित्त, अरुणत्, आनर्च । एतानि साधयत
७ पय', एतयोः, अनडुद्भ्याम्, श्रियाम् । एतानि साधयत ।
८ 'विष्णो इति इति स्थिते कानि रूपाणि सिध्यन्ति ? ।
९ के कदा प्रगृह्यसंज्ञा प्राप्नुवन्ति ? किञ्च तत्संज्ञाफलम् ? ।

१९१६

१ यशस्करी, जनमेजयः, प्रियंवदः, उष्णभोजी, पण्डितम्मन्यः। एतानि साधयत।

२ स्मरसि कृष्ण गोकुले वत्स्यामः, कदागमिष्यसि, एष गच्छामि, यजति युधिष्ठिरः, पुत्रमध्यापयेद् भवान्, एषां साधुत्वमुपपादनीयम्।

३ पुत्रीयति, कृष्णति, वरीवृताञ्चक्रे। एतान्यपि साधयत।

४ भयम्, कापेयम्, भवनम्, ऊरुदघ्नम्, इयान्। एषां प्रकृतिप्रत्यय-विश्लेषः कार्यः।

५ चित्रगुः, व्याघ्रपात्, आचार्यः, निष्कौशाम्बिः, पूर्वकायः। एषां विग्रह-वाक्यानि साधकसूत्राणि च ब्रूत।

६ गव्यूतिः, प्रौहः, सन्तः, हरीरम्यः, संस्कर्ता। एषां सन्धिविश्लेषः कार्यः।
नृन्—पाहि इति स्थिते कानि रूपाणि सिध्यन्ति ?।

८ निर्जर, सर्व, हरि, मति, विश्वपा, श्री—एषां द्विविभक्तिषु कानि रूपाणि भवन्ति ?।

१९१७

१ गवाग्रम्, उत्तम्भनम्, सञ्छम्भुः, मनोरथ; एषु सन्धिकार्याणि ब्रूत।

२ विश्वपः क्रोष्टुः सुधिया, महान् एतेषां सिद्धिं लिखत।

३ अभवन् अगोपीत् अध्यगीष्ट अचकथत, एतानि साधयत।

४ अतिष्ठिपत्, वाव्रजाञ्चक्रे, राजानति, आरिता। एषां साधुत्वं विशदं निरूपयत।

५ ग्लानः, वैयाकरणः, त्वचिष्टः। एषु विशेषकार्याणि निर्दिशत।

६ गाङ्ग, शुक्लीकृत्य, जलजाक्षा, रम्यपथः, एनी। एतेषां सिद्धिप्रकारः प्रदर्शनीयः।

१९१८

१ कृष्णर्धिः, गङ्गे अमू, तच्छिवः, शिवोऽर्च्यः, उत्थानम्, सञ्शम्भुः, सन्तः, कथमेते साधवः ?।

२ हरिमतिदधियुष्मच्छब्दानां चतुर्थी पञ्चमीसप्तम्येकवचनेषु कीदृशानि रूपाणि ? कथञ्च तत्सिद्धिः ?।

३ अचीकमत, अचकमत, अगात्, एषा सिद्धिः ? । जिघत्सति, वरीवृत्यते, सख्यौ, हरिमुपकुरुते । एषु विशेषकार्याणि प्रदर्शयत ।

४ गार्ग्यः, राजयुध्वा, अत्र कः प्रत्ययः ? सन् द्विजः, प्राट्, स्तोत्रम्, लूनिः, स्मारं स्मारं नमति शिवम् । कथमेतेषां साधुत्वम् ? ।

५ गार्ग्यः, द्वैमातुरः, रूपवद्भार्यः एषां सिद्धिप्रकारः कः ? कश्च विग्रहः ? ।

६ गार्गी, गोपी, शर्वाणी, दाक्षी । एतानि रूपाणि साधयत ।

१९१९

१ तवल्कारः, विष्ण इह, सुखार्तः । चक्रिस्त्रायस्व, सञ्छम्भुः, एतानि रूपाणि साधयत ।

२ सर्वेषाम्, सखा, श्रियै, पुमान्, पन्थाः, कतरत्, अनेन, मघोनः, अमीषु । कथमेते साधवः ? ।

३ अगोप्ताम्, ईयतुः, अजुहवुः, चिकाय, अस्राक्षीत्, वरीवृत्यते, पथीनति, अत्रीभवत् । एतेषां साधनप्रकारः प्रदर्शनीयः ।

४ जनमेजयः, सुकरः, रागः, सैनापत्यम्, तावकीनः, वैयाकरणः, उपकृष्णम्, अनश्वः, व्यूढोरस्कः । कथमेतेषां साधुत्वं ? कश्च विग्रहः ।

५ सर्विका, चन्द्रमुखी, युवतिः, गङ्गीस्यात्, सर्वस्मिन्नात्मास्ति । एते प्रयोगाः साधनीयाः ।

१९२०

१ अणुदित्सवर्णस्य चाप्रत्ययः, तपरस्तत्कालस्य, इकोऽसवर्णे शाकल्यस्य, ह्रस्वश्च निपात एकाजनाङ्, एतेषामुदाहरणप्रदर्शनपुरस्सरमर्थं लिख ।

२ नॄः पाहि, रामाय, सर्वस्मै, जरसौ, विश्वपः सुपदः, लिट्सु, एते प्रयोगाः साधनीयाः ।

३ रमायाः, सर्वस्याः, ज्ञानानि, मघोनः, यज्वनः, वृत्रहणौ, विदुषः, पिपठीः, एतानि साधय ।

४ एधाचक्रे, अभूत्, अव्याचीत्, अभ्राक्षीत्, अमार्क्षीत्, अमृक्षत, उपस्किरति, भाविता । भविता । एतेषां साधनप्रक्रिया वक्तव्या ।

५ 'गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः' एतत्सूत्रार्थोदाहरणानि प्रदर्शय ।

६ शष्कुलाखण्डः, अक्षशौण्डः, नखनिर्भिन्नः, गोहितम्, पञ्चगवधनः । एतेषां समासविधायकानि सूत्राणि वद ।

७ 'कर्तुरीप्सिततमं कर्म', 'कर्तृकर्मणोः कृति' गतिबुद्धि—' 'कर्मणा यमभिप्रैति'—'एतेषामर्थं सोदाहरणं लिख ।

८ मारीचिकम्, धानुष्कः, युग्यः, दर्शनीयमानी, त्राणः, अरित्रम्, दर्शकः पचेलिमाः—एते साधनीयाः । १९२१

१ गवाग्रम्, मार्तण्डः, आच्छैत्, तच्छ्लोकेन, एषको रुद्रः, क्रोष्टा, श्रीणाम्, एतानि सन्धिविश्लेषपुरस्सरं तत्तत्कार्यविधायकसूत्रप्रदर्शनेन साधनीयानि ।

२ विद्वान्, वृत्रघ्नः, युष्माकम्, उदीचः, असौ, उपानत्, दीव्यन्ती । एतानि रूपाणि साधयत ।

३ आतीत्, अगोपीत्, अगमत्, अत्रपिष्ट, ऊर्णविषीष्ट, जहाहि, नङ्क्ष्यति, एतेषां साधनप्रकारः प्रदर्शनीयः ।

४ दुधविव, क्रष्टा, उपस्किरति, आञ्जीत्, उपस्कृतं ब्रूते, अजीगणत्, अतिष्ठिपत्, कथमेतेषां साधुत्वम् ? ।

५ चिकीर्षति, वाग्वजाञ्चके, अवोभूवीत्, वाच्यति, राजानति, अवतिष्ठते, विरमति । एषां विग्रहवाक्यानि सावकसूत्राणि च ब्रूत ।

६ भावयिषीष्ट, तायते, भिद्यते काष्ठम्, यजति स्म, देयम् मार्ग्यः, वशंवद, रागः, श्रावं श्रावम् । एषु विशेषकार्याण्युल्लिखत ।

७ ग्राममजां नयति, वनस्य दूरे, उपकृष्णम्, कुम्भकारः, कल्याणप्रियः, एषु कारकसमासादिविधायकानि ब्रूत ।

८ पौंस्नः, ग्रामीणः, युष्मदीयः, मातुलानी, सौपर्णेयी, अश्वपालिका, धनक्रीता, वैदी, एतानि साधयत ।

१९२२

१ हर इह, पचेते इमौ, सर्पिष्टमम्, कॉस्कान्, स गम्मुः, एतानि विश्लेषपूर्वकं तत्तत्कार्यविधायकसूत्रदर्शनेन साधय ।

२ द्वितीयायै, कति, बहुश्रेयस्याम्, तिस्रः, यज्वनः, एतानि साधयत ।

३ अष्टौ, आवाम्, अमी, अगादीत्, जुगोपिथ, एषां साधुत्वं दर्शयत ।

४ ऊवोढ, जहि, अधिजगिरे, स्तरिषीष्ट, असात, एषां सूत्रोल्लेखपूर्वकं साधुत्वं ब्रूत ।

५ बुभूषति, नरीनृत्यते, एदिधिषते, अभिक्षिपति, अलम्भि, एते । विग्रहवाक्यानि साधकसूत्राणि च दर्शयत ।

६ गां दोग्धि पयः, मातुः स्मरति, नखनिर्भिन्नः, पञ्चगवधनः, द्वादश । विशेषकार्यं प्रदर्श्यैतानि साधयत ।

७ कानीनः, भैक्षम्, अतिकेशी, मानुषी, वामोरूः । अत्रपूर्वोक्तोदाहरणद्वये केन कस्मिन्नर्थे कः प्रत्ययः ? । परोदाहरणत्रये विशेषसूत्राणि ब्रूत ।

१९२३

१ गवेन्द्रः, चक्रि अत्र, संस्कर्ता, एष विष्णुः । अत्र सन्धिकार्यं विशेषसूत्रोपन्यासैदर्शनीयम् ।

२ (क) विश्वपा, नरि, चतसृणाम्, दध्नि, युङ्, आसु, तुदन्ती, एतानि पदानि साधनीयानि ।

(ख) पिबध्यै, कृत्वा, अधिहरि । किंसंज्ञकानीमानि पदानि इति शास्त्रप्रमाणानुपदं दर्शनीयानि ।

३ एधै, विदाकुर्वन्तु, तस्तार, गृहाण, अबीभवत्, इदामति । अत्र प्रकृतिप्रत्ययनिदर्शनपूर्वकं सिद्धिप्रकारः स्फुटीकरणीयः ।

४ (क) सरोजम्, हितम्, रासः, प्रकृत्य । अत्र के प्रत्ययाः ? ।

(ख) पञ्चगङ्गम्, अतिमालः, पितरौ, एषु पदेषु समसनविधिमुक्त्वा, पार्शुपतम्, शालीयः, ज्येष्ठः, चन्द्रमुखी, कल्याणक्रोडा, एतानि रूपाणि साधनीयानि ।

१९२४

१ कृष्णर्द्धिः, शिवेहि, विष्णो इति, चक्रिंस्त्रायस्व, तृढः, एतानि सन्धिविश्लेषपूर्वकं तत्तत्कार्यविधायकसूत्रप्रदर्शनेन साधनीयानि ।

२ प्रथमे, सख्युः, कति, क्रोष्टुः, मतये । वारिणे । एषां साधुत्वं दर्शयत ।

३ आतीत्, अगोपीत्, अगमत्, अक्षपिष्ट, जहाहि, नत्स्यति, एतेषां साधनप्रकारः प्रदर्शनीयः ।

४ आत । क्राम्यति । अचकमत, आदत् । धुक्षीष्ट । पिपूर्त्तः । एषां सूत्रो-ल्लेखपूर्वकं साधुत्वं ब्रूत ।

५ कथयति । अजिज्ञपत् । जिघत्सति । अञोमवीत् । दायिता । मार्ग्यः । कालिमन्या । एषां विग्रहवाक्यानि साधकसूत्राणि च प्रदर्शयत ।

६ ग्रामादायाति । सुमद्रम् । अनश्वः । महायशस्कः । दैत्यः । हिमानी । मत्सी । एतानि तत्तत्कार्यं प्रदर्श्य साधु साधनीयानि ।

१९२५

१ श्रीशः । शिवच्छाया । प्रत्यङ्ङात्मा । शार्ङ्गिञ्जय । शम्भू राजते । एतेषु सन्धिकार्य्याणि दर्शयत ।

२ रामस्य । हरेः । क्रोष्टुः । रमायाः । वारिणः । अनड्वान् । राजा । त्वया । अह्नोभ्याम्, पयांसि । केषां शब्दानां कस्यां विभक्ताविमानि रूपाणि ? । २५

३ जगाद, जहार, जग्मतुः, जघ्नतुः, उद्विजिता, एते कथं सिध्यन्ति ? । १५

४ चिकीर्षति, प्रतिष्ठते, हितम्, चरित्रम्, पाकः । एषु विशेषकार्य्य-विधायकानि शास्त्राणि लिखत । १५

५ उपकृष्णम् । परमराजः । चित्रगुः । राजन्यः । मेधावी । कुमारी । युवतिः, एते साधनीयाः ।

१९२६

१ आक्षीत् । अमृषत । आनर्च्छ । दिदीयिरे । अचकथत्-एतानि साध्यन्ताम्

२ निर्मक्षिकम् । पञ्चगवधनः । सर्वरात्रः । अलङ्कुमारिः । सुपात् । अश्व-क्रीती । एषु समासनामनिर्देशपुरस्सरं विशेषकार्याणि दर्शय ।

३ वृत्यः । ग्रहम् । विजावा । भावितः । चक्राणः । खनित्रम् । भोजंभोजम् । लेखित्वा । हारणा-एषु कस्मिन्नर्थे कस्कः प्रत्ययः ? ।

४ राजनः, बन्धुता, पैतामहकः, धौरेयः, ज्ञातेयम्, विंशः, श्रेयान्—एषु विग्रहनिर्देशपुरस्सरं साधनप्रकारः प्रदर्शनीयः ।

५ अपूपमयं पर्व । पटपटाकरोति । गार्गी । चन्द्रमुखी । गवयी । सूरी । अबोभूयिष्ट । सर्पिषो जानीते । एतानि साधनीयानि । २०

१९२७

१ गो यूतिः, चक्री—अत्र, उद् स्थानम्, सः—एषः । एतेषु सन्धिकार्याणि

सप्रमाणं निरूप्य, वृद्धि—कर्म—द्विगुसंज्ञाविधायकानि सूत्राणि सोदाहरणानि प्रदर्शनीयानि । २०

२ त्रिचतुःशब्दयोः पुंसि स्त्रियां च रूपाणि संसाध्य, इदंशब्दस्य स्त्रिया रूपाणि लेख्यानि । २०

३ अभूवम्, अकामत्, एधाचकृढ्वे, अवोचत, जहिहि, एतेषु त्रीन् प्रयोगान् संसाध्य कृष विलेखने इति धातोर्लुङि प्रथमपुरुषैकवचने रूपाणि साधनीयानि । २०

४ अबीभवत्, जिवत्सति, वरीवृताञ्चके, अबोभविष्यत्, असृष्ट, शब्दायते, एतेषु चतुरः प्रयोगान् प्रसाध्य अभाजि इति रूपं साधनीयम् । २०

५ मृज्यः, पण्डितम्मन्यः शमित्वा, एतेषु द्वौ प्रयोगौ प्रसाध्य तत्रैव विषये पक्षान्तरीयरूपमपि प्रदर्श्य—महाराजः तावकीनः, अरण्यानी, एते प्रयोगाः साधनीयाः । २०

## १९२८

१ कृष्णैकत्वम्, गवाग्रम्, वाग्घरिः, लक्ष्मीच्छाया, शिवोऽर्च्यः । मनोरथः । एते प्रयोगाः सूत्रोपन्यासेन साधु साध्यन्ताम् ।

२ सर्वेषाम् । मत्याम् । प्रशाम्याम् । चत्वारः । मघवा । अद्भिः । एते प्रयोगाः ससूत्रनिर्देशं साध्यन्ताम् । १५

३ आसीत् । अगौप्सीत् । अम्लासीत् । एधिष्ट । जहि । अधुक्षत् । ससौ । एते प्रयोगाः सूत्रोपन्यासेन साध्यन्ताम् ।

४ अचूचुरत् । अबीभवत् । वरीवृत्यते । दायिषीष्ट । चेयम् । विदन् । द्युतित्वा । एते प्रयोगाः सूत्रोपन्यासेन साध्यन्ताम् । २०

५ अनश्वः । स्थूलाक्षा । राजदन्तः । औपगवः । वैयाकरणः । तृतीयः । एषु तत्तत्कार्याणि समुल्लिख्य, कर्तृ—करण—सम्प्रदानसंज्ञाविधायकानि सूत्राणि लिख्यन्ताम् । ३०

## १९२९

१ हरे—इह, विष्णो इति, ब्रह्मा—ऋषिः, सन्—शम्भुः, चक्रिन्—त्रायस्व एषु संहितायां कानि रूपाणि भवन्ति ? संसाध्य दर्शयत । २०

२ रामेण, हरिणा, पत्यौ, मत्याम्, वारीणाम्, मघवा, अष्टौ, चत्वारि, एतानि वचनोपन्यासपुरस्सरं साधयत ।

३ जुगोप्थ, आदिथ, जघनिथ, चकरतुः, चक्रतुः, अगान, स्तमान, कया प्रक्रियचैते साधुता प्रतिपद्यन्ते ? । २०

४ परमराजः, षाण्मातुरः, चित्रगुः, आदित्यः, आश्वपतः, पारावारीणः, गोमान्, मेधावी, एषु विशेषकार्याणि दर्शयत । २०

५ इत्यः, शप्यम्, प्रश्नः, उच्छूनः धूत्वा, कुमारी, युवतिः, प्रत्ययविशेषान् प्रदर्श्य साधयैतान् ।

१९३०

१ शिव—एहि, सन्—शम्भुः, चक्रिन्—त्रायस्व, चिद्-मयम्, आसु स्थितिषु संहितायां कानि रूपाणि सिध्यन्ति कथं च तानीति साधु दर्शयत । १६

२ कति, सख्या, क्रोष्टा, दध्ना, अष्टौ, अहानि, चत्वारि, एतान् साधयत ।

३ अभूत्, जग्मतुः, जक्षतुः, विमितात्, उद्भिजिता, आनक्, स्तमान । एतान् सूत्रोपन्यासपुरस्सरं साधयत । २२

४ अचूचुरत्, बुभूषति, सन्तिष्ठते, भाविता, लूनः, धूत्वा, प्रदाय । एषु विशिष्टकार्याणि वचनान्युपन्यस्य दर्शनीयानि । १६

५ हरये नमः, एधोदकस्योपस्कुरुते, परमराजः, चित्रगुः, जलजाक्षी, गार्ग्यः, स्रग्वी, कुमारी, युवतिः, श्वः, एतेषां साधनप्रकारः स्पष्टमुपपादनीयः ।

१९३१

१ विष्णो इति, उद् स्थानम्, भोस् देवाः, सस् शम्भुः अत्र स्थितौ सिद्ध-रूपाणि स्फुटं संसाध्य दर्शनीयानि । १०

२ विश्वपि, बहुश्रेयस्याम्, सर्वस्याम्, मत्याम्, षण्णाम्, अष्टानाम्, युष्माकम्, अमीषाम् । विशेषकार्य्यप्रदर्शनपुरस्सरमेतान् साधयत । २०

३ भूयास्ताम् । ह्वयास्ताम्, अभक्षाताम्, अवक्षाताम्, अधुक्षाताम्, वैशद्येन साधनीया एते । २०

४ बुध्-युध् भ्रस्ज-मस्ज धातूनां लिटि, थलि, मुच्-सिच् मृश्-कृष्-धातूनां लुङि प्रथमपुरुषैकवचने रूपभेदान् वचनोपन्यासपुरस्सरं साधयत । २०

५ चिकीर्षति, राजीयति, व्यतिघ्नन्ति, इज्यते, भुग्नः, वराकी, वेला भोक्तुम्, अपामार्गः, हत्वा, सर्पिषो जानीते, पञ्चगङ्गम्, पञ्चगवम्, रम्यपथः, शाराव ओदनः, क्षत्रियाः—एते कथं सिद्ध्यन्ति ? ।

१९३२

१ हर इह, शिवेहि, उत्थानम्, मनोरथः, रामाय, निर्जरसो, विश्वपाः—एते प्रयोगाः सूत्रनिर्देशेन साधु साधनीयाः ।

२ सर्वस्याम्, ज्ञानानि, विश्वौहः, युष्माकम्, उशनाः, अमूनि—एतेषां साधनं विधेयम् । २०

३ भवति, अभूत्, गोपायाञ्चकार, एधाञ्चक्रे, जघास, जुहोति, दधाति, कुरुतः, गणयति एते धात्वर्थनिर्देशेन साधनीयाः । १५

४ पिपठिषति, बोभूयते, पुत्रीयति, देयम्, भिन्नः, प्रकृत्य । एते प्रकृति-प्रत्ययनिर्देशेन साधनीयाः । १५

५ हरिं भजति, कटे शेते, अधिहरि, राजपुरुषः, चित्रगुः—एषु आद्यद्वये कारकविभक्तिं प्रदर्श्याऽन्त्येषु विग्रहप्रदर्शनेन साधनं विधेयम् । १५

६ औपगवः, वैयाकरणः, गोमयम्, दण्डी, कृतः, युवतिः एते सूत्र-निर्देशेन साधनीयाः । १५

१९३३

१ हर इह, गो अग्रम्, पुंस्कोकिलः, देवायिह, सर्वेषाम्, हरेः, क्रोष्टुः एते प्रयोगाः साधु साध्यन्ताम् । २१

२ तिस्रः, प्रणीणाम्, राज्ञः, पन्थाः, एतेषां साधनं विधेयम् । १०

३ भूयात्, आतिष्ठ, कामयाञ्चक्रे, विदाङ्करोतु, नर्त्स्यति, अस्तम्भीत्, अजीगणत् एते प्रयोगा धात्वर्थनिर्देशपुरस्सरं साधनीयाः । २१

४ चिकीर्षति, शिष्यः, क्षामः, सुपानः, शयित्वा, विग्रहपुरस्सरं साधन-प्रकारः प्रदर्शनीयः । १५

५ उपराजम्, पञ्चगवम्, दीर्घसक्थः, प्राञ्चो रथः, एतेषां विग्रहप्रदर्शन-पुरस्सरं साधनं प्रदर्श्यताम् । १२

६ राजन्यः, यौवतम्, राष्ट्रियः, तर्हि, एता, वृषली, मत्सी । एते प्रयोगाः सविग्रहं साध्यन्ताम् । २१

१९३४

१ प्रष्ठौहः, गोऽग्रम्, किमुक्तम्, तच्छ्लोकेन, देवायिह । एषु सन्धि-कार्याणि सूत्रनिर्देशपुरस्सरं लिखत । १०

२ सः+गच्छति । कवी+अमू । गौः+चरति । भानो+इति—एषां संश्लिष्ट-रूपाणि सप्रमाणं प्रदर्शयत । १२

३ 'सखि, भ्रू' एतयोः सप्तम्येकवचने रूपे संसाध्य 'पृष्, पिपठिष्, अदस्, एषां सप्तमीबहुवचने रूपाणि साधयत । २०

४ क्रमु पादविक्षेपे, डुदाञ् दाने, दीङ् क्षये एषां लुङि प्रथमपुरुषैक-वचने कीदृशानि रूपाणि, कश्च तत्सिद्धिप्रकारः ? ।

५ गुपू रक्षणे, दीङ् क्षये, ह्री लज्जायाम् एषां लिटि प्रथमपुरुषैकवचने विशेषकार्यनिर्देशपुरस्सरं रूपाणि संसाध्यन्ताम् । १५

६ जिघत्सति, भुग्नः, भावितः, हरिणा एषां सिद्धिप्रकारः कः ? । १०

७ अतिहिमम्, पञ्चगवम्, चित्रगुः, त्रिमूर्धः—एषां विग्रहनिर्देशपुरस्सरं समासविधायकानि सूत्राणि निर्दिशत । १०

८ षाण्मातुरः, शारावः, श्रोत्रियः, क्षत्रियाणी एषु विग्रहार्थप्रदर्शनपुर-स्सरं प्रत्ययविधायकानि सूत्राणि निर्दिशत । ८

१९३५

१ शिवेहि, अमी ईशाः, अहर्गणः, देवा इह । एषु प्रयोगेषु सन्धिकार्य्याणि तत्प्रतिबन्धकानि सूत्राणि दर्शनीयानि । १५

२ रामाय, सर्वेषाम्, पत्यौ, मत्याम्, लिट्सु, त्वयि, प्राचः, पुंभ्याम्, अहःसु, धनूंषि । एतानि पदानि संक्षिप्तोपयुक्तप्रक्रियया साधनीयानि ३०

३ अभूवम्, अक्षैषीः, अशृणवम्, जघन्थ, जघनिथ, दधाथ, अनजानि, अक्षत, स्तमान, गृहाण एतान् विशेषकार्य्याणि प्रदर्श्य साधयत । ३०

५ बुभूषति, प्रतिष्ठते, स्मरसि कृष्ण गोकुले वत्स्यामः, आदृत्य, भुग्नः, हित्वा, परपराजः, वाहीकः, मेधावी, अमुतः । एते साधनीयाः । २५

१९३६

१ कृष्णर्द्धिः, उ उमेशः, किल्ह्लादयति, शम्भू राजते एतेषु सूत्रोल्ले-खपूर्वकं सन्धिकार्याणि दर्शयत । २०

२ पूर्वस्मात्, प्रत्यम्, श्रीणाम्, कतरत्, राजभिः, युष्मभ्यम्, समीचः, दक्, तुदन्ती, उदेतोः एतानि संक्षिप्तप्रक्रियया साधनीयानि । ३०

३ आतिष्म, अहत, दासीष्ट, ससौ, लोभिता, कुर्वीत, गृहाण, अजीगणत् ।

—एतानि रूपाणि सम्यक् साधनीयानि । ३२

४ जिघत्सति, सरोजम् , उष्ट्रिसम् एते प्रयोगाः साधनीयाः । ९

५ धावतोऽश्वात्पतति, यूपदारु, औत्सः, गोपी- एषु प्रयोगेषु विशेष-
कार्याणि दर्शनीयानि । ९

१९३७

१ (क) सुद्ध्युपास्यः, गवाग्रम्, उत्थानम्, शिवोऽर्च्यः, एते प्रयोगाः
साध्यन्ताम् । १२

(ख) 'अहो ईशा' इत्यत्र किं सन्धिकार्य्यं प्राप्तम् ? कथं वा तदभावः ?
इति लेखनीयम् । ३

२ 'युष्मद्' शब्दस्य सर्वासु विभक्तिषु, 'श्रु श्रवणे' इत्यस्य लिटि, 'ञिष्वप्
स्वप्ने' इत्यस्य च लुङि रूपाणि लेख्यानि ।

३ रामाय, बहुश्रेयस्याः, सर्वस्य, दध्ना, चतुर्णाम्, युष्माकम्, अमुष्य,
अहोभ्याम्, पिधानम्,—एषां मध्ये सप्त प्रयोगाः साधनीयाः । २१

४ अभूवन्, अचीकमत, विदाचकार, जहीहि, अपादि, दुधविथ, उपास्कि-
रत्, तृणेढि, उपस्कुरुते, प्रमिमीते, अचूचुरत्,- एतेषु प्रयोगेषु अष्टौ
साधनीयाः । २३

५ (क) त्रोभवाञ्चकार, याच्ञा, अन्यथाकारम्, अर्द्धपिप्पली, अर्द्धर्चः,
पारलौकिकम्, प्रथिमा, भूयिष्ठः, इन्द्राणी, एतेषां मध्ये षट् प्रयोगा
साध्यन्ताम् । १८

(ख) 'अकथितञ्चे'ति सूत्रस्योदाहरणानि प्रदर्शनीयानि । ४

१९३८

१ गव्यूतिः, प्रार्णम्, सन्नच्युतः, शम्भू राजते एषु प्रयोगेषु सञ्जातं
सन्धिकार्यं दर्शयत । १२

२ 'विष्णो इति' इति स्थिते कानि कानि कार्याणि भवन्ति कानि च रूपाणि ?
स्पष्टं—लिखत । ३

३ हरेः, प्रध्यि, स्त्रियम् , हे मधु, चतुर्णाम् , अमीभिः,अनया, दीव्यन्ति—
एषु केचन सप्त प्रयोगाः साधनीयाः । २१

४ अभूवन् , भेजे, जघसिथ, जिह्रीयात् , स्यति, स्तर्यात् , औनत् , कुर्व-

न्ति, स्तरिषीष्ट, अजीगणत्—एषु कान्यपि सप्त रूपाणि साधनीयानि । २८

५ पिपठिषति, बोभूयात्, अस्तावि, पचेलिमाः, सुशर्मा, हितम्, द्युतित्वा, सहरि, अहोरात्रः,—एषु केऽपि षट् प्रयोगाः साधनीयाः । १८

६ श्वाफल्कः, पित्र्यम्, पटपटाकरोति, गकटी, अतिकेशी--एषु कान्यपि चत्वारि रूपाणि साधयत । ८

७ 'सखि'शब्दस्य सर्वासु विभक्तिषु, 'गुप्' धातोर्लुटि, 'मीञ्' धातोर्लिङि—रूपाणि लेखनीयानि । १०

१९३९

१ क, छ, ड, ध, म, श, इत्येतेषां वर्णानां कानि बाह्यप्रयत्नानि । ६

२ शिवेहि, अमुकेऽत्र, संस्कर्ता, मनोरथः, एतेषां प्रयोगाणां सशास्त्रं सिद्धिं प्रदर्शयत । १६

अथवा

गो+अग्रम्, त्वं+करोषि, सन्×शम्भुः, नॄन्×पाहि, इत्यस्यां स्थितौ कानि रूपाणि भवन्ति, कथञ्च तत्सिद्धिरिति ससूत्रं प्रतिपादयत ।

३ रामाय, स्त्रियै, विश्वौहः, बभूव, मिमीते, अहिनः,—एषु प्रयोगेषु ससूत्रं सिद्धिप्रकारं लिखत । २४

४ अबोभोत्, अलाभि, अवावा, शुभंयुः, मानुषी, विप्राय गां ददाति । एतान् प्रयोगान् सम्यक् प्रसाधयत । २४

५ अन्तादिवच्च, प्रथमलिङ्गग्रहणं च, नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे, आद्यन्तवदेकस्मिन्—एतेषां शास्त्राणां सोदाहरणमर्थं ब्रूत । १०

अथवा

नेर्गद०, पाघ्राध्मा० दाम्नीश०, अव्ययं विभक्ति०, पङ्क्तिविंशति,०, एतानि केवलानि सूत्राणि सम्पूर्णानि शुद्धानि विलिखत ।

६ समासः कतिविधः । कानि च तदुदाहरणानीति स्पष्टं प्रतिपादयत १०

७ त्रिषु लिङ्गेषु द्वि, त्रि, चतुर् शब्देष्वन्यतमस्य, युष्मदस्मदोरन्यतरस्य च सर्वासु विभक्तिषु रूपाणि विलिख्य, लिह आस्वादने, ब्रूञ् व्यक्तायां वाचि धात्वोरनयोरन्यतरस्य सर्वलकारेषु प्रथमं रूपञ्च स्पष्टं लिखत । १०

* श्रीः *

श्रीगुरुप्रसादशास्त्रिसङ्कलितो

# लघुकौमुदीस्थोदाहरणार्थः ।



| उदाहरणम् | अर्थः |
|---|---|
| सुध्युपास्यः | विद्वानों के उपासनीय-भगवान् विष्णु, या राजा |
| मध्वरिः | 'मधु' दैत्य के शत्रु विष्णु भगवान् |
| धात्रंशः | ब्रह्माजी का अंश |
| लाकृतिः | 'ऌ' यह स्वरूप । या 'ऌ' के समान टेढी आकृति है जिस की ऐसा मनुष्य, या लंगूर |
| विष्णवे | विष्णु भगवान् के लिए |
| नायकः | नेता प्रधान । |
| पावकः | अग्नि या पवित्रकर्ता |
| गव्यम् | गौ का विकार दुग्ध, दधि, घृत, गोमूत्र, गोमय आदि |
| नाव्यम् | नौका से पार उतरने योग्य-जल |
| गव्यूतिः | दो कोस |
| उपेन्द्रः | इन्द्र के छोटे भाई वामन भगवान् |
| गङ्गोदकम् | गङ्गाजी का उदक—जल |
| कृष्णर्द्धिः | श्रीकृष्ण भगवान् की समृद्धि |

| उदाहरणम् | अर्थः |
|---|---|
| तवल्कारः | तेरा ऌकार |
| हर इह | हे हरि ! यहां । |
| विष्णु इह | हे विष्णु ! |
| कृष्णैकत्वम् | श्रीकृष्ण भगवान् की एकता |
| गङ्गौघः | गङ्गा का प्रवाह |
| देवैश्वर्यम् | देवताओं का ऐश्वर्य |
| कृष्णौत्कण्ठ्यम् | श्रीकृष्ण भगवान् की उत्कण्ठा |
| उपैति | आता है |
| उपैधते | समीप बढता है |
| प्रष्ठौहः | सिखाने के लिये जिस बछड़े के गले मे काष्ठ बांध देते हैं उस बछड़े को 'प्रष्ठवाट्' कहते हैं (तस्य प्रष्ठौहः) प्रष्ठवाट् का |
| उपेतः | आया हुआ, प्राप्त हुआ |
| मा भवान् प्रेदिधत् | आप अधिक न बढाइए |
| अक्षौहिणी | सेना विशेष । |

| उदाहरणम् | अर्थः |
|---|---|
| प्रौह=अधिक तर्क या उत्तम तर्क करनेवाला | |
| प्रौढः=पोढा, अधेड | |
| प्रौढिः=प्रौढता [ बड़प्पन ] | |
| प्रैषः=प्रेरणा | |
| प्रैष्यः=नौकर | |
| सुखार्तः=सुख से प्राप्त हुआ | |
| परमर्तः=परम प्राप्ति युक्त | |
| प्रार्णम्=अधिक ऋण | |
| वत्सतरार्णम्=बछड़े का ऋण | |
| कम्बलार्णम्=कम्बल का ऋण | |
| वसनार्णम्=वस्त्र का ऋण | |
| ऋणार्णम्=एक ऋण को दूर करने के लिये लिया गया दूसरा ऋण | |
| प्रार्च्छति=अधिक चलता है या ज्यादा जमता है | |
| प्रेजते=अधिक प्रदीप्त होता है | |
| उपोषति=जलाता है | |
| शकन्धुः=शक देश का कूप | |
| कर्कन्धुः=बेर | |
| मनीषा=बुद्धि | |
| मार्तण्डः=सूर्य | |
| शिवायोनमः=शिवजी को नमस्कार हो | |
| शिवेहि=हे शिवजी ! आइये | |
| दैत्यारिः=दैत्यों के शत्रु विष्णु | |

| उदाहरणम् | अर्थः |
|---|---|
| श्रीशः=लक्ष्मी के पति भगवान् विष्णु | |
| विष्णूदयः=विष्णु भगवान् का अभ्युदय | |
| होतृकारः=होता का ऋकार | |
| हरेऽव=हे हरि, रक्षा करो | |
| विष्णोऽव=हे विष्णु, रक्षा करो | |
| गो अग्रम्=गौ का अग्रभाग | |
| चित्रग्वग्रम्=विचित्र गौएं जिसके हैं उस पुरुष का अग्र भाग | |
| गोः=गौ का | |
| गवाग्रम्=गौ का अग्रभाग | |
| गवाक्षः=खिड़की, मोखा या झरोखा | |
| गवि=गौ में | |
| गवेन्द्रः=गोस्वामी साण्ड | |
| आगच्छ कृष्ण ३ अत्र गौश्चरति=हे श्रीकृष्ण ! आइये यहां गौ चरती है। | |
| हरी एतौ=ये दोनों हरि हैं | |
| विष्णु इमौ=ये दोनो विष्णु हैं | |
| गङ्गे अमू=ये दोनों गङ्गायें है | |
| अमी ईशाः=ये प्रभु हैं | |
| रामकृष्णावमू आसाते=ये बलरामजी और श्रीकृष्णचन्द्र बैठे हैं | |
| अमुकेऽत्र=वे यहां हैं ? | |
| इन्द्रः=इ हैं ! यह इन्द्र है ! | |

| उदाहरणम् | अर्थः |
| --- | --- |
| उ उमेशः | क्या ये महादेव हैं ? |
| आ एवं नु मन्यसे | क्या अब तुम ऐसा मानने लगे हो ? |
| आ एव किल तत् | हाँ वह बात ऐसी ही है |
| ओष्णम् | थोड़ा गर्म |
| अहो ईशाः | अहो ये राजा हैं |
| विष्णो इति | हे विष्णु ऐसा |
| किम्वुक्तम् | क्या कहा होगा ? |
| चक्रि अत्र | विष्णु या तेली यहाँ हैं |
| गौर्यौ | दो गौरी |
| वाप्यश्वः | वापी में घोड़ा |
| ब्रह्मर्षिः | ब्रह्म ऋषि |
| आच्छंत् | चला गया |

इत्यच्सन्धिः ।

## अथ हल्सन्धिप्रकरणम् ।

| उदाहरणम् | अर्थः |
| --- | --- |
| रामश्शेते | राम सोते हैं |
| रामश्चिनोति | श्रीराम चुनते हैं |
| सच्चित् | सत् और ज्ञान स्वरूप |
| शार्ङ्गिञ्जय | हे शार्ङ्गधनुर्धारी विष्णो ! आपकी जय हो |
| विश्नः | विछलना या गति विशेष |
| प्रश्नः | पूछना |
| पेष्टा | पीसने वाला |
| तट्टीका | वह टीका |
| चक्रिण्ढौकसे | हे चक्रधारी ! आप जाते हैं |
| षट् सन्तः | छः सत्पुरुष |
| षट्ते | वे छै |
| ईट्टे | स्तुति करता है |
| सर्पिष्टमम् | बढिया घृत |
| षण्णाम् | छै ( पुरुषों ) का |
| षण्णवतिः | छियानवें |
| षण्णगर्यः | छै नगरी |
| सन् षष्ठः | छठा श्रेष्ठ ( है ) |
| वागीशः | बृहस्पति |
| एतन्मुरारिः | ये भगवान् मुरारि हैं |
| तन्मात्रम् | केवल वही |
| चिन्मयम् | ज्ञानस्वरूप |
| तल्लयः | उसमें लय होना |
| विद्वाँल्लिखति | विद्वान् लिखता है |
| उत्थानम् | उठना, उन्नति |
| उत्तम्भनम् | उठाना, उभारना |
| वाग्घरिः | बोलने में सिंह |
| तच्छिवः | वह शिव ( है ) |
| तच्छ्लोकेन | उस श्लोक से |
| हरिं वन्दे | हरि को मैं नमस्कार करता हूँ । |
| यशांसि | यश |
| आक्रंस्यते | आक्रमण करेगा |
| मन्यसे | तुम मानते हो |

| उदाहरणम् | अर्थः |
|---|---|
| शान्तः | शान्त |
| अङ्कितः | चिह्नित |
| अञ्चितः | पूजित |
| कुण्ठितः | रुका हुआ |
| दान्तः | जितेन्द्रिय |
| गुम्फितः | गुथा हुआ |
| त्वङ्करोषि | तुम करते हो |
| सँवत्सरः | वर्ष ( सम्वत् ) |
| सम्राट् | चक्रवर्ती राजा |
| किं ह्मलयति | क्या चलाया जाता है? |
| किं ह्यः | कल क्या था ? |
| किं ह्वलयति | क्या चलाया जाता है ? |
| किं ह्लादयति | क्या प्रसन्न करता है ? |
| किं ह्नुते | क्या छिपाता है ? |
| षट्त्सन्तः | छै सज्जन |
| प्राङ् षष्ठः | छठा पूजित है |
| सुगण् षष्ठः | छठा अच्छा गणितज्ञ है |
| सन्त्सः | वह सत्पुरुष है |
| सञ्छम्भुः | शम्भु सत् है |
| प्रत्यङ्ङात्मा | अन्तरात्मा |
| सुगण्णीशः | अच्छा गणितज्ञों का ईश |
| सन्नच्युतः | अच्युत भगवान् नित्य है |
| संस्कर्त्ता | संस्कार करने वाला |
| पुंस्कोकिलः | कोकिल ( कोयल ) |
| चक्रिंस्त्रायस्व | हे चक्रधारी, विष्णो ! आप रक्षा करो |
| प्रशान्तनोति | शान्त पुरुष विस्तार करता है |
| हन्ति | मारता है |
| नॄँ पाहि | मनुष्यों की रक्षा करो |
| कांस्कान् | किन २ को |
| शिवच्छाया | शिवजी की छाया |
| लक्ष्मीच्छाया | लक्ष्मी की छाया |

इति हल्सन्धिः ।

## अथ विसर्गसन्धिः ।

| उदाहरणम् | अर्थः |
|---|---|
| विष्णुस्त्राता | श्री विष्णु रक्षक हैं |
| हरिश्शेते | हरि सोते हैं |
| शिवोऽर्च्यः | शिवजी पूज्य हैं |
| शिवो वन्द्यः | शिवजी वन्दनीय है |
| देवा इह | देवता यहां हैं |
| भो देवाः ! | हे देवताओ ! |
| भगो नमस्ते | हे भगवन् ! आपको नमस्कार है |
| अघो याहि | पापी जा यहाँ से |
| अहरहः | प्रतिदिन |
| अहर्गणः | दिनसमूह, अहर्गण |
| अहर्भाति | दिन सुशोभित है |
| पुना रमते | पुनः खेलता है |
| हरी रम्यः | हरि रमणीय हैं |
| शम्भू राजते | शम्भु विराजते हैं |

| उदाहरणम् | अर्थः |
|---|---|
| अजर्वाः | तुमने वार वार ग्रहण किया |
| तृढः | हिंसित |
| वृढः | उद्यत, तैय्यार हुआ |
| मनोरथः | इच्छा |
| एष विष्णु | यह विष्णु हैं |
| स शम्भुः | वह शम्भु हैं |
| एषको रुद्रः | ये भगवान् रुद्र हैं |
| असः शिवः | शिव वह नहीं है |
| एषोऽत्र | यह यहां है |
| सेमामविड्ढि प्रभृतिम् | इसे देने में आप समर्थ हैं वह आप हमें इस प्रभृति-प्रकृष्टधारणा को दें। |
| सैष दाशरथी रामः | ये वे दशरथ के पुत्र श्रीरामचन्द्रजी हैं |

इति विसर्गसन्धिः ।

## अथाजन्तपुँल्लिङ्गप्रकरणम्

| उदाहरणम् | अर्थः |
|---|---|
| रामः | भगवान्-श्रीराम |
| कृष्णः | भगवान्-श्रीकृष्ण |
| सर्वः | सब । विश्वः=सब |
| उभौ | दोनों |
| उभयः | दो अवयववाली ( मणि ) |
| अन्यः | दूसरा |
| अन्यतरः | दो में से एक |
| इतरः | इतर |
| त्वत् | अन्य |
| त्वः | भिन्न |
| नेमः | आधा |
| समः | सर्व |
| सिमः | सब |
| पूर्वः | पहला |
| अपरः | दूसरा |
| अवरः | अधम |
| दक्षिणः | दक्षिण |
| उत्तरः | उत्तर |
| अधरः | नीचा |
| स्वः | आप और अपना । |
| अन्तरः | बाहर या पहिननेका कपड़ा |
| एकः | एक |
| प्रथमः | पहला |
| चरमः | अन्तिम |
| कतिपयः | कई एक |
| द्वितयः | दूसरा |
| अल्पः | थोड़ा |
| अर्धः | आधा |
| निर्जरः | देवता |
| विश्वपाः | विश्व का पालन करने वाले विष्णु । |
| शङ्खध्माः | शङ्ख बजाने वाला |
| हाहाः | गन्धर्व |
| हरिः | पापहर्त्ता विष्णु |

| उदाहरणम् | अर्थः |
|---|---|
| कविः | कविता करने वाला |
| सखा | मित्र |
| पतिः | पति |
| भूपतिः | राजा |
| कति | कितने ? |
| त्रयः | तीन |
| प्रियत्रिः | जिसको तीन प्यारे हैं वह |
| द्वौ | दो |
| पपीः | सूर्य |
| वातप्रमीः | मृग |
| बहुश्रेयसी | बहुत कल्याण चाहने वाली स्त्रियों वाला पुरुष |
| अतिलक्ष्मीः | लक्ष्मी को अति क्रमण करने वाला। लक्ष्मी से श्रेष्ठ। |
| प्रधीः | प्रकृष्ट ध्यानवाला |
| ग्रामणीः | मुखिया ( लम्बरदार ) |
| नीः | लेजाने वाला |
| सुश्रीः | सुन्दर श्री वाला |
| यवक्रीः | जौ खरीदने वाला |
| शुद्धधीः | पवित्र बुद्धिवाला |
| सुधीः | पण्डित |
| सुखीः | सुख चाहने वाला |
| सुतीः | पुत्र चाहने वाला |
| शम्भुः | शिव |
| भानुः | सूर्य |

| उदाहरणम् | अर्थः |
|---|---|
| क्रोष्टा | गीदड |
| हूहू | गन्धर्व |
| अतिचमू | सेना को अतिक्रमण करने वाला। |
| खलपू | खलिहान को साफ करने वाला |
| सुलू | अच्छा काटने वाला (नाऊ) |
| स्वयम्भूः | ब्रह्मा |
| वर्षाभू | मेढक |
| दृन्भू | सर्प, कपि, वज्र और सूर्य |
| करभू | हाथ से पैदा हुआ। (नख) |
| धाता | ब्रह्मा |
| नप्ता | दौहित्र या पौत्र |
| पिता | पिता |
| जामाता | जमाई |
| ना | मनुष्य |
| गौः | गौ |
| रा | धन |
| ग्लौः | चन्द्रमा |

इत्यजन्ताः पुँल्लिङ्गाः।

## अथाजन्तस्त्रीलिङ्गप्रकरणम् ।

| | |
|---|---|
| रमा | लक्ष्मीजी |
| दुर्गा | दुर्गा |
| अम्बिका | दुर्गा |

| उदाहरणम् | अर्थः |
| --- | --- |
| सर्वा=सब | |
| विश्वा=सब स्त्री | |
| उत्तर-पूर्वा=ईशान कोण | |
| द्वितीया=दूसरी | |
| तृतीया=तीसरी | |
| अम्बा=माता या दुर्गा | |
| अल्ला=माता | |
| अक्का=माता | |
| जरा=वृद्धावस्था | |
| गोपाः=गोपी | |
| मतिः=बुद्धि | |
| बुद्धिः=बुद्धि | |
| तिस्रः=तीन स्त्रियां | |
| द्वे=दो स्त्रियां | |
| गौरी=पार्वती या गौर स्त्री | |
| नदी=नदी | |
| लक्ष्मी=लक्ष्मी | |
| तरी=नौका | |
| स्त्री=स्त्री | |
| श्रीः=लक्ष्मी | |
| धेनुः=नई ब्याई गौ | |
| भ्रूः=भ्रुकुटि | |
| स्वयम्भूः=माया प्रकृति | |
| स्वसा=बहिन | |

| उदाहरणम् | अर्थः |
| --- | --- |
| ननान्दा=ननन्द | |
| दुहिता=पुत्री | |
| याता=देवराणी जेठानी, | |
| माता=माता | |
| द्यौः=आकाश | |
| राः=धन | |
| नौः=नौका | |

इत्यजन्तस्त्रीलिङ्गप्रकरणम्

## अथाजन्तनपुंसकलिङ्गप्रकरणम्

ज्ञानम्=ज्ञान
धनम्=धन
वनम्=वन
फलम्=फल
कतरत्=दो में से कौन सा कुल ?
कतमत्=बहुतों या तीनों मे से कौन सा कुल ?
इतरत्=इतर । दूसरा ।
अन्यत्=और
अन्यतरद्=दो में से एक
अन्यतमम्=इन सब में से एक
एकतरम्=दोनों में से एक ( कुल )
श्रीपम्=धनरक्षक ( कुल )
वारि=जल
दधि=दही

| उदाहरणम् | अर्थः |
|---|---|
| अस्थि=हड्डी | |
| सक्थ=ऊरु । साँथल जांघ | |
| अक्षि=आंख | |
| सुधि=बुद्धिमान् कुल | |
| मधु=शहद, मदिरा | |
| सुलु=अच्छा काटने वाला | |
| धातृ=धारण या पोषण करने वाला ( कुल ) | |
| ज्ञातृ=ज्ञानी कुल | |
| प्रद्यु=सुन्दर आकाशयुक्त दिन | |
| प्ररि=धनिक कुल | |
| सुनु=सुन्दर नौका वाला कुल | |

इत्यजन्तनपुंसकलिङ्गप्रकरणम् ॥

| | |
|---|---|
| छिद्=काटने वाला | |
| ध्रुक्=द्रोह करने वाला | |
| ध्रुक्=द्रोह करने वाला | |
| मुक्=मोहित करने वाला | |
| स्नुक्=वमन करनेवाला | |
| स्निक्=स्नेहकरनेवाला | |
| विश्ववाट्=विश्वम्भर | |
| अनड्वाट्=बैल | |
| स्रस्तम्=गिरा हुआ | |
| ध्वस्तम्=नष्ट हुआ | |
| तुराषाट्=इन्द्र | |
| सुद्यौः=सुन्दर आकाश वाला दिवस | |

| उदाहरणम् | अर्थः |
|---|---|
| चत्वारः=चार | |
| प्रशान्=शान्त | |
| कः=कौन ? | |
| अयम्=यह ( निकटस्थ ) | |
| राजा=राजा | |
| ब्रह्मनिष्ठः=ब्रह्म में जिसकी निष्ठा हो | |
| यज्वा=यज्ञ करने वाला | |
| ब्रह्मा=ब्रह्मा | |
| वृत्रहा=इन्द्र | |
| शार्ङ्गी=शार्ङ्ग धनुधारी विष्णु | |
| यशस्वी=यश वाला | |
| अर्यमा=सूर्य । देवविशेष | |
| पूषा=सूर्य | |
| मघवान्=इन्द्र | |
| श्वा=कुत्ता | |
| युवा=जवान युवक | |
| अर्वा=घोड़ा | |
| पन्थाः=मार्ग, रास्ता | |
| मन्थाः=दही मथने का दण्ड | |
| ऋभुक्षाः=इन्द्र | |
| पञ्च=पांच | |
| अष्टौ=आठ | |
| ऋत्विक्=ऋत्विज । यज्ञ करनेवाला | |
| युङ्=योगी | |
| सुयुक्=सुयोगी | |

| उदाहरणम् | अर्थः |
|---|---|
| खन्=लंगड़ा | |
| राट्=राजा | |
| विभ्राट्=बड़ा, अत्यन्त शोभित | |
| देवेट्=देवपूजक | |
| विश्वसृट्=ब्रह्मा | |
| परिव्राट्=संन्यासी | |
| विश्वराट्=विश्वेश्वर भगवान्, सूर्य | |
| भृट्=भूजने वाला | |
| स्यः=वह | |
| सः=वह | |
| यः=जो | |
| एषः=यह (अत्यन्त निकट स्थित) | |
| त्वम्=तू | |
| अहम्=मैं | |
| सुपात्=सुन्दर पैर वाला | |
| अग्निमत्=अग्निमन्थन करने वाला | |
| प्राङ्=अच्छा चलने वाला या पूज्य | |
| प्रत्यङ्=पीछे | |
| उदङ्=उत्तर | |
| सम्यङ्=ठीक चलने वाला | |
| सध्र्यङ्= साथी, मित्र | |
| तिर्यङ्=टेढा चलने वाले पशु पक्षी | |
| क्रुङ्=क्रौञ्चपक्षी | |
| पयोमुक्= मेघ | |
| महान् = बड़ा | |

| उदाहरणम् | अर्थः |
|---|---|
| धीमान्=बुद्धिमान् | |
| भवान्=आप | |
| भवन्=होता हुआ | |
| ददत्=देता हुआ | |
| जक्षत्=खाता व हंसता हुआ | |
| जाग्रत्=जागता हुआ | |
| दरिद्रत्=दरिद्र होता हुआ | |
| शासत्=शासन करता हुआ | |
| चकासत्=दीप्त होता हुआ | |
| गुप्=रक्षक | |
| तादृक्=वैसा | |
| विट्=बनिया | |
| नक्=नष्ट होने वाला | |
| घृतस्पृक्=घृतस्पर्श करने वाला | |
| दधृक्=तिरस्कर्ता | |
| रत्नमुट्=रत्न का चोर | |
| षट्=छै | |
| पिपठीः=पढने की इच्छा वाला | |
| चिकीः=करने की इच्छा वाला | |
| विद्वान्=पण्डित | |
| पुमान्=पुरुष | |
| उशना=शुक्राचार्य | |
| अनेहा=समय | |
| पुरुदसाः=इन्द्र | |
| वेधाः=ब्रह्मा | |

उदाहरणम् अर्थः

असौ=वह (पुरुष)

इति हलन्तपुंलिङ्गप्रकरणम्।

उपानत्=जूता

उष्णिक्=पगड़ी

द्यौः=आकाश

गीः=वाणी

पूः=पुरी। नगरी

चतस्रः=चार स्त्रियाँ

का=कौन स्त्री

इयम्=यह स्त्री

स्या=वह स्त्री

सा=वह स्त्री

एषा=यह स्त्री (अत्यन्तनिकट)

वाक्=वाणी

आपः=जल

दिक्=दिशा

दृक्=आंख

त्विट्=कान्ति

सजूः=मित्र (सखी)

आशीः=आशीर्वाद

असौ=वह स्त्री

स्वनडुत्=अच्छे बैलों वाला (कुल)

वाः=जल

चत्वारि=चार

किम्=क्या?

उदाहरणम् अर्थः

इदम्=यह

एनत्=यह

अहः=दिन

दण्डि=दण्ड वाला कुल

सुपथि=सुमार्ग वाला वन

ऊर्क्=अन्न तेज और बल

तत्=वह

यत्=यह

एतत्=यह

गवाक्=गोपूजक। गौके पीछे जानेवाला

शकृत्=मल (टट्टी)

ददत्=देता हुआ

तुदत्=दुःख देता हुआ

पचत्=पाचन करता हुआ (कुल)

दीव्यत्=खेलता हुआ

धनुः=धनुष

चक्षुः=आंख

हविः=हवि, घी

पयः=दूध। जल

सुपुम्=सुपुरुषों वाला कुल

अदः=यह वस्तु

इति हलन्तनपुंसकलिङ्गप्रकरणम्॥

स्वर्=स्वर्ग

अन्तर्=बीच में

प्रातर्=प्रातः काल

| उदाहरणम् | अर्थः |
| --- | --- |
| पुनर्=फिर | |
| सनुतर्=अन्तर्धान | |
| उच्चैस्=ऊंचा | |
| नीचैस्=नीचा | |
| शनैस्=धीरे २ | |
| ऋधक्=सचमुच | |
| ऋते=विना | |
| युगपत्=एक साथ | |
| आरात्=दूर व समीप | |
| पृथक्=भिन्न | |
| ह्यस्=बीता हुआ दिन | |
| श्वस्=आगामी दिन | |
| दिवा=दिन | |
| रात्रौ=रात | |
| सायम्=सायंकाल | |
| चिरम्=देर | |
| मनाक्=किञ्चित् | |
| ईषत्=थोडा | |
| जोषम्=चुप | |
| तूष्णीम्=चुप | |
| वहिस्=वाहर | |
| अवस्=वाहर | |
| अधस्=नीचे | |
| समया=समीप | |
| निकषा=समीप | |

| उदाहरणम् | अर्थः |
| --- | --- |
| स्वयम्=आप | |
| वृथा=व्यर्थ | |
| नक्तम्=रात्रि | |
| न=नहीं | |
| नञ्=नहीं | |
| हेतौ=कारण | |
| इद्धा=प्रकाश | |
| अद्धा=स्फुट व निश्चय | |
| सामि=आधा | |
| ब्राह्मणवत्=ब्राह्मण के समान | |
| क्षत्रियवत्=क्षत्रिय के समान | |
| सना सनत् सनात्=नित्य | |
| उपधा=भेद वा घूस | |
| तिरस्=टेढा | |
| अन्तरा=मध्य में | |
| अन्तरेण=विना | |
| ज्योक्=शीघ्र | |
| कम्=जल, सिर, सुख | |
| शम्=कल्याण | |
| सहसा=अकस्मात् | |
| विना=विना | |
| नाना=अनेक | |
| स्वस्ति=मङ्गल व कल्याण | |
| स्वाहा=देवदान में | |
| स्वधा=पितृदान में | |

| उदाहरणम् | अर्थः |
| --- | --- |
| त्वै ( न्वै ) द्वै=वितर्क | |
| रै=दान | |
| स्वाहा=देवहविर्दान | |
| स्वधा=पितृदान | |
| वषट्=देवदान | |
| तुम्=तू | |
| तथाहि=जैसे कि= | |
| खलु=निश्चय | |
| किल=ऐतिह्य में | |
| अथो अथ=अनन्तर | |
| सुष्ठु=अच्छा | |
| स्म=अतीत काल | |
| आहह=निन्दा | |
| अवदत्तम्=दिया | |
| अहंयुः=अहंकारी | |
| अस्तिक्षीरा=विद्यमानदुग्धवाली गौ | |
| अ-आ-इ-ई-उ-ऊ=सम्बोधन | |
| ए-ऐ-ओ-औ=सम्बोधन | |
| पशु=सम्यक् | |
| शुकम्=शीघ्र | |
| यथाकथाच-अनादर में | |
| प्याट्-अङ्ग-है-हे=सम्बोधन | |
| भोः-अये-पाट्=सम्बोधन | |
| द्य-हिंसा | |
| विषु=नाना | |

| उदाहरणम् | अर्थः |
| --- | --- |
| एकपदे=सहसा | |
| युत्=निन्दा | |
| आतः=इस कारण | |
| अतः-इस कारण | |
| स्मार स्मारम्=स्मरण कर २ के | |
| जीवसे=जीने के लिये | |
| पिबध्यै=पीने के लिये | |
| कृत्वा=करके | |
| उदेतोः=उदय होकर | |
| विसृपः=फैलकर | |
| अधिहरि=हरि में | |
| वाचा=वाणी | |
| निशा=रात्रि | |
| दिशा=दिशा | |
| वगाहः-स्नान | |
| पिधानम्=ढकना | |

इत्यव्ययार्थनिर्देशः ।

भू=होना

अत-निरन्तर गमन

षिध=जाना

चिती=चेतना

शुच्=शोक करना

गद=स्पष्ट बोलना

णद=अव्यक्त शब्द करना ( नाद )

टुनदि=समृद्धि

| उदाहरणम् | अर्थः | उदाहरणम् | अर्थः |
| --- | --- | --- | --- |
| अर्च=पूजा में | | णभ तुभ=हिंसा | |
| व्रज=जाना | | स्रंसु भ्रंसु ध्वंसु-गिरना । नष्ट होना | |
| कटे=बरसना और ढकना | | ध्वंसु=चलना | |
| गुपू-पालन करना | | स्रम्भु=विश्वास करना | |
| क्षि--नाश होना | | वृतु=वर्तना | |
| तप=संताप करना | | दद=देना | |
| क्रमु=चलना | | त्रपूष्=लज्जित होना | |
| पा=पीना | | श्रिञ्=सेवा करना | |
| ग्लै=ग्लानि | | भृञ्=पालन करना । भरना | |
| ह्वृ=कुटिलता | | हृञ्=हरना, चैराना | |
| श्रु=सुनना | | भृञ्=धारण करना | |
| गम्लृ=जाना=( गमन ) | | णीञ्=लेजाना | |
| एध=वृद्धि=बढ़ना | | डुपचष्=पकाना | |
| कमु=इच्छा करना | | भज=भजन करना | |
| अय=चलना | | यज-पूजा करना, संग करना, दान देना | |
| द्युत=दीप्त होना | | वह=वहन करना | |
| श्विता=सफेद करना | | इति भ्वादिप्रकरणधात्वर्थाः । | |
| ञि मिदा=चिकना होना | | अद=खाना | |
| ञिक्ष्विदा= ,, ,, | | हन=मारना, चलना | |
| ञिष्विदा=पसीना आना और छोडना | | यु=मिलना या अलग होना | |
| रुच=चमकना व अच्छा लगना | | या=पहुंचना, जाना | |
| घुट=घोटना | | वा=वहना, चुगली करना | |
| शुभ=शोभित होना | | भा=चमकना | |
| क्षुभ=क्षुब्ध होना | | ष्णा = स्नान करना, पवित्र होना | |

| उदाहरणम् | अर्थः |
|---|---|
| श्रा=पकाना । सीजाना | |
| द्रा=निन्दित गमन | |
| प्सा=खाना | |
| रा=देना | |
| ला=लेना | |
| दाप्=काटना | |
| पा=रक्षा करना | |
| ख्या=कहना | |
| विद्=जानना | |
| अस्=होना | |
| इण्=जाना | |
| शीङ्=सोना | |
| इङ्=पढ़ना | |
| दुह=दूहना | |
| दिह=बढ़ना | |
| लिह=चाटना | |
| ब्रूञ्=बोलना | |
| ऊर्णुञ्=ढकना | |

इत्यदादिधात्वर्थाः ।

हु=होम करना, खाना या लेना
ञिभी=डरना
ह्री=लज्जित होना
पॄ=पालना, पूरा करना
ओहाक्=छोड़ना
माङ्=नापना, शब्द करना

| उदाहरणम् | अर्थः |
|---|---|
| ओहाङ्=जाना | |
| डुभृञ्=धारण करना, पालना, पोसना | |
| डुदाञ्=देना | |
| डुधाञ्=धारण करना, पालन पोषण करना | |
| णिजिर्=साफ करना पोषण करना | |

इति जुहोत्यादयः ।

दिवु=खेलना, जय की इच्छा, लेन-देन का व्यवहार करना, चमकना, स्तुति करना, प्रसन्न होना, मदमत्त होना, सोना, इच्छा करना,
षिवु=सीना
नृती=नाचना
त्रसी=घबराना । उद्विग्न होना
शो=छीलना । तेज करना ।
छो=काटना । छाँगना
षो=नाश करना
दो=काटना
व्यध=मारना ( बींधना )
पुष=पुष्ट करना
शुष=सूखना
णश=नष्ट होना
षूङ्=उत्पन्नकरना

[1] रम्यपथः ।

रम्यः पन्था यस्मिन् देशे स इति विग्रहे समासे **"ऋक्पूरब्धूः पथामानक्षे"** इत्यनेन 'अ' प्रत्यये **"सुपो धातुप्रातिपदिकयोः"** इत्यनेन सुपो लुकि **"यचि भम्"** इत्यनेन भसञ्ज्ञायां भत्वाद् **"नस्तद्धिते"** इत्यनेन टिलोपे, ततः प्रातिपदिकत्वेन विभक्तिकार्ये च कृते **'रम्यपथः'** इति रूपं निष्पन्नम् ।

[2] शाराव ओदनः ।

शरावे उद्धृत इति विग्रहे 'शराव'शब्दात् **"तत्रोद्धृममत्रेभ्यः"** इति सूत्रेण 'अण्'प्रत्ययेऽनुबन्धलोपे **"सुपो धातुप्रातिपदिकयोः"** इत्यनेन सुपो लुकि **"यचि भम्"** इति सूत्रेण भसञ्ज्ञायां **'यस्येति च'** इति सूत्रेणाकारलोपे **"तद्धितेष्वचामादेः"** इति सूत्रेणाऽऽदिवृद्धौ, पुनः प्रातिपदिकत्वे, सौ रुत्वे विसर्गे च सति **'शाराव ओदनः'** इति रूपस्य सिद्धिः ।

[3] क्षत्रिया ।

क्षत्रियत्वजातिविशिष्टा स्त्री'ति विग्रहे 'क्षत्रिय' शब्दात् **"अर्यक्षत्रियाभ्यां वा स्वार्थे"** इति वार्तिकेन ङिषोऽभावपक्षे-टापि, अनुबन्धलोपे, प्रातिपदिकत्वात्सौ हल्ङ्याबिना सोर्लुकि च सति **'क्षत्रिया'** इति रूपं सिद्धम् ।



१ रमणीय [ सीधा ] रास्ता वाला देश । २ सिकोरे में निकाला हुआ भात । ३ क्षत्रिय की स्त्री ।

## सन् १९३२

### प्रश्नाः

१ हर इह, शिवेहि, उत्थानम्, मनोरथः, रामाय, निर्जरसौ, विश्वपः, एते प्रयोगाः सूत्रनिर्देशेन साधु साधनीयाः । २०

२ सर्वस्याम्, ज्ञानानि, विश्वौहः, युष्माकम्, विबुधः, एतेषां साधनं विधेयम् । २०

३—भवति, अभूत्, गोपायाञ्चकार, एधाञ्चक्रे, जघास, जुहोति, स्पर्द्धि, कुरुतः, गणयति, एते धात्वर्थनिर्देशेन साधनीयाः । १५

४ पिपठिषति, बोभूयते, पुत्रीयति, देयम्, भिन्नः, प्रकृत्य, एते प्रकृतिप्रत्ययनिर्देशेन साधनीयाः । १५

५ हरिं भजति, कटे शेते, अधिहरि, राजपुरुषः, चित्रगुः,एषु आद्यद्वये कारकविभक्ति प्रदर्श्यान्त्येषु विग्रहप्रदर्शनेन साधनं विधेयम् । १५

६ औपगवः, वैयाकरणः, गोमयम्, दण्डी, कुतः, युवतिः—एते सूत्रनिर्देशेन साधनीयाः । १५

### उत्तराणि-

प्र० [ १ ] [1]हर इह ।

'हरे + इह' इत्यवस्थायाम्, "एचोऽयवायावः" इति सूत्रेणायादेशे 'हर् + अय् + इह' इति स्थिते "लोपः शाकल्यस्य" इति सूत्रेण वैकल्पिके यकारस्य लोपे 'हर् + इह' इति भूते "आद्गुणः" इति सूत्रेण गुणे प्राप्ते तम्प्रबाध्य "पूर्वत्रासिद्धम्" इति सूत्रेण "आद्गुणः" इत्येतदृष्ट्या "लोपः शाकल्यस्य" इत्यस्यासिद्धत्वाद्गुणाभावे 'हर इह' इति रूपं सिद्धम् । यलोपाभावपक्षे 'हरयिह' इति द्वे रूपे सिद्धे ।

शिवेहि ।

असौ प्रयोगः ( २ ) द्वितीयपृष्ठे द्रष्टव्यः ।

[1] हे हरि ! यहाँ ( आओ ) ।

उत्थानम् ।

अस्योत्तरं ( १४ ) चतुर्दश–पृष्ठे द्रष्टव्यम् ।

[1]मनोरथः ।

'मनस् + रथः' इति दशायां **"ससजुषो रुः"** इति सूत्रेण सकारस्य रुत्वे कृते **"हशि च"** इत्यनेन रोरुत्वे प्राप्ते **"रोरि"** इत्यनेन रकारस्य लोपे च प्राप्ते **"विप्रतिषेधे परं कार्यम्"** इति सूत्रेण परत्वाद् **"रोरी"**ति लोपे प्राप्ते **"पूर्वत्रासिद्धम्"** इति सूत्रसहकारात् **"रोरी"**त्यस्यासिद्धत्वाद् **"हशि च"** इत्यनेन रकारस्योत्वे कृते **"आद्‌गुणः"** इत्यनेन गुणे **'मनोरथः'** इति रूपं साधु ।

रामाय ।

[2]'राम'* शब्दस्य **"कृत्तद्धितसमासाश्च"** इति सूत्रेण प्रातिपदिकसञ्ज्ञाया प्रातिपदिकत्वाच्चतुर्थ्येकवचने 'ङे' विभक्तौ 'राम+ङे' इत्यवस्थाया **"ङेर्यः"**इति सूत्रेण 'ङे'–इत्यस्य स्थाने यादेशे राम+य' इति जाते, नन्वत्र 'ङे' इत्यस्य स्थाने यो हि यादेश , तस्मिन् सुप्त्वं न स्यात्तर्हि सुप्त्वाभावात् **"सुपि च"** इति सूत्रेण दीर्घोऽपि न स्यादिति चेन्न, **"स्थानिवदादेशोऽनल्विधौ"** इत्यनेन स्थानिवद्भावे ङेवृत्तिसुप्त्वधर्ममादाय **"सुपि च"** इति सूत्रेण यरुपे यन्नादौ सुपि परे मकारोत्तरवर्तिनाऽकारस्य दीर्घे **'रामाय'** इति रूपं साधु ।

* अव्युत्पत्तिपक्षे "अर्थवत्" इति प्रातिपदिकसञ्ज्ञा, व्युत्पत्तिपक्षे-रमन्ते योगिनोऽस्मिन्निति विग्रहे 'रमु-क्रीडायाम्' इत्यस्माद्धातोः "हलश्च" इत्यधिकरणे,"घञ' प्रत्ययेऽनुबन्धलोपे "तद्धितेष्वचामादेः" इति सूत्रेणाऽऽदिवृद्धौ 'कृत्तद्धितसमासाश्च" इति प्रातिपदिकसञ्ज्ञा बोद्धया ।

१ इच्छा । २ भगवान् श्रीरामचन्द्र जी ।

## निर्जरसौ ।

[1]'निर्जर' शब्दस्य प्रातिपदिकसञ्ज्ञायाम्, 'औ' विभक्तौ समागतायां **"जराया जरसन्यतरस्याम्"** इति सूत्रेण 'निर्जर' इत्यत्र 'जर'शब्दस्य जरसादेशे **'निर्जरसौ'** इति रूपं निष्पन्नम् ।

ननु 'निर्जर'-इत्यत्र 'जरा' शब्दस्याभावात्कथं जरसादेश इति वाच्यम्, **"पदाङ्गाधिकारे तस्य च तदन्तस्य"** इतिपरिभाषाबलात् तदन्तस्यापि ग्रहणात्, **"एकदेशविकृतमनन्यवत्"** इति परिभाषया यद्वा **"छिन्नेऽपि पुच्छे श्वा श्वैव नाऽश्वो न गर्दभः"** इति न्यायाच्च ।

जरसादेशाभावपक्षे 'निर्जर + औ' इत्यवस्थायां **"प्रथमयोः पूर्वसवर्णः"** इति सूत्रेण पूर्वसवर्णदीर्घे प्राप्ते **"नादिचि"** इत्यनेन निषेधे **"वृद्धिरेचि"** इत्यनेन वृद्धौ **'निर्जरौ'** इति च रूपं सिद्धम् ।

## विश्वपः ।

प्रातिपदिकसञ्ज्ञक [2]'विश्वपा'शब्दस्य द्वितीयाबहुवचने 'शस्' विभक्तौ अनुबन्धलोपे 'विश्वपा + अस्' इति जाते **"सुडनपुंसकस्य"** इति सूत्रेण सर्वनामस्थानसञ्ज्ञाया **"स्वादिष्वसर्वनामस्थाने"** इत्यनेन पदसञ्ज्ञायां **"यचि भम्"** इत्यनेन भसञ्ज्ञायां च प्राप्तायां **"द्वयोर्मध्ये कतरेण भाव्यम्"** इत्याशङ्कायाम्—**"आकडारादेका संज्ञा"**इत्यनेन परत्वादनवकाशत्वाच्च **"यचि भम्"** इत्यनेन भसञ्ज्ञायाम्, **"अलोऽन्त्यस्य"** इति सहकारेण **"आतो धातोः"** इत्यनेन आकारस्य लोपे **"ससजुषो रुः"** इत्यनेन सकारस्य रुत्वे **"खरवसानयोर्विसर्जनीयः"** इत्यनेन रकारस्य विसर्गे **'विश्वपः'** इति रूपं सिद्धम् ।

## प्र० [ २ ] सर्वस्याम् ।

अस्य साधनप्रकार ( १६ ) पृष्ठे द्रष्टव्य

१ देवता । २ विश्व [ संसार ] का पालन करने वाले विष्णु भगवान् ।

### ज्ञानानि ।

प्रातिपदिकसंज्ञक [१] 'ज्ञान' शब्दात्प्रथमाबहुवचने जसि विभक्तौ **"जश्शसोः शिः"** इति सूत्रेण जसः स्थाने श्यादेशेऽनुबन्धलोपे **"शि सर्वनामस्थानम्"** इत्यनेन सर्वनामस्थानसंज्ञायां **"मिदचोऽन्त्यात्परः"** इति सूत्रबलात् **"नपुंसकस्य झलचः"** इति सूत्रेण अन्तावयवे नुमागमेऽनुबन्धलोपे 'ज्ञान + न् + इ' इत्यवस्थायां **"सर्वनामस्थाने चाऽसम्बुद्धौ"** इत्यनेनोपधादीर्घे च कृते **'ज्ञानानि'** इति रूपं साधु ।

### विश्वौहः ।

प्रातिपदिकसंज्ञक [२]'विश्ववाह्'शब्दात् शसि विभक्तावनुबन्धलोपे **"यचि भम्"** इति सूत्रेण भसञ्ज्ञायां **"वाह ऊठ्"** इत्यनेन 'वाह' इत्यत्र वकारस्य ऊठि, सम्प्रसारणेऽनुबन्धलोपे 'विश्व + ऊ + आह्' इति स्थिते **"सम्प्रसारणाच्च"** इत्यनेन सम्प्रसारणे 'विश्व + ऊह् + अस्' इति भूते **"एत्येधत्यूठ्सु"** इति सूत्रेण वृद्धौ, रुत्वे विसर्गे च कृते **'विश्वौहः'** इति रूपं सिद्धम् ।

### युष्माकम् ।

अस्योत्तरं ( १७ ) पृष्ठेऽनुप्रेक्षणीयम् ।

### [३]विबुधः ।

'वि-पूर्वात्-बुध्' धातोः **"इगुपधज्ञाप्रीकिरः कः"** इति सूत्रेण 'क'-प्रत्यये कित्वाद्गुणनिषेधे, प्रातिपदिकत्वात्स्वादिकार्ये च कृते **'विबुधः'** इति रूपं साधु ।

### प्र० [ ३ ] भवति ।

'भू'-सत्तायाम्' इत्यस्माद्धातो **"भूवादयो धातवः"** इत्यनेन 'भू'-इत्यस्य धातुसञ्ज्ञायां धातुत्वात् **"वर्तमाने लट्"** इत्यनेन लटि, अनुबन्धलोपे, तस्य स्थाने प्रथमपुरुषैकवचने **'तिप् तस्-झि-सिप्-थस्-थ-मिब्-**

१ ज्ञान । २ विश्वम्भरभगवान् । ३ विशिष्ट ( योग्य ) पण्डित ।

**घस्-भस्-ता-ऽऽतां-भ-थासाथां-ध्वमिड्-वहि-महिङ्**" इत्यनेन 'तिप्'-प्रत्ययेऽनुबन्धलोपे "**तिङ्शित्सार्वधातुकम्**" इति सूत्रेण तिपः सार्वधातुकसञ्ज्ञायां "**भूसुवोस्तिङि**" इत्यनेन गुणनिषेधे "**कर्त्तरि शप्**" इत्यनेन शपि अनुबन्धलोपे, शपः सार्वधातुकसंज्ञायां "**सार्वधातुकार्धधातुकयोः**" इत्यनेन गुणे "**एचोऽयवायावः**" इत्यनेनावादेशे च कृते '**भवति**' इति रूपं सिद्धम् ।

**अभूत् ।**

अस्योत्तरं ( ६ ) पृष्ठे कृतं राजते ।

**गोपायाञ्चकार ।**

'गुपू [1]'रक्षणे' इत्यस्माद्धातोः "**गुपू-धूप-विच्छि-पणि-पनिभ्य आयः**" इति सूत्रेण 'आय'प्रत्यये, तस्यार्धधातुकत्वात् "**पुगन्तलघूपधस्य च**" इति सूत्रेण गुणे कृते 'गोपाय' इति जाते "**सनाद्यन्ता धातवः**" इत्यनेन धातुसञ्ज्ञाया धातुत्वात् "**परोक्षे लिट्**" इत्यनेन लिटि "**कृदतिङ्**" इति कृत्संज्ञायाम्, ततो 'गोपाय' इत्यस्यानेकाच्त्वात् "**कास्यनेकाच आम्वक्तव्यः**" इति वार्त्तिकेन आमि 'गोपाय×आम्×लिट्' इति स्थिते "**अतो लोपः**" इत्यनेनाकारस्य लोपे 'गोपाय्×आम्×लिट्' इति स्थिते "**हलन्त्यम्**" इत्यनेनामो मकारस्येत्सञ्ज्ञायां "**तस्य लोपः**" इत्यनेन लोपे च प्राप्ते, लिटि आस्कासोराम्विधानान्मकारस्येत्वाभावेन लोपाभावे "**आमः**" इत्येन लिटो लुकि 'गोपायाम्' इति जाते, लिट' कृत्त्वात् "**प्रत्ययलोपे प्रत्ययलक्षणम्**" इति प्रत्ययलक्षणेन 'गोपायाम्' इत्यस्य कृदन्तत्वात्प्रातिपदिकत्वेन सौ "**कृन्मेजन्तः**" इत्यनेनाऽव्ययसञ्ज्ञायाम् "**अव्ययादाप्सुपः**" इत्यनेन सोर्लुकि, तत "**कृञ्चानुप्रयुज्यते लिटि**" इति सूत्रेण लिट्परककृञोऽनुप्रयोगे, लिटस्तिपि, तिपो णलि-अनुबन्धलोपे 'गोपायाम्×कृ×अ' इति स्थिते "**लिटि धातोरनभ्यासस्य**" इत्यनेन

[1] पालन करना ।

कृञो द्वित्वे 'गोपायाम्+कृ+कृ+अ' इति भूते "**पूर्वोऽभ्यासः**" इत्यनेन पूर्वस्य कृञोऽभ्याससञ्ज्ञायाम्, "**उरत्**" इत्यनेनाभ्यास-ऋकारस्य अकारे "**उरण् रपरः**" इत्यनेन रपरे 'गोपायाम्×कर्×कृ×अ' इति स्थितौ "**हलादिः शेषः**" इति सूत्रेण रकारस्य लोपे "**कुहोश्चुः**" इत्यनेन अभ्यास-ककारस्य चुत्वेन चकारे "**मोऽनुस्वारः**" इति सूत्रेण मकारस्यानुस्वारे "**वा पदान्तस्य**" इति सूत्रेण पाक्षिकेऽनुस्वारस्य परसवर्णे ञकारे "**अचोञ्णिति**" इत्यनेन वृद्धौ "**उरण् रपरः**" इत्यनेन रपरे च कृते '**गोपायाञ्चकार**' इति रूपं साधूपपन्नम्।

## एधाञ्चक्रे।

'एध-[1]वृद्धौ' इत्यस्माद्धातोः "**परोक्षे लिट्**" इति सूत्रेण लिटि "**इजादेश्च गुरुमतोऽनृच्छः**" इत्यनेन आमि "**आमः**" इत्यनेन लिटो लोपे 'एध×आम्' इति जाते "**कृञ्चानुप्रयुज्यते लिटि**" इत्यनेन लिट्परकृप्रयोगे 'एधाम्+कृ×लिट्' इति भूते, परगामिनि क्रियाफले कृञः परस्मैपदे प्राप्ते "**आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य**" इत्यनेनाऽऽत्मनेपदत्वात् 'त' प्रत्यये "**लिटस्तझयोरेशिरेच्**" इत्यनेन तकारस्यैशादेशेऽनुबन्धलोपे 'एधाम्+कृ+ए' इति स्थिते "**असंयोगाल्लिट् कित्**" इत्यनेन कित्त्वाद्गुणाभावे द्वित्वात्परत्वाद्यणि प्राप्ते "**द्विर्वचनेऽचि**" इति सूत्रेण तन्निषेधे, ततो "**लिटि धातोरनभ्यासस्य**" इत्यनेन द्वित्वे 'एधाम्×कृ×कृ×ए' इत्यवस्थायाम्, "**उरत्**" इत्यनेनाभ्यास-'कृ'-इत्यस्य ऋकारस्य स्थानेऽकारे, रपरे च कृते "**हलादिः शेषः**" इति सूत्रेण हलो लोपे 'एधाम्×क×कृ×ए' इति जाते "**कुहोश्चुः**" इति सूत्रेण अभ्यासककारस्य चुत्वेन चकारे, मकारस्य "**मोऽनुस्वारः**" इत्यनेनानुस्वारे "**वा पदान्तस्य**" इत्यनेन पाक्षिकेऽनुस्वारस्य परसवर्णे ञकारे "**इको यणचि**" इत्यनेन यणि '**एधाञ्चक्रे**' इति रूपं सिद्धम्।

1 वृद्धि का अर्थ उन्नति या बढ़ना है।

## जघास ।

'अद [1]भक्षणे' इत्यस्माद्धातोर्लिटि विवक्षिते "लिट्यन्यतरस्याम्" इति सूत्रेण घस्लादेशेऽनुबन्धलोपे, ततो लिटि, तिपि, तिपो णलि "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्यनेनाभ्यासस-ञ्ज्ञायां "हलादिः शेषः" इत्यनेन हलो लोपे "कुहोश्चुः" इत्यनेन घस्य झकारे "अभ्यासे चर्च" इत्यनेन जकारे "अत उपधायाः" इत्यनेन वृद्धौ 'जघास' इति रूपस्य सिद्धिः ।

## जुहोति ।

'हु [2]दानाऽऽदनयोः' इत्यस्माद्धातोर्लटि, लटस्तिपि, शपि "जुहोत्या-दिभ्यः श्लुः" इति सूत्रेण शपः श्लौ "श्लौ" इति सूत्रेण द्वित्वेऽभ्यासत्वे "कुहोश्चुः" इत्यनेन हकारस्य चुत्वेन झकारे "अभ्यासे चर्च" इत्य-नेन झकारस्य जकारे "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे च कृते 'जुहोति' इति रूपं सम्पन्नम् ।

## रुणद्धि ।

'रुधिर् [3]आवरणे' इत्यस्माद्धातोर्लटि, लटस्तिपि, नित्यत्वात् "पुगन्त-लघूपधस्य च" इति सूत्रेण गुणं बाधित्वा "रुधादिभ्यः श्नम्" इति सूत्रेण श्नम्यनुबन्धलोपे "झषस्तथोर्धोऽधः" इति सूत्रेण तकारस्य धकारे "झलां जश् झशि" इति सूत्रेण धकारस्य जश्त्वेन दकारे "अट्कुप्वा-ङ्नुम्व्यवायेऽपि" इति सूत्रेण नकारस्य णत्वे 'रुणद्धि' इति रूपं साधु।

## कुरुतः ।

'डु कृञ् [4]करणे' इत्यस्माद्धातोर्लटि, लट स्थाने तसि "तनादि-कृञ्भ्य उः" इति सूत्रेण 'उ'प्रत्यये 'कृ+उ+तस्' इति दशायां "सार्वधातुकार्धधातुकयोः" इति सूत्रेण गुणे रपरे च 'अत उत्सा-र्वधातुके' इत्यनेन उत्वे रुत्वे विसर्गे च कृते 'कुरुतः' इति रूपं सिद्धम् ।

१ खाना । २ होम करना, खाना या लेना । ३ रोकना । ४ करना ।

गणयति ।

'गण [1]सङ्ख्याने' इत्यस्माद्धातोश्चुरादित्वाण्णिचि, तस्याऽर्धधातुकत्वात् "अतो लोपः" इति सूत्रेणाकारस्य लोपे "अत उपधायाः" इत्यनेनोपधावृद्धौ प्राप्तायाम्, "अचः परस्मिन्पूर्वविधौ" इत्यनेनाल्लोपस्य स्थानिवद्भावात्तदभावे, ततः "सनाद्यन्ता धातवः" इत्यनेन धातुत्वाल्लटि तस्य स्थाने तिपि, शपि, गुणे, अयादेशे च सति 'गणयति' इति रूपं सिद्धम् ।

प्र० [ ४ ] [2]पिपठिषति ।

पठितुमिच्छतीति विग्रहे 'पठ्' धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति सूत्रेण 'सन्'प्रत्यये "आर्धधातुकस्येड्वलादेः" इति सूत्रेण इडागमे "सन्यङोः" इति सूत्रेण द्वित्वे "पूर्वोऽभ्यासः" इत्यनेनाभ्याससंज्ञायां "हलादिः शेषः" इत्यनेन लोपे "सन्यतः" इति सूत्रेण इत्वे "आदेशप्रत्यययोः" इति सूत्रेण षत्वे 'पिपठिष' इति स्थिते, तस्य सन्नन्तत्वात् "सनाद्यन्ता धातवः" इत्यनेन धातुसञ्ज्ञायां धातुत्वाल्लटि, तिपि, शपि, पररूपे च कृते 'पिपठिषति' इति रूपमुपपन्नम् ।

[3]बोभूयते ।

पुनः पुनरतिशयेन वा भवतीति विग्रहे 'भू' धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति सूत्रेण 'यङ्' प्रत्यये "सन्यङोः" इति सूत्रेण द्वित्वेऽभ्यासत्वे "गुणो यङ्लुकोः" इत्यनेनाभ्यासस्य गुणे, जश्त्वे 'बोभूय' इति जाते, तस्य "सनाद्यन्ता धातवः" इति सूत्रेण धातुसञ्ज्ञायां धातुत्वाल्लटि, ङित्वादात्मनेपदे, ततो लटः स्थाने 'त' प्रत्यये, "कर्तरि शप्" इति सूत्रेण शप्यनुबन्धलोपे, पररूपे च कृते "टित

१ गिनना । २ पढ़ने की इच्छा करता है । ३ बार बार, या अधिक होता है ।

आत्मनेपदानां टेरे" इत्यनेन टेरेत्वे च सति 'बोभूयते' इति रूपस्य सिद्धिः ।

[1]पुत्रीयति ।

आत्मनः पुत्रमिच्छतीति विग्रहे 'पुत्र×अम्' इति सुबन्ताद् "सुप आत्मनः क्यच्" इति सूत्रेण 'क्यच्' प्रत्ययेऽनुबन्धलोपे "सनाद्यन्ता धातवः" इति सूत्रेण 'पुत्र×अम्×य' इत्यस्य धातुसंज्ञायां "सुपो धातु-प्रातिपदिकयोः" इति सूत्रेण अमो लुकि 'पुत्र×य' इति स्थिते "क्यचि च" इति सूत्रेण अकारस्य ईत्वे 'पुत्रीय' इति भूते "सनाद्यन्ता धातवः" इत्यनेन धातुसंज्ञायां लटि, लटः स्थाने तिपि, शपि "अतो गुणे" इत्यनेन पररूपे च कृते 'पुत्रीयति' इति रूपं साधु ।

[2]देयम् ।

दातुमर्हमिति विग्रहे 'दा'धातोः "अचो यत्" इति सूत्रेण 'यत्'-प्रत्यये "ईद्यति" इति सूत्रेण आकारस्य ईकारे "सार्वधातुकार्धधातु-कयोः" इति सूत्रेण गुणे, ततः प्रातिपदिकसंज्ञायां सौ, सोरमादेशे पूर्वरूपे च कृते 'देयम्' इति रूपं सिद्धम् ।

[3]भिन्नः ।

अभेदि इति विग्रहे 'भिदिर्-विदारणे' इत्यस्माद्धातोः "रदाभ्यां निष्ठातो नः" इति सूत्रेण दकारस्य प्रत्ययतकारस्य च नकारे 'क्त' प्रत्ययस्य कित्त्वात् "क्ङिति च" इति सूत्रेण गुणनिषेधे, ततः प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'भिन्नः' इति रूपं साधु ।

[4]प्रकृत्य ।

प्र-पूर्वात्-'कृ'धातोः "समानकर्तृकयोः पूर्वकाले क्त्वा" इति सूत्रेण 'क्त्वा' प्रत्यये, तस्य स्थाने "समासेऽनञ्पूर्वे क्त्वो ल्यप्" इति

१ अपने लिये पुत्र चाहता है । २ देने योग्य । ३ भिन्न ।
४ आरम्भ करके ।

सूत्रेण क्त्वो ल्यबादेशेऽनुबन्धलोपे "ह्रस्वस्य पिति कृति तुक्" इति सूत्रेण तुकि—अनुबन्धलोपे, ततः प्रातिपदिकत्वादिकार्ये च सति 'प्रकृत्य' इति रूपं साधु ॥

प्र० [75] [1]हरिं भजति ।

'हरिं भजति' अत्र भजनक्रियया सम्बन्धुं देवदत्तादिकर्तुरत्यन्तेच्छाविषयीभूतस्य हरेः "कर्तुरीप्सिततमं कर्म" इति सूत्रेण कर्मसञ्ज्ञायां "कर्मणि द्वितीया" इति सूत्रेण द्वितीया 'हरिं भजति' इत्यस्य सिद्धिः ।

[2]कटे शेते । 38

'कटे शेते' इत्यत्र "आधारोऽधिकरणम्" इति सूत्रेण कटस्याधिकरणसंज्ञायां "सप्तम्यधिकरणे च" इति सूत्रेण सप्तमी 'कटे शेते' इत्यस्य सिद्धिः ।

[3]अधिहरि ।

हरौ इति, इति लौकिकविग्रहे 'हरि । ङि + अधि' इत्यलौकिकविग्रहे च "अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्य-र्थाभावा-ऽत्यया-ऽसम्प्रति-शब्दप्रादुर्भाव-पश्चाद्यथा-ऽऽनुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्या-ऽन्तवचनेषु" इति सूत्रेणाऽव्ययीभावसमासे, समासविधायकसूत्रेऽव्ययमित्यस्य प्रथमानिर्दिष्टत्वात् 'अधि' इत्यव्ययस्य "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यनेनोपसर्जनत्वात् "उपसर्जनं पूर्वम्" इत्यनेन पूर्वप्रयोगे, "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपो लुकि, एकदेशविकृतस्यानन्यत्वात् प्रातिपदिकत्वेन सौ "अव्ययीभावश्च" इत्यनेनाव्ययसंज्ञायाम्, "अव्ययादाप्सुपः" इत्यनेन सोर्लुकि 'अधिहरि' इति रूपं निष्पन्नम् ।

[4]राजपुरुषः ।

राज्ञः पुरुषः, इति लौकिकविग्रहे, 'राजन् + ङस् + पुरुष + सु' इत्यलौ

१ हरि को भजता है । २ चटाई पर सोता है । ३ हरि में ।
४ राजा का पुरुष ।

किकविग्रहे "षष्ठी" इति सूत्रेण षष्ठीसमासे "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपो लुकि "नलोपः प्रातिपदिकान्तस्य" इत्यनेन नकारस्य लोपे, ततः 'राजपुरुष' इति समुदायात्प्रातिपदिकसंज्ञायां सौ, रुत्वे विसर्गे च कृते 'राजपुरुषः' इति रूपं सिद्धम् ।

चित्रगुः ।

अस्य साधनप्रकारः ( ११ ) पृष्ठेऽवलोकनीयः ।

प्र० [ ६ ] [1]औपगवः ।

उपगोरपत्यमिति विग्रहे षष्ठयन्त 'उपगु'शब्दात् "तस्यापत्यम्" इति सूत्रेण 'अण्' प्रत्ययेऽनुवन्धलोपे, प्रातिपदिकत्वे "सुपो धातुप्रातिपदिकयोः" इति सूत्रेण सुपो लुकि "तद्धितेष्वचामादेः" इति सूत्रेणाऽऽदिवृद्धौ "अचो ञ्णिति" इति सूत्रेण वृद्धिं वाधित्वा "ओर्गुणः" इति सूत्रेण गुणे, तत. निष्पन्न-'औपगव'शब्दात्पुनः प्रातिपदिकत्वे, सौ रुत्वे विसर्गे च कृते 'औपगवः' इति रूपं निष्पन्नम् ।

[2]वैयाकरणः ।

व्याकरणमधीते वेद वेति विग्रहे 'व्याकरण' शब्दात् "तदधीते तद्वेद" इति सूत्रेण 'अण्' प्रत्ययेऽनुवन्धलोपे "न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्" इति सूत्रेण यकारात्पूर्वमैजागमेऽनुवन्धलोपे, तत. प्रातिपदिकत्वे, सौ रुत्वे विसर्गे च कृते 'वैयाकरणः' इति रूपं साधु ।

[3]गोमयम् ।

गोर्विकारः पुरीषमित्यर्थे षष्ठयन्तात् 'गो'शब्दात् "गोश्च पुरीषे" इत्यनेन 'मयट्' प्रत्ययेऽनुवन्धलोपे, सुब्लुकि, प्रातिपदिकसंज्ञायां सौ स्वादिकार्ये च सति 'गोमयम्' इति रूपस्य सिद्धिः ।

१ उपगु का पुत्र । २ व्याकरण शास्त्र का पढ़ने वाला, या व्याकरण का जानकार । ३ गोबर ।

[1]दण्डी ।

दण्डोऽस्यास्तीति विग्रहे 'दण्ड' शब्दात् **"अत इनिठनौ"** इत्यनेन 'इनि'-प्रत्यये **"यस्येति च"** इत्यनेनाकारस्य लोपे प्रातिपदिकत्वे, सौ, दीर्घे **"नलोपः प्रातिपदिकान्तस्य"** इत्यनेन नकारस्य लोपे **"हल्ङ्याब्भ्यः-"** इत्यादिना सौलुकि च कृते **'दण्डी'** इति रूपं साधु ।

[2]कुतः ।

कस्मादिति विग्रहे पञ्चम्यन्त-'किम्'शब्दात् **"पञ्चम्यास्तसिल्"** इत्यनेन 'तसिल्'प्रत्ययेऽनुबन्धलोपे, तद्धितान्तत्वात्प्रातिपदिकत्वेन सुपो लुकि **"कुतिहोः"** इति सूत्रेण किमः 'कु' इत्यादेशे, ततः पुनः प्रातिपदित्वे सौ अव्ययत्वात् **"अव्ययादाप्सुपः"** इत्यनेन सोर्लुकि, सकारस्य रुत्वे विसर्गे च सति **'कुतः'** इति रूपं सिद्धम् ।

युवतिः ।

अस्योत्तरं ( १२ ) पृष्ठेऽवलोकनीयम् ।

: : :

सन् १९३३

प्रश्नाः-

१ हर इह । गो अग्रम् । पुंस्कोकिलः । देवायिह । सर्वेषाम् । हरेः । क्रोष्टुः । एते प्रयोगाः साधु साध्यन्ताम् । २१

२ तिस्रः । वारीणाम् । राज्ञः । पन्थाः । एतेषां साधनं विधेयम् । १०

३ भूयात् । आतिष्ट । कामयाञ्चक्रे । विदाङ्करोतु । नरर्यति । अस्तम्भीत् । अजीगणत् । एते प्रयोगा धात्वर्थनिर्देशपुरस्सरं सधनीयाः । २१

1 दण्डवाला । २ कहाँ से ।

४ चिकीर्षति । शिष्यः । दामः । सुपानः । शयित्वा । विग्रहपुरःसरं साधनप्रकारः प्रदर्शनीयः । १५

५ उपराजम् । पञ्चगवम् । दीर्घसक्थः । प्राध्वो रथः । एतेषां विग्रहप्रदर्शनपुरस्सरं साधनं प्रदर्श्यताम् । १२

६ राजन्यः । यौवतम् । राष्ट्रियः । तर्हि । एता । वृषली । मत्सी । एते प्रयोगाः सविग्रहं साध्यन्ताम् । २१

## उत्तराणि

### प्र० [ १ ] हर ६६ ।

अस्य साधनं ( २७ ) पृष्ठे कृतं मया ।

### [1]गो अग्रम् ।

'गो + अग्रम्' इत्यवस्थायाम् **"एचोऽयवायावः"** इति सूत्रेणावादेशे प्राप्ते तं बाधित्वा **"एङः पदान्तादति"** इत्यनेन पूर्वरूपे प्राप्ते तमपि प्रबाध्य **"सर्वत्र विभाषा गोः"** इति सूत्रेण वैकल्पिके प्रकृतिभावे **'गो अग्रम्'** इति रूपं सिद्धम् । पक्षे-पूर्वरूपे **'गोऽग्रम्'** इति द्वे रूपे निष्पन्ने ।

### [2]पुंस्कोकिलः ।

'पुम् + कोकिलः' इत्यवस्थाया **"पुमः खय्यम्परे"** इति सूत्रेण पुमो मकारस्य रुत्वेऽनुबन्धलोपे 'पुर् + कोकिल.' इति स्थिते **"अत्रानुनासिकः पूर्वस्य तु वा"** इत्यनेन पकारोत्तरवर्तिन उकारस्यानुनासिकत्वे, 'पुँर्+कोकिल' इति भूते **"खरवसानयोर्विसर्जनीयः"** इत्यनेन रेफस्य विसर्गे **"सम्पुङ्कानां सो वक्तव्यः"** इति वार्तिकेन विसर्गस्य स्थाने सकारे **'पुँस्कोकिलः'** इति । अनुनासिकाभावपक्षे-**"अनुनासिकात्परोऽनुस्वारः"** इत्यनेनानुस्वारागमे 'पुंर् + कोकिल.' इति स्थिते रेफस्य विसर्गे सकारे च कृते **'पुंस्कोकिलः'** इति द्वे रूपे सिद्धे ।

[1] गौ के आगे, या गौ का अग्रभाग । [2] नर कोकिल [ कोयल ] ।

## [1]देवायिह ।

'देवास्+इह' इति दशायां "ससजुषो रुः" इति सूत्रेण रुत्वेऽनुबन्धलोपे 'देवार्+इह' इति भूते "भो-भगो-अघो-अपूर्वस्य योऽशि" इति सूत्रेण यादेशे 'देवाय्+इह' इति भूते "लोपः शाकल्यस्य" इति सूत्रेण वैकल्पिके यकारस्य लोपे 'देवा इह' इति । यलोपाभावपक्षे 'देवायिह' इति च रूपद्वयं सिद्धम् ।

## सर्वेषाम् ।

प्रातिपदिकसञ्ज्ञक-[2]'सर्व'शब्दात् षष्ठीबहुवचने आमि विभक्तौ "आमि सर्वनाम्नः सुट्" इति सूत्रेण सुडागमेऽनुबन्धलोपे 'सर्व+स्+आम्' इति जाते "बहुवचने झल्येत्" इत्यनेन एत्वे "आदेशप्रत्यययोः" इति सूत्रेण षत्वे च कृते 'सर्वेषाम्' इति रूपं सिद्धम् ।

## हरेः ।

प्रातिपदिकत्वात्–[3]'हरि'शब्दस्य पञ्चमीषष्ठ्योरेकवचने ङसि विभक्तावनुबन्धलोपे 'हरि+अस्' इति स्थिते "शेषो घ्यसखि" इति सूत्रेण घिसञ्ज्ञायां "घेर्ङिति" इति सूत्रेण गुणे "ङसिङसोश्च" इति सूत्रेण पूर्वरूपे, सकारस्य रुत्वे विसर्गे च कृते 'हरेः' इति रूपं साधु ।

## क्रोष्टुः ।

प्रातिपदिकत्वात्–'क्रोष्टु'शब्दस्य पञ्चम्येकवचने ङसि विभक्तावनुबन्धलोपे 'क्रोष्टु+अस्' इति स्थिते "विभाषा तृतीयादिष्वचि" इति सूत्रेण पाक्षिके 'क्रोष्टु'शब्दस्य तृज्वद्भावे कृते 'क्रोष्टृ+अस्' इति जाते "ऋत उत्" इति सूत्रेण उदेकादेशे, रपरत्वे च "रात्सस्य" इत्यनेन सकारस्य लोपे, रेफस्य विसर्गे 'क्रोष्टुः' इति रूपं सिद्धम् । तृज्वद्भावाऽभावपक्षे–"घेर्ङिति" इति सूत्रेण गुणे "ङसिङसोश्च" इत्यनेन पूर्वरूपे, रुत्वविसर्गयोश्च सतो 'क्रोष्टोः' इति च रूपद्वयं सिद्धम् ।

१ देवता यहाँ हैं । २ सब । ३ पापहर्ता भगवान् ।

प्र० [ २ ] तिस्रः।

प्रातिपदिकसञ्ज्ञकात्—[1]'त्रि'शब्दाज्जसि विभक्तावनुबन्धलोपे "त्रिचतुरोः स्त्रियां तिसृचतसृ" इति सूत्रेण तिस्रादेशे 'तिसृ+अस्' इति जाते "इको यणचि" इति सूत्रेण यणि प्राप्ते तम्प्रबाध्य "ऋतो ङिसर्वनामस्थानयोः" इत्यनेन गुणे प्राप्ते तं बाधित्वा "प्रथमयोः पूर्वसवर्णः" इत्यनेन पूर्वसवर्णदीर्घे प्राप्ते तमपि प्रबाध्य "अचि र ऋतः" इति सूत्रेण ऋकारस्य रेफादेशे, रुत्वे विसर्गे च कृते 'तिस्रः' इति रूपं सिद्धम्।

वारीणाम्।

प्रातिपदिकत्वात्—[2]'वारि'शब्दात् 'आम्' विभक्तौ समागतायां सत्यां परत्वात् "ह्रस्वनद्यापो नुट्" इति सूत्रेण नुटं पूर्वविप्रतिषेधात्पृथ्वद्भाव च बाधित्वा "इकोऽचि विभक्तौ" इति सूत्रेण नुमः प्राप्तौ "नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन" इति वार्तिकबलान्नुडागमेऽनुबन्धलोपे च 'वारि+नाम्' इति स्थिते "नामि" इति सूत्रेण दीर्घे, णत्वे च कृते 'वारीणाम्' इति रूपं साधु।

राज्ञः।

प्रातिपदिकसञ्ज्ञक—[3]'राजन्' शब्दात् 'शस्' विभक्तावनुबन्धलोपे 'राजन्+अस्' इति स्थिते "यचि भम्" इति सूत्रेण भसञ्ज्ञायाम्, "अल्लोपोऽनः" इति सूत्रेण जकारोत्तरवर्त्यकारस्य लोपे "स्तोः श्चुना श्चुः" इति सूत्रेण नकारस्य श्चुत्वे ञकारे, ज-ञोः संयोगे ज्ञकारे, रुत्वे विसर्गे च कृते "राज्ञः' इति रूपं निष्पन्नम्।

पन्थाः।

प्रातिपदिकसञ्ज्ञक—[4]'पथिन्' शब्दात् सौ विभक्तौ "पथिमथ्यृभुक्षामात्" इत्यनेन नकारस्याऽऽत्वे 'पथि+आ×सु' इति स्थिते "इतोऽत्सर्वनामस्थाने" इत्यनेन थकारोत्तरवर्तीकारस्याकारे "थो न्थः" इत्यनेन थका-

१ तीन ( स्त्रियाँ )। २ जल। ३ राजा। ४ मार्ग, रास्ता।

स्य न्यादेशे **"अकः सवर्णे दीर्घः"** इत्यनेन दीर्घे 'सु'-इत्यस्योकारस्ये-त्सञ्ज्ञायां लोपे च सकारस्य रुत्वे विसर्गे च कृते **'पन्थाः'** इति रूपं निष्पन्नम्

प्र० [ ३ ] भूयात् ।

सत्तार्थकात् 'भू' धातोः **"आशिषि लिङ्-लोटौ"** इत्यनेन लिङि, लिङः स्थाने तिपि अनुबन्धलोपे **"लिङाशिषि"** इत्यनेन तिप आर्धधातुकत्वात् **"कर्त्तरि शप्"** इति सूत्रेण शपोऽभावे 'भू + ति' इति भूते **"यासुट् परस्मैपदेषूदात्तो ङिच्च"** इत्यनेन यासुडागमेऽनुबन्धलोपे 'भू + यास् + ति' इति जाते **"किदाशिषि"** इत्यनेन यासुटः कित्त्वे **"स्कोः संयोगाद्योरन्ते च"** इत्यनेन सकारलोपे **"इतश्च"** इत्यनेनेकारस्य लोपे **"सार्वधातुकार्धधातुकयोः"** इत्यनेन गुणे प्राप्ते, परञ्च यासुटः कित्त्वेन **"क्ङिति च"** इत्यनेन निषेधे **'भूयात्'** इति रूपं निष्पन्नम् ।

आतिष्ट ।

'अत-[1]सातत्यगमने' इत्यस्माद्धातोः **"लुङ्"** इत्यनेन लुङि, लुङः स्थाने **"तिप्-तस्-झि-सिप्-थस्-थ-मिब्-वस्-मस्-ता-ऽऽतां-झ-था-साथां-ध्वमिड्-वहि-महिङ्"** इत्यनेन 'थ'प्रत्यये 'अत + थ' इत्यवस्थायां **"तस्थस्थमिपां तान्तन्तामः"** इत्यनेन थकारस्थाने तादेशे **"आडजादीनाम्"** इत्यनेनाडागमेऽनुबन्धलोपे **"आटश्च"** इत्यनेन वृद्धौ 'आत+त' इति स्थिते, च्लौ, च्लेः स्थाने **"च्लेः सिच्"** इत्यनेन सिचि अनुबन्धलोपे **"आर्धधातुकस्येड्वलादेः"** इत्यनेनेडागमेऽनुबन्धलोपे **"आदेशप्रत्यययोः"** इत्यनेन षत्वे **"ष्टुना ष्टुः"** इत्यनेन ष्टुत्वे च कृते **'आतिष्ट'** इति रूपं साधु ।

कामयाञ्चक्रे ।

'कमु-[2]कान्तौ' इत्यस्माद्धातोः **"आयादय आर्धधातुके वा"** इत्यनेन पाक्षिके णिङि, अनुबन्धलोपे **"अत उपधायाः"** इति सूत्रेणोप-

[1] निरन्तर गमन । [2] इच्छा करना ( चाहना ) ।

धावृद्धौ 'कामि' इति स्थिते **"सनाद्यन्ता धातवः"** इत्यनेन धातुसंज्ञायां धातुत्वाल्लिटि, **"कास्यनेकाच् आम्वक्तव्यः"** इत्यामि **"सार्वधातुकार्धधातुकयोः"** इति सूत्रेण प्राप्तं गुणं बाधित्वा **"णेरनिटि"** इत्यनेन णिलोपे प्राप्ते तम्प्रबाध्य **"अयामन्ताल्वाय्येत्न्विष्णुषु"** इति सूत्रेण णेरयादेशे **"आमः"** इत्यनेन लिटो लुकि **"कृञ्चानुप्रयुज्यते लिटि"** इत्यनेन लिट्परकृञोऽनुप्रयोगे 'कामयाम्+कृ+लिट्' इति भूते, लिटः स्थाने 'त' प्रत्यये **"लिटि धातोरनभ्यासस्य"** इत्यनेन द्वित्वे 'कामयाम्+कृ+कृ+त' इति स्थिते **"पूर्वोऽभ्यासः"** इत्यनेनाभ्याससञ्ज्ञाया **"उरत्"** इत्यनेनात्वे **"उरण् रपरः"** इत्यनेन रपरे **"हलादिः शेषः"** इत्यनेन लोपे **"कुहोश्चुः"** इत्यनेन चुत्वे **"लिटस्तझयोरेशिरेच्"** इति सूत्रेण एशि, अनुबन्धलोपे, अनुस्वारे, परसवर्णे यणि च कृते **'कामयाञ्चक्रे'** इति रूपं सिद्धम्। णिङोऽभावपक्षे-लिटः स्थाने 'त' प्रत्यये, एशि, द्वित्वेऽभ्यासकार्ये च कृते **'चकमे'** इति च रूपं सिद्ध्यति।

## विदाङ्करोतु।

'विद-[1]ज्ञाने' इत्यस्माद्धातोः **"लोट् च"** इति सूत्रेण लोटि **"विदाङ्कुर्वन्त्वित्यन्यतरस्याम्"** इति सूत्रेण निपातनात्-विद आमि, गुणाभावे, लोटो लुकि, लोडन्तकृञोऽनुप्रयोगे च 'विदाम्+कृ+लोट्' इति स्थिते लोटस्तिपि, **"कर्त्तरि शप्"** इत्यनेन शपि प्राप्ते तम्प्रबाध्य **"तनादिकृञ्भ्य उः"** इत्यनेन 'उ'प्रत्यये 'विदाम्+कृ+उ+ति' इति स्थिते, उकारस्य शित्वात् **"तिङ्शित्सार्वधातुकम्"** इति सार्वधातुकसंज्ञायां सार्वधातुकत्वात् **"सार्वधातुकार्धधातुकयोः"** इत्यनेन-ऋकारस्य गुणे, रपरे, **"एरुः"** इति सूत्रेण-उत्वे, तिपो निमित्तमादाय पुनरुकारस्य गुणे 'विदाम्+करोति' इति स्थिते, तत अनुस्वारे, परसवर्णे **'विदाङ्करोतु'** इति रूपं सिद्धम्।

[1] जानना।

नर्त्स्यति ।

'नृती[1] 'गात्रविक्षेपे' इत्यस्माद्धातोः **"लृट् शेषे च"** इत्यनेन लृटि, लृटस्तिपि **"स्यतासी लृलुटोः"** इत्यनेन 'स्य'प्रत्यये, तस्याऽऽर्धधातुकत्वे **"सेऽसिचि कृत-चृत-छृद-तृद-नृतः"** इति सूत्रेणेडभावे **"पुगन्तलघूपधस्य च"** इत्यनेन गुणे, रपरे **'नर्त्स्यति'** इति । इटि कृते षुत्वे **'नर्तिष्यति'** इति रूपद्वयं साधु ।

अस्तम्भीत् ।

[2]'स्तम्भ्' धातोर्लुङि, लुङः स्थाने तिपि अनुबन्धलोपे **"लुङ्-लङ्-लृङ्क्ष्वडुदात्तः"** इत्यनेनाऽडागमेऽनुबन्धलोपे 'अ + स्तम्भ् + ति' इति स्थिते **"च्लि लुङि"** इत्यनेन च्लौ, च्लेः स्थाने **"जॄ-स्तम्भु-म्रुचु-म्लुचु-ग्रुचु-ग्लुचु-ग्लुञ्चु-श्विभ्यश्च"** इति सूत्रेण वैकल्पिकेऽङभावे **"च्लेः सिच्"** इत्यनेन सिच्यनुबन्धलोपे 'अ । स्तम्भ् + स् + ति इति भूते **"आर्धधातुकस्येड्वलादेः"** इत्यनेनेडागमेऽनुबन्धलोपे **"अस्ति सिचोऽपृक्ते"** इत्यनेन च ईडागमेऽनुबन्धलोपे **"इट ईटि"** इत्यनेन सकारस्य लोपे **"अकः सवर्णे दीर्घः"** इत्यनेन दीर्घे **"इतश्च"** इत्यनेनेकारस्य लोपे **अस्तम्भीत्'** इति रूपं निष्पन्नम् ।

अजीगणत् ।

**'गण'**-सङ्ख्याने, इत्यस्माद्धातोः **"सत्याप-पाश-रूप-वीणा-तूल-श्लोक-सेना-लोम-त्वच-वर्म-वर्ण-चूर्ण-चुरादिभ्यो णिच्"** इति सूत्रेण णिचि, अल्लोपे, तस्य स्थानिवत्त्वाद् वृद्ध्यभावे **"लुङ्"** इति सूत्रेण लुङि, लुङः स्थाने तिपि, अनुबन्धलोपे **"च्लि लुङि"** इति सूत्रेण च्लौ **"णि-श्रि-द्रु-स्रुभ्यः कर्त्तरि चङ्"** इत्यनेन च्लेश्चङि, अनुबन्धलोपे **"णौ चङ्युपधाया ह्रस्वः"** इत्यनेन ह्रस्वे **"णेरनिटि"** इत्यनेन णिलोपे **"चङि"** इत्यनेन द्वित्वे **"पूर्वोऽभ्यासः"** इत्यनेनाऽभ्यास-

१ नाचना । २ रोकना ।

सञ्ज्ञायां "हलादिः शेषः" इति सूत्रेण णकारलोपे 'ग+गण्+अ+ति' इति जाते "कुहोश्चुः" इति सूत्रेणाभ्यासस्य चुत्वेन जकारे "लुङ्-लङ्-लृङ्क्ष्वडुदात्तः" इति सूत्रेणाडागमेऽनुबन्धलोपे "इतश्च" इत्यनेनेकारस्य लोपे "ई च गणः" इत्यनेनाभ्यासस्य ईत्वे कृते 'अजीगणत्' इति रूपं सम्पन्नम्।

प्र० [ ४ ] चिकीर्षति।

असौ प्रयोगः सन् १६३१ वर्षे ( २२ ) पृष्ठे प्रेक्षणीयः।

[1]शिष्यः।

शासितुं योग्यः इति विग्रहे 'शासु अनुशिष्टौ' इत्यस्माद्धातोः "एति स्तु-शास्वृ-दृ-जुषः क्यप्" इति सूत्रेण क्यप्यनुबन्धलोपे 'शास्+य' इति स्थिते "शास इदङ्हलोः" इति सूत्रेणोपधाया इत्वे "शासि-वसि-घसीनां च" इत्यनेन सकारस्य षत्वे, प्रातिपदिकसञ्ज्ञाया सौ रुत्वे विसर्गे च कृते 'शिष्यः' इति रूपं साधु।

[2]क्षामः।

अक्षासीदिति विग्रहे 'क्षै क्षये' इत्यस्माद्धातोः "निष्ठा" इति सूत्रेण 'क्त'प्रत्यये "लशक्वतद्धिते" इति सूत्रेण ककारस्येत्सञ्ज्ञाया "तस्य लोपः" इति सूत्रेण लोपे च "आदेच उपदेशेऽशिति" इति सूत्रेणाऽऽत्वे "क्षायो मः" इति सूत्रेण निष्ठा तकारस्य मकारे, प्रातिपदिकसञ्ज्ञायां, सौ रुत्वे विसर्गे च कृते 'क्षामः' इति रूपं सिद्धम्।

[3]सुपानः।

सु=सुष्ठु पीयते—इति विग्रहे सूपसर्गक-'पा'धातो "ईषद्दुस्सुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्" इति सूत्रेण प्राप्तं खलं बाधित्वा "आतो युच्"

१ शिक्षा देने योग्य [ छात्र ]। २ कृश। ३ सुख से पेय [ पीने योग्य ]।

इति सूत्रेण 'युच्'प्रत्ययेऽनुबन्धलोपे "युवोरनाकौ" इत्यनेन योरनादेशे 'सुपान' इति स्थिते, कृदन्तत्वात् "कृत्तद्धितसमासाश्च" इति सूत्रेण प्रातिपदिकसञ्ज्ञायां सौ रुत्वे विसर्गे च कृते '**सुपानः**' इति रूपं निष्पन्नम् ।

[1]शयित्वा ।

'शीङ् स्वप्ने' इत्यस्माद्धातोः '**समानकर्तृकयोः पूर्वकाले क्त्वा**' इति सूत्रेण 'क्त्वा'प्रत्ययेऽनुबन्धलोपे, इडागमेऽनुबन्धलोपे च 'शी + इ + त्वा' इति जाते, गुणेऽयादेशे, ततः प्रातिपदिकसञ्ज्ञायां सौ, सोर्लुकि च कृते '**शयित्वा**' इति रूपं सिद्धम् । नन्वत्र 'क्त्वा' इत्यस्य कित्त्वेन "**क्ङिति च**" इति सूत्रेण निषेधाद्गुणो न स्यादिति चेन्न, "**न क्त्वा सेट्**" इत्यनेन कित्त्वभावविधानादिति दिक् ।

प्र० [ ५ ] [2]उपराजम् ।

'राज्ञः समीपमिति लौकिकविग्रहे, 'राजन् + ङस् + उप' इत्यलौकिकविग्रहे च "**अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावा-ऽत्यया-ऽसम्प्रति-शब्दप्रादुर्भाव-पश्चाद्यथा-ऽऽनुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्या-ऽन्तवचनेषु**" इति सूत्रेण समासे "**अनश्च**" इत्यनेन टचि, अनुबन्धलोपे समासत्वात्प्रातिपदिकत्वेन "**सुपो धातुप्रातिपदिकयोः**" इत्यनेन सुपो लुकि 'उप'–इत्यस्योपसर्जनत्वात्प्राक्प्रयोगे 'उपराजन्' इति स्थिते "**यचि भम्**" इत्यनेन भसंज्ञायां "**नस्तद्धिते**" इति सूत्रेण टिलोपे, ततः प्रातिपदिकत्वात्सौ "**अव्ययीभावश्च**" इत्यनेनाऽव्ययत्वात् "**अव्ययादाप्सुपः**" इत्यनेन सोर्लुकि प्राप्ते "**नाऽव्ययीभावादतोऽम्त्वपञ्चम्याः**" इत्यनेन तन्निषेधे, सोरमादेशे "**अमि पूर्वः**" इत्यनेन पूर्वरूपे च कृते '**उपराजम्**' इति रूपं सिद्धम् ।

[3]पञ्चगवम् ।

पञ्चानां गवां समाहारः, इति लौकिकविग्रहे 'पञ्चन् + आम् + गो + आम्'

---

१ सो कर । २ राजा के समीप । ३ पाँच गौ ।

इत्यलौकिकविग्रहे च "तद्धितार्थोत्तरपदसमाहारे च" इत्यनेन समासे, सुब्लुकि "नलोपः प्रातिपदिकान्तस्य" इत्यनेन नकारस्य लोपे "गोरतद्धितलुकि" इत्यनेन टच्यनुबन्धलोपे, अवादेशे "तत्पुरुषः समानाधिकरणः कर्मधारयः" इत्यनेन कर्मधारयसंज्ञायां "संख्यापूर्वो द्विगुः" इत्यनेन द्विगुसंज्ञायां "द्विगुरेकवचनम्" इत्यनेनैकवद्भावे "स नपुंसकम्" इत्यनेन नपुंसकत्वे, प्रातिपदिकसंज्ञात्वे, सौ, सोरमादेशे पूर्वरूपे च कृते 'पञ्चगवम्' इति मञ्जुलं रूपं सिद्धम् ।

[1]दीर्घसक्थः ।

दीर्घे सक्थिनी यस्येति विग्रहे "अनेकमन्यपदार्थे" इत्यनेन समासे सुब्लुकि "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्" इत्यनेन षचि, अनुबन्धलोपे, भसंज्ञायां "यस्येति च" इत्यनेन इकारस्य लोपे 'दीर्घसक्थ'-इति समुदायात्प्रातिपदिकसंज्ञायां सौ, रुत्वे विसर्गे च कृते 'दीर्घसक्थः' इति रूपं निष्पन्नम् ।

[2]प्राध्वो रथः ।

प्रगतोऽध्वानमिति विग्रहे "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इत्यनेन समासे "उपसर्गादध्वनः" इति सूत्रेण 'अच्'प्रत्ययेऽनुबन्धलोपे "नस्तद्धिते" इत्यनेन टेर्लोपे, दीर्घे, प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'प्राध्वो रथः' इति रूपं साधु ।

प्र० [ ६ ] [3]राजन्यः ।

राज्ञोऽपत्यं जातिरिति विग्रहे 'राजन्'शब्दात् "तस्याऽपत्यम्" इत्यनेन 'अण्'प्रत्यये प्राप्ते, तं प्रबाध्य "राजश्वसुराद्यत्" इत्यनेन 'यत्' प्रत्यये "यचि भम्" इत्यनेन भत्वे भत्वाद् "नस्तद्धिते" इत्यनेन टिलोपे प्राप्ते "ये चाऽभावकर्मणोः" इत्यनेन प्रकृतिभावात्तन्निषेधे, ततः प्रातिपदिकत्वे, सौ रुत्वे विसर्गे च कृते 'राजन्यः' इति रूपं सम्पन्नम् ।

१ लम्बे ऊरु वाला । २ रास्ते को प्राप्त हुआ रथ । ३ क्षत्रिय ।

[1]यौवतम् ।

युवतीनां समूहः-इति विग्रहे *'युवती'शब्दात् "अनुदात्तादेरञ्" इति सूत्रेण 'अञ्'प्रत्ययेऽनुबन्धलोपे "भस्याऽढे तद्धिते" इति वार्त्तिकेन पुंवद्भावात्, ङीपो निवृत्तौ "तद्धितेष्वचामादेः" इत्यनेनाऽऽदिवृद्धौ, ततः प्रातिपदिकसंज्ञायां सौ, सोरमादेशे पूर्वरूपे च कृते 'यौवतम्' इति रूपं साधु ।

[2]राष्ट्रियः ।

राष्ट्रे जातः-इति विग्रहे "राष्ट्राऽवारपाराद्घखौ" इति सूत्रेण 'घ'प्रत्यये "आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम्" इति सूत्रेण घस्येयादेशे, भसंज्ञायां "यस्येति च" इति सूत्रेणाकारस्य लोपे, प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'राष्ट्रियः' इति रूपं निष्पन्नम् ।

[3]तर्हि ।

तस्मिन् काले-इति विग्रहे 'तद्' शब्दात् "अनद्यतने र्हिलन्यतरस्याम्" इत्यनेन 'र्हिल्' प्रत्यये "त्यदादीनामः" इत्यनेनात्वे "अतो गुणे" इत्यनेन पररूपे च कृते 'तर्हि' इति रूपं साधु ।

[4]एता ।

एतत्ववर्णविशिष्टा स्त्री-इति विग्रहे†'एत' शब्दात् "वर्णादनुदात्तात्तोपधात्तो नः" इत्यनेन ङीपो, नकारादेशस्य च वैकल्पिकत्वात्तदभावपक्षे

* यौति मिश्रीकरोत्यात्मानं पत्या इति विग्रहे 'यु मिश्रणाऽमिश्रणयोः'-इत्यस्माद्धातोर्लटि, लटः स्थाने 'शतृ' प्रत्ययेऽनुबन्धलोपे वुगादेशे च कृते 'युवत्' शब्दात् "उगितश्च" इति सूत्रेण ङीप्यनुबन्धलोपे 'युवती' इत्यस्य सिद्धिः ।

† 'एत'शब्दश्चित्रवर्णवाची । 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः ।

१ युवतियों का समूह । २ राष्ट्र में होने वाला । ३ तब । ४ चितकबरी ।

"अजाद्यतष्टाप्" इत्यनेन टापि, अनुबन्धलोपे, ततः प्रातिपदिकत्वात्स्वादिकार्ये च कृते 'एता' इति रूपं सिद्धम् ।

[1]वृषली ।

वृषलत्वजातिविशिष्टा स्त्री—इति विग्रहे 'वृषल' शब्दात् "जातेरस्त्रीविषयादयोपधात्" इत्यनेन 'ङीष्'प्रत्ययेऽनुबन्धलोपे, भत्वे, "यस्येति च" इत्यनेनाकारलोपे, प्रातिपदिकत्वात्सौ "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन सोर्लुकि 'वृषली' इति रूपं सिद्धम् ।

[2]मत्सी ।

मत्स्यत्वजातिविशिष्टा स्त्री—इति विग्रहे 'मत्स्य' शब्दात् "योपधप्रतिषेधे हय-गवय-मुकय-मनुष्य-मत्स्यानामप्रतिषेधः" इति वार्त्तिकबलात् "जातेरस्त्रीविषयादयोपधात्" इति सूत्रेण ङीषि, अकारस्य लोपे, "मत्स्यस्य ङ्याम्" इति वार्त्तिकेन यकारस्य लोपे, प्रातिपदिकत्वात्सौ, हल्ङ्यादिलोपे च कृते 'मत्सी' इति रूपं साधु ।

सन् १६३४

## प्रश्नाः

१ प्रष्ठौहः, गोऽग्रम्, किम्पुरुषम्, तच्छ्लोकेन, देवायिह—एषु सन्धिकार्याणि सूत्रनिर्देशपुरस्सरं लिखत । १०

२ सः + गच्छति, कवी + अमू, गौः + चरति, भानो + इति, एषां संश्लिष्टरूपाणि सप्रमाणं प्रदर्शयत । १२

३—सखि, भ्रू-एतयोः सप्तम्येकवचने रूपे संसाध्य, षष्, पिपठिष्, अदस्, एषां सप्तमीबहुवचने रूपाणि साधयत । २०

१ शूद्री । २ मछली ।

४ क्रमु पादविक्षेपे, डुदाञ् दाने, दीङ् क्षये, एषां लुङि प्रथमपुरुषैकवचने कीदृशानि रूपाणि, कथञ्च तत्सिद्धिप्रकारः । १५
५ गुपू रक्षणे, दीङ् क्षये, ह्री लज्जायाम्, एषां लिटि प्रथमपुरुषैकवचने विशेषकार्यनिर्देशपुरस्सरं रूपाणि संसाध्यन्ताम् । १५
६ जिघत्सति, भुग्नः, भावितः, हारणा, एषां सिद्धिप्रकारः कः । १०
७ अतिहिमम्, पञ्चगवम्, चित्रगुः, त्रिमूर्धः, एषां विग्रहनिर्देशपुरस्सरं समासविधायकानि सूत्राणि लिखत । १०
८ षाण्मातुरः, शारावः, श्रोत्रियः, क्षत्रियाणी, एषु विग्रहार्थप्रदर्शनपुरस्सरं प्रत्ययविधायकानि सूत्राणि निर्दिशत । ८

०

## उत्तराणि

प्र० [ १ ][1] प्रष्ठौहः ।

'प्रष्ठ + ऊहः' इत्यवस्थायां "एत्येधत्यूठ्सु" इति सूत्रेण अकारोकारयोः स्थाने औकारे वृद्धौ कृतायां 'प्रष्ठौहः' इति रूपं सिद्धम् ।

गोऽग्रम् ।

अयं प्रयोगः सन् १९३३ वर्षे ( ३६ ) पृष्ठेऽवलोकनीयः ।

[2]किम्वुक्तम् ।

'किमु + उक्तम्' इत्यवस्थायां "मय उञो वो वा" इति सूत्रेण वैकल्पिके मकारात्परस्य उञ उकारस्य स्थाने वकारादेशे 'किम्वुक्तम्' इति रूपं सिद्धम् । वकाराभावपक्षे "निपात एकाजनाङ्" इति सूत्रेण

१ उद्दण्डता दूर करने के लिये जिनके गले में काष्ठ बाँध देते हैं, ऐसे बछड़े को 'प्रष्ठवाट्' कहते हैं ( तस्य प्रष्ठौहः ) प्रष्ठवाट का । २ क्या कहा ? ।

प्रगृह्यसञ्ज्ञायां "प्लुतप्रगृह्या अचि नित्यम्" इत्यनेन प्रकृतिभावे च कृते 'किमु उक्तम्' इति च रूपद्वयं सिद्ध्यति ।

[१]तच्छ्लोकेन ।

'तद्+श्लोकेन' इति दशायां "स्तोः श्चुना श्चुः" इत्यनेन शकार-योगाद्-दकारस्य श्चुत्वेन जकारे "खरि च" इत्यनेन जकारस्य चर्त्वेन चकारे "छत्वममीति वाच्यम्" इति वार्तिकेन शकारस्य स्थाने छकारे कृते 'तच्छ्लोकेन' इति रूपं साधु ।

देवायिह ।

अस्योत्तरं ( ४० ) पृष्ठे प्राक्प्रेक्षणीयम् ।

प्र० [ २ ] [२]स गच्छति ।

'सः+गच्छति' इति दशायां विसर्गस्य सकारे "एतत्तदोः सुलोपोऽकोरनञ्समासे हलि" इति सूत्रेण सकारस्य लोपे 'स गच्छति' इति रूपं निष्पन्नम् ।

[३]कवी अमू ।

'कवी+अमू' इत्यवस्थायां "ईदूदेद्द्विवचनं प्रगृह्यम्" इति सूत्रेण प्रगृह्यसंज्ञायां "प्लुतप्रगृह्या अचि नित्यम्" इति सूत्रेण प्रकृतिभावे च कृते 'कवी अमू' इति रूपं सिद्धम् ।

[४]गौश्चरति ।

'गौः+चरति' इति दशायां "विसर्जनीयस्य सः" इत्यनेन विसर्गस्य स्थाने सकारे "स्तोः श्चुना श्चुः" इत्यनेन सकारस्य श्चुत्वेन शकारे 'गौश्चरति' इति रूपस्य सिद्धिः ।

[५]भानो इति ।

'भानो+इति' इत्यवस्थायां "सम्बुद्धौ शाकल्यस्येतावनार्षे"

१ उस श्लोक से । २ वह जाता है । ३ ये दोनों कवि हैं । ४ गौ चरती है । ५ हे सूर्य ! यह ।

इति सूत्रेण वैकल्पिके प्रगृह्यसञ्ज्ञायां "प्लुतप्रगृह्या अचि नित्यम्" इत्यनेन प्रकृतिभावे **'भानो इति'** इति रूपम् । प्रगृह्यसञ्ज्ञाया अभावपक्षे—"एचोऽयवायावः" इत्यनेनाऽवादेशे "लोपः शाकल्यस्य" इत्यनेन वैकल्पिके वकारलोपे "पूर्वत्रासिद्धम्" इति सूत्रेण "लोपः शाकल्यस्य" इत्यस्यासिद्धत्वाद् "आद्गुणः" इत्यनेन गुणाभावे **'भान इति'** इति । वकारलोपाभावपक्षे—**'भानविति'** इति रूपत्रयं सिद्धम् ।

प्र० [ ३ ] सख्यौ ।

[1]'सखि' शब्दस्य प्रातिपदिकसञ्ज्ञायां प्रातिपदिकत्वात्सप्तम्येकवचने ङौ विभक्तावनुबन्धलोपे "औत्" इत्यनेन ङेरौत्वे "इको यणचि" इत्यनेन यणि **'सख्यौ'** इति रूपं साधु ।

भ्रुवाम् भ्रुवि ।

प्रातिपदिकसञ्ज्ञक [2]'भ्रू' शब्दान्ङौ विभक्तौ समागतायां "ङिति ह्रस्वश्च" इत्यनेन वैकल्पिकनदीसञ्ज्ञायां "ङेराम्नद्याम्नीभ्यः" इत्यनेन ङेः स्थाने आमि, "आण्नद्याः" इत्यनेनाऽऽडागमेऽनुबन्धलोपे "आटश्च" इत्यनेन वृद्धौ "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इत्यनेनाऽवङादेशे च कृते **'भ्रुवाम्'** इति । नदीसञ्ज्ञात्वाभावपक्षे उवङि कृते **'भ्रुवि'** इति द्वे रूपे सिद्धे ।

षट्त्सु ।

प्रातिपदिकत्वात्—[3]'षष्' शब्दात्सप्तमीबहुवचने सुपि विभक्तावनुबन्धलोपे 'षष्+सु' इति भूते "स्वादिष्वसर्वनामस्थाने" इति सूत्रेण पदत्वात् "झलां जशोऽन्ते" इति सूत्रेण षकारस्य जश्त्वेन डकारे "डः सि धुट्" इत्यनेन वैकल्पिके धुडागमेऽनुबन्धलोपे 'षड् + ध् + सु' इति स्थिते "खरि च" इति चर्त्वेन धकारस्य तकारे, पुनः डकारस्य चर्त्वेन टकारे कृते **'षट्त्सु'** इति, धुडभावपक्षे **'षट्सु'** इति द्वे रूपे सिद्धे ।

१ मित्र । २ भ्रुकुटि [ भौं ] । ३ छै ।

पिपठीःषु ।

प्रातिपदिकसञ्ज्ञक-[1]'पिपठिष्'शब्दात्सुब्विभक्तावनुबन्धलोपे रुत्वम्प्रति षत्वस्याऽसिद्धत्वात् "ससजुषो रुः" इत्यनेन रुत्वेऽनुबन्धलोपे 'पिपठिर्+सु' इति भूते 'र्वोरुपधाया दीर्घ इकः' इत्यनेन दीर्घे 'पिपठीर्+सु' इति स्थिते "खरवसानयोर्विसर्जनीयः" इत्यनेन रेफस्य विसर्गे "वा शरि" इत्यनेन पाक्षिके विसर्गस्य स्थाने विसर्गे, 'पिपठीः+सु' इति जाते "नुम्-विसर्जनीय-शर्व्यवायेऽपि" इत्यनेन सस्य षत्वे 'पिपठीःषु' इति । विसर्गस्य विसर्गाऽभावपक्षे "विसर्जनीयस्य सः" इत्यनेन विसर्गस्य सकारे "नुम्-विसर्जनीय-शर्व्यवायेऽपि" इत्यनेनैव विभक्ति-सकारस्य षत्वे "ष्टुना ष्टुः" इत्यनेन पूर्वसकारस्य ष्टुत्वे 'पिपठीष्षु' इति च द्वे रूपे साधुनी ।

अमीषु ।

प्रातिपदिकसंज्ञक [2]'अदस्'शब्दात्सुब्विभक्तावनुबन्धलोपे "त्यदादीनामः" इत्यनेन अकारेऽन्तादेशे "अतो गुणे" इत्यनेन पररूपे 'अद+सु' इति भूते "बहुवचने झल्येत्" इत्यनेन दकारोत्तरवर्त्यकारस्यैत्वे 'अदे+सु' इति भूते "एत ईद्बहुवचने" इत्यनेन एकारस्य ईकारे, दस्य मत्वे च "आदेशप्रत्यययोः" इत्यनेन सकारस्य षत्वे च कृते 'अमीषु' इति रूपं निष्पन्नम् ।

प्र० [ ४ ] अक्रमीत् ।

"क्रमु'-[3]पादविक्षेपे' इत्यस्माद्धातोर्लुङि, लुङस्तिप्यनुबन्धलोपे "लुङ्-लङ्-लृङ्क्ष्वडुदात्तः" इत्यनेनाऽडयनुबन्धलोपे, च्लौ, च्लेः स्थाने सिचि अनुबन्धलोपे "आर्धधातुकस्येड्वलादेः" इत्यनेनेडागमेऽनुबन्धलोपे "अस्ति सिचोऽपृक्ते" इत्यनेनेडागमेऽनुबन्धलोपे 'अ+क्रम्+इ।स्+ई+ति' इति जाते "इट ईटि" इत्यनेन सकारस्य लोपे "अकः

१ पढ़ने की इच्छा वाला । २ वह । ३ पैरों को चलाना ।

सवर्णे दीर्घः" इत्यनेन दीर्घे "इतश्च" इत्यनेनेकारस्य लोपे 'अक्रमीत्' इति रूपं सम्पन्नम् ।

अदात् ।

'डुदाञ् - [1]'दाने' इत्यस्माद्धातोर्लुङि, लुङः स्थाने तिप्यनुबन्धलोपे "इतश्च" इत्यनेन इकारस्य लोपे "लुङ् लङ्-लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमेऽनुबन्धलोपे "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इत्यनेन च्लेः सिचि-अनुबन्धलोपे 'अ + दा+स् | त्' इति स्थिते "दा-धाघ्वदाप्" इत्यनेन 'दा'-इत्यस्य घुत्वात् "गाति-स्था-घु-पा-भूभ्यः सिचः परस्मैपदेषु" इत्यनेन सिचो लुकि 'अदात्' इति रूपं निष्पन्नम् ।

अदास्त ।

'दीङ्- [2]क्षये' इत्यस्माद्धातोः "लुङ्" इति सूत्रेण लुङि, लुङः स्थाने 'त'-प्रत्ययेऽडागमेऽनुबन्धलोपे 'अ + दी × त' इति भूते "मिनाति-मिनोति-दीङां ल्यपि च" इत्यनेनाऽऽत्वे "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इत्यनेन सिच्यनुबन्धलोपे 'अ + दा + स् + त' इति जाते "दा-धा-घ्वदाप्" इत्यनेन घुसञ्ज्ञात्वे "स्थाघ्वोरिच्च" इत्यनेनेत्वे प्राप्ते, परञ्च "स्थाघ्वोरित्वे दीङः प्रतिषेधः" इति तन्निषेधे कृते 'अदास्त' इति रूपं साधु ।

प्र० [ ५ ] गोपायाञ्चकार ।

अस्योत्तरं सन् १९३२ वर्षे ३१) पृष्ठे द्रष्टव्यम् ।

दिदीये ।

'दीङ् क्षये' इत्यस्माद्धातोः "परोक्षे लिट्" इत्यनेन लिटयनुबन्ध-लोपे, लस्य स्थाने 'त'प्रत्यये 'दी + त' इति स्थिते "लिटस्तझयोरेशिरेच्" इत्यनेनैश्यनुबन्धलोपे, "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्यनेनाभ्याससञ्ज्ञायां "ह्रस्वः" इत्यनेन ह्रस्वे 'दि + दी

१ देना । २ क्षीण [ नाश ] होना ।

+ए' इति जाते "दीङो युडचि क्ङिति" इत्यनेन युडागमेऽनुबन्धलोपे, तस्यासिद्धत्वात् "एरनेकाचोऽसंयोगपूर्वस्य" इत्यनेन यणि प्राप्ते "वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ" इति निषेधवचनेन युटः सिद्धत्वाद्यणोऽभावे 'दिदीये' इति रूपं सिद्धम् ।

जिह्राय ।

'ह्री'–[1]'लज्जायाम्' इत्यस्माद्धातोः "लिट् च" इत्यनेन लिटि, लस्य स्थाने तिपि "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इत्यनेन तिपः स्थाने णलि, अनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्यनेनाभ्यासस्य ह्रस्वे 'हि+ह्री×अ' इति भूते "कुहोश्चुः" इत्यनेन चुत्वेन हकारस्य झकारे "अभ्यासे चर्च" इत्यनेन चर्त्वेन झकारस्य जकारे "अचो ञ्णिति" इत्यनेन वृद्धौ, "एचोऽयवायावः" इत्यनेनाऽयादेशे 'जिह्राय' इति रूपं निष्पन्नम् ।

प्र० [ ६ ] [2]जिघत्सति ।

अत्तुमिच्छतीति विग्रहे 'अद–भक्षणे' इत्यस्माद्धातोः "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इत्यनेन 'सन्'प्रत्यये "लुङ्सनोर्घस्लृ" इत्यनेनादौ घस्लादेशेऽनुबन्धलोपे, 'घस्+स' इति जाते, "एकाच उपदेशेऽनुदात्तात्" इत्यनेन, इटो निषेधे "सन्यङोः" इत्यनेन द्वित्वे 'घस्+घस्+स+अ+ति' इति स्थिते "पूर्वोऽभ्यासः" इत्यनेनाभ्याससञ्ज्ञायां "हलादिः शेषः" इत्यनेन पूर्वसकारस्य लोपे "कुहोश्चुः" इत्यनेन घकारस्य झकारे, झस्य जकारे "सन्यतः" इत्यनेनाभ्यासाऽकारस्येत्वे "सः स्यार्धधातुके" इत्यनेन सस्य तकारे, ततः 'जिघत्स'–इत्यस्य "सनाद्यन्ता धातवः" इत्यनेन धातुसञ्ज्ञाया "वर्त्तमाने लट्" इत्यनेन लटि, अनुबन्धलोपे, लस्य स्थाने तिप्यनुबन्धलोपे "कर्त्तरि शप्" इत्यनेन शप्यनुबन्धलोपे "अतो गुणे" इत्यनेन पररूपे 'जिघत्सति' इति रूपं साधु ।

१ लज्जित होना । २ खाना चाहता है ।

भुग्नः ।

'भुग्नः'—अस्योत्तरं सन् १९३१ वर्षे ( २४ ) पृष्ठेऽवलोकनीयम् ।

[1]भावितः ।

अभावि इति विग्रहे भावयतेः "निष्ठा" इति सूत्रेण 'क्त'प्रत्ययेऽनुबन्धलोपे, इडागमे "निष्ठायां सेटि" इत्यनेन णेर्लोपे "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'भावितः' इति रूपं निष्पन्नम् ।

[2]हारणा ।

हारणम् इति विग्रहे 'हारि'धातोः "ण्यासश्रन्थो युच" इत्यनेन 'युच्' प्रत्ययेऽनुबन्धलोपे "युवोरनाकौ" इत्यनेन योरनादेशे, णिलोपे, णत्वे, टापि, कृदन्तत्वात्प्रातिपदिकत्वेन स्वादिकार्ये च कृते 'हारणा' इति रूप निष्पन्नम् ।

प्र० [ ७ ] [3]अतिहिमम् ।

हिमस्यात्यय, इति लौकिकविग्रहे 'हिम + ङस् + अति' इत्यलौकिकविग्रहे च "अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावा-ऽत्यया-ऽसम्प्रति-शब्दप्रादुर्भाव-पश्चाद्यथा-ऽऽनुपूर्व्य-यौगपद्य सादृश्य-सम्पत्ति-साकल्या-ऽन्तवचनेषु" इत्यनेन समासे "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यनेन 'अति' इत्यस्योपसर्जनसञ्ज्ञायाम्, "उपसर्जनं पूर्वम्" इत्यनेन पूर्वप्रयोगे, समासत्वात्प्रातिपदिकत्वेन "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपो लुकि, एकदेशविकृतस्यानन्यत्वात्प्रातिपदिकत्वेन सौ विभक्तौ समागतायाम्, "अव्ययीभावश्च" इत्यनेनाव्ययत्वात्सोर्लुकि प्राप्ते "नाऽव्ययीभावादतोऽम्त्वपञ्चम्याः" इत्यनेन तन्निषेधे सोरमादेशे 'अमि पूर्वः" इत्यनेन पूर्वरूपे च कृते 'अतिहिमम्' इति रूपं सिद्धम् ।

१ भावित किया हुआ । २ हारना । ३ हिम का नाश ।

पञ्चगवम् ।

अस्योत्तरं सन् १६३३ वर्षे ( ४६ ) पृष्ठे प्राक्प्रेक्षणीयम् ।

चित्रगुः ।

अयमपि प्रयोगः सन् १६३० वर्षे ( ११ ) पृष्ठे प्रेक्षणीयः ।

[१]त्रिमूर्धः ।

त्रयो मूर्धानो यस्येति लौकिकविग्रहे 'त्रि + जस् + मूर्धन् + जस्' इत्यलौकिकविग्रहे च बहुव्रीहिसमासे, सुपो लुकि **"द्वित्रिभ्यां ष मूर्ध्नः"** इत्यनेन 'ष' प्रत्ययेऽनुबन्धलोपे, भत्वे **"नस्तद्धिते"** इत्यनेन टिलोपे, प्रातिपदिकत्वात्सौ, रुत्वे विसर्गे च कृते '**त्रिमूर्धः**' इति रूपं निष्पन्नम् ।

प्र० [ ८ ] [२]षाण्मातुरः ।

षण्णां मातॄणामपत्यमिति विग्रहे **"तद्धितार्थोत्तरपदसमाहारे च"** इत्यनेन समासे **"सुपो धातुप्रातिपदिकयोः"** इत्यनेन सुपो लुकि, षस्य जश्त्वेन डकारे **"यरोऽनुनासिकेऽनुनासिको वा"** इत्यनेन डकारस्य णत्वे 'षण्मातृ' शब्दात् **"मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः"** इत्यनेन 'अण्' प्रत्ययेऽनुबन्धलोपे, उत्वे, रपरत्वे **"तद्धितेष्वचामादेः"** इत्यनेनाऽऽदिवृद्धौ, प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च सति '**षाण्मातुरः**' इति रूपं सिद्धम् ।

शारावः ।

असौ प्रयोग. सन् १६३१ वर्षे ( २६ ) पृष्ठे वर्तते ।

[३]श्रोत्रियः ।

छन्दोऽधीते—इति विग्रहे 'छन्दस्' शब्दात् **"श्रोत्रियंश्छन्दोऽधीते"** इत्यनेन 'घन्'प्रत्यये, छन्दस. श्रोत्रादेशे च **"आयनेयीनीयियः फ-ढ-ख-**

**१ तीन सिर वाला । २ छै माताओं का पुत्र ( कार्तिकेय ) । ३ वेदपाठी, या वेद पढ़नेवाला ।**

ञ्–धां प्रत्ययादीनाम्" इत्यनेन घस्येयादेशे, ततः "यस्येति च" इत्यनेनाकारस्य लोपे, प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'क्षत्रियः' इति रूपं सिद्धम् ।

[1]क्षत्रियाणी ।

क्षत्रियत्वजातिविशिष्टा स्त्री-इति विग्रहे 'क्षत्रिय'शब्दात् "अर्यक्षत्रियाभ्यां वा स्वार्थे" इति वार्तिकेन वैकल्पिके आनुकि, ङीपि–अनुबन्धलोपे च कृते, णत्वे, प्रातिपदिकत्वात्सौ "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन सोर्लुकि 'क्षत्रियाणी' इति रूपं साधु ।

सन् १९३५

प्रश्नाः

१ शिवेहि, अमी ईशाः, अहर्गणः, देवा इह । एषु प्रयोगेषु सन्धिकार्याणि तत्प्रतिबन्धकानि च दर्शनीयानि । १५

२ रामाय, सर्व्वेषाम्, पत्यौ, मत्याम्, लिट्त्सु, त्वयि, प्राचः, पुंभ्याम्, अहःसु, धनूंषि । एतानि पदानि संक्षिप्तोपयुक्तप्रक्रियया साधनीयानि । ३०

३ अभूवम्, अत्नैषीः, अशृणवम्, जगन्थ, जघनिथ, दधाथ, अनजानि, अदात, स्तभान, गृहाण । एतान् विशेषकार्य्याणि प्रदर्श्य साधयत । ३०

४ बुभूषति, प्रतिष्ठते, स्मरसि कृष्ण गोकुले वत्स्यामः, आदत्यः, भुग्नः, हित्वा, परमराजः, बाह्लीकः, मेधावी, अमुतः । एते साधनीयाः । २५

1 क्षत्रिय की स्त्री ।

## उत्तराणि -

प्र० [ १ ] शिवेहि।

अस्योत्तर सन् १९३० वर्षे ( २ ) पृष्ठे प्रागदत्तं विराजते।

[1]अमी ईशाः।

'अमी+ईशाः' इत्यत्र "अदसो मात्" इति सूत्रेण मकारोत्तरवर्तिन ईकारस्य प्रगृह्यसञ्ज्ञायां "प्लुतप्रगृह्या अचि नित्यम्" इति सूत्रेण प्रकृतिभावे च कृते 'अमी ईशाः' इति रूपं सिद्धम्।

[2]अहर्गणः।

'अहन्+गण' इत्यत्र "अलोऽन्त्यस्य" इति सहकारेण "रोः सुपि" इति सूत्रेण नकारस्य रेफादेशे 'अहर्गणः' इति रूपं सिद्धम्।

देवा इह।

अस्योत्तरं सन् १९३३ वर्षे ( ४० ) पृष्ठे द्रष्टव्यम्।

प्र० [ २ ] रामाय। -

अस्योत्तर १९३२ वर्षे ( २८ ) पृष्ठे द्रष्टव्यम्।

सर्व्वेषाम्।

प्रातिपदिकसञ्ज्ञक—'सर्व'शब्दस्य "सर्वादीनि सर्वनामानि" इत्यनेन सर्वनामसंज्ञायां षष्ठीबहुवचने 'आम्' विभक्तौ "न विभक्तौ तुस्माः" इत्यनेन मकारस्येत्सञ्ज्ञानिषेधे 'सर्व+आम्' इति स्थिते "आमि सर्वनाम्नः सुट्" इत्यनेनाऽऽम सुडागमेऽनुबन्धलोपे 'सर्व+स्+आम्' इति जाते "बहुवचने झल्येत्" इति सूत्रेण वकारोत्तरवर्तिनोऽकारस्यैत्वे "यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते" इति परिभाषाबलेन 'आम्'ग्रहणेन सामो ग्रहणात् "आदेशप्रत्यययोः" इत्यनेन साम सका

१ ये प्रभु, या अधिपति हैं। २ दिन-समूह अर्थात् सम्वत्सर।

रस्य षत्वे **"अचो रहाभ्यां द्वे"** इति सूत्रेण द्वित्वे 'स०त्रैषाम्' इति रूपं सिद्धम् ।

पत्यौ ।

प्रातिपदिकसञ्ज्ञक [1]'पति' शब्दात्सप्तम्येकवचने ङौ विभक्तौ समागतायां **"पतिः समास एव"** इति नियमेन घिसञ्ज्ञाभावात् **"औत्"** इत्यनेनौत्वे **"इको यणचि"** इत्यनेन यणि च कृते **'पत्यौ'** इति रूपं निष्पन्नम् ।

मत्याम् ।

अस्योत्तरं सन् १६३१ वर्षे ( १६ ) पृष्ठे द्रष्टव्यम् ।

लिट्त्सु ।

प्रातिपदिकत्वात् [2]'लिह्'शब्दात्सप्तमीबहुवचने सुपि विभक्तावनुबन्धलोपे 'लिह्×सु' इति जाते **"स्वादिष्वसर्वनामस्थाने"** इति सूत्रेण पदसञ्ज्ञाया **"हो ढः"** इति सूत्रेण हस्य ढत्वे **"झलां जशोऽन्ते"** इति सूत्रेण ढकारस्य डकारे **"खरि च"** इति सूत्रेण चर्त्वस्यासिद्धत्वात्पूर्वं **"डः सि धुट्"** इति सूत्रेण वैकल्पिके धुडागमेऽनुबन्धलोपे, ततः **"खरि च"** इति सूत्रेण धकारस्य तकारे, पुनः डकारस्य चर्त्वेन टकारे च कृते *'**लिट्त्सु**' इति । धुडभावपक्षे डकारस्य चर्त्वेन टकारे '**लिट्सु**' इति द्वे रूपे साधुनी ।

त्वयि ।

प्रातिपदिकसंज्ञकात् -[3]'युष्मद्'शब्दात् 'ङि'विभक्तावनुबन्धलोपे **"त्वमावेकवचने"** इत्यनेन मपर्यन्तस्य युष्मदस्त्वादेशे 'त्व + अद् + इ' इति

---

* ननु अत्र "चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्" इति वार्तिकेन तकारस्य थत्वं तु न शङ्क्यम्, चर्त्वनिष्पन्नतकारस्यासिद्धत्वात् । "ष्टुना ष्टुः" इति सूत्रेण ष्टुत्वमपि न शङ्क्यम्, "न पदान्ताट्टोरनाम्" इति निषेधादिति शिवम् ।

१ पति । २ चाटना । ३ तूँ ।

स्थिते "अतो गुणे" इत्यनेन पररूपे "योऽचि" इत्यनेन दकारस्य यकारे 'त्वयि' इति रूपं सिद्धम्।

प्राचः।

प्र पूर्वात्—[1]'अञ्च' धातोः "ऋत्विग्-दधृक्-स्रग्-दिगुष्णिगञ्चु-युजि-क्रुञ्चां च" इत्यनेन 'क्विन्'प्रत्यये तस्य लोपे, 'कृदन्तत्वात् "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकसंज्ञाया 'शस्'विभक्तावनुबन्धलोपे 'प्र+अनच्+अस्' इत्यवस्थायां "अनिदितां हल उपधायाः क्ङिति" इत्यनेन नकारस्य लोपे 'प्र+अच्+अस्' इति जाते "अचः" इत्यनेनाकारस्य लोपे "चौ" इत्यनेन दीर्घे, संयोगे, सकारस्य रुत्वे विसर्गे च कृते 'प्राचः' इति रूपं साधु।

पुंभ्याम्।

प्रातिपदिकसञ्ज्ञकात्—[2]'पुंस्'शब्दात् भ्यामि विभक्तौ 'पुंस्+भ्याम्' इति स्थिते "संयोगान्तस्य लोपः" इत्यनेन सकारस्य लोपे 'निमित्ताऽपाये नैमित्तिकस्याऽप्यपायः' इत्यनुस्वारनिवृत्तौ मकारमादाय पुनरनुस्वारे, परसवर्णे च कृते 'पुम्भ्याम्' इति रूपं निष्पन्नम्।

अहःसु।

प्रातिपदिकत्वात् [3]'अहन्' शब्दात्सुप्यनुबन्धलोपे 'अहन्+सु' इति स्थिते "अहन्" इत्यनेन नकारस्य रुत्वेऽनुबन्धलोपे "खरवसानयोर्विसर्जनीयः" इत्यनेन रेफस्य विसर्गे 'अहःसु' इति रूपं साधु।

धनूंषि।

प्रातिपदिकत्वात् [4]'धनुष्' शब्दाज्जसि विभक्तौ समागतायां "जश्शसोः शिः" इत्यनेन जसः श्यादेशेऽनुबन्धलोपे 'धनुष्+इ' इति जाते "नपुंसकस्य झलचः" इत्यनेन नुम्यनुबन्धलोपे 'धनु+न्+ष्+इ' इति

१ अच्छे गति मे चलने वाला, या पूज्य। २ पुरुष। ३ दिन। ४ धनुष।

भूते, षत्वस्यासिद्धत्वात्सान्तत्वेन **"सान्तमहतः संयोगस्य"** इत्यनेन दीर्घे **"नश्चापदान्तस्य झलि"** इत्यनेनानुस्वारे **"नुम्विसर्जनीय-शर्व्यवायेऽपि"** इत्यनेन षत्वे 'धनूंषि' इति रूपं साधु।

प्र० [ ३ ] अभूवम्।

'भू' धातो **"लुङ्"** इति सूत्रेण लुङि, अनुबन्धलोपे **"लुङ्-लङ्-लृङ्क्ष्वडुदात्तः"** इत्यडागमेऽनुबन्धलोपे, लकारस्थाने मिप्यनुबन्धलोपे **"तस्थस्थमिपां तान्तन्तामः"** इत्यनेन मिपोऽमादेशे **"च्लि लुङि"** इत्यनेन च्लौ **"च्लेः सिच्"** इति सूत्रेण सिच्यनुबन्धलोपे 'अ+भू+स्+अम्' इति स्थिते **"गाति-स्था-घु-पा-भूभ्यः सिचः परस्मैपदेषु"** इति सूत्रेण सिचो लुकि **"भुवो वुग्लुङ्लिटोः"** इति वुगागमेऽनुबन्धलोपे च कृते **'अभूवम्'** इति रूपं निष्पन्नम्।

अक्षैषीः।

'क्षि [1]क्षये' इत्यस्माद्धातो **"लुङ्"** इति सूत्रेण लुङि, अनुबन्धलोपे, लस्य स्थाने मध्यमपुरुषैकवचने सिपि, अनुबन्धलोपेऽडागमेऽनुबन्धलोपे च च्लौ, सिचि, अनुबन्धलोपे 'अ + क्षि + इ + स् + सि' इति स्थिते **"अस्तिसिचोऽपृक्ते"** इत्यनेनेडागमेऽनुबन्धलोपे **"सिचि वृद्धिः परस्मैपदेषु"** इत्यनेन वृद्धौ 'अ×क्षै×स्×ई×सि' इति जाते **"इतश्च"** इत्यनेनेकारस्य लोपे, षत्वे, सकारस्य रुत्वे विसर्गे च कृते **'अक्षैषीः'** इति रूपं साधु।

अशृणवम्।

'श्रु-[2]श्रवणे' इत्यस्माद्धातोः **"लङ्"** इति सूत्रेण लङि, अनुबन्धलोपे, लस्य स्थाने उत्तमपुरुषैकवचने 'मिप्'प्रत्ययेऽनुबन्धलोपे **"लुङ्-लङ्-लृङ्क्ष्वडुदात्तः"** इत्यनेनाडागमेऽनुबन्धलोपे 'अ×श्रु+मि'इति जाते **"कर्तरि शप्"**इत्यनेन शपं बाधित्वा **"श्रुवः शृ च"** इत्यनेन 'श्नु'-

**१ नाश होना। २ सुनना।**

प्रत्ययेऽनुबन्धलोपे, श्रुवः स्थाने 'शृ' इत्यादेशे च 'अ+शृ+नु×मि' इति भूते "तस्थस्थमिपां तान्तन्तामः" इत्यनेनामादेशे, "ऋवर्णान्नस्य णत्वं वाच्यम्" इति वार्तिकेन णत्वे, गुणेऽवादेशे च कृते 'अशृणवम्' इति रूपं साधु।

जगन्थ।

[1]'गम्'धातोः "लिट् च" इत्यनेन लिटयनुबन्धलोपे, लस्य स्थाने मध्यमपुरुषैकवचने सिपि "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इत्यनेन थलि 'गम्+थ' इति जाते "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्याससञ्ज्ञायां "हलादिः शेषः" इत्यनेनाभ्यासस्य लोपे 'ग+गम्+थ' इति स्थिते "कुहोश्चुः" इति चुत्वेन चवर्गादेशे 'ज+गम्+थ' इति जाते "ऋतो भारद्वाजस्य" इति नियमात्पाक्षिके इडभावे, अनुस्वारे परसवर्णे च सति 'जगन्थ' इति, इडागमे कृते तु 'जगमिथ' इति द्वे रूपे सम्पद्येते।

जघनिथ।

'हन 'हिंसागत्योः' इत्यस्माद्धातोर्लिटि, अनुबन्धलोपे, लकारस्थाने सिपि "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इत्यनेन सिपः स्थाने थलि, अनुबन्धलोपे 'हन्+थ' इति स्थिते "लिटि धातोरनभ्यासस्य" इति सूत्रेण द्वित्वे, "पूर्वोऽभ्यासः" इत्यभ्याससंज्ञायां "हलादिः शेषः" इति हलादेः शेषे लोपे च, चुत्वे, जश्त्वे लोपे च भारद्वाजनियमात्पाक्षिके इडागमे, ञ्णित्प्रत्ययपरत्वाभावान्नकारपरत्वभावाच्च "हो हन्तेर्ञ्णिन्नेषु" इति सूत्रस्याऽप्राप्त्या "अभ्यासाच्च" इति कुत्वे 'जघनिथ' इति, इडभावपक्षे 'जघन्थ' इति रूपद्वयं सिद्धम्।

दधाथ।

[2]धारणपोषणार्थकात्-'धा' धातोर्लिटि, लिट सिपि, सिपस्थलि, अनु-

१ जाना [ गमन ]। २ मारना, चलना।

बन्धलोपे, 'धा + थ' इति जाते "लिटि धातोरनभ्यासस्य" इति द्वित्वे, "पूर्वोऽभ्यासः" इत्यभ्यासत्वे, "ह्रस्वः" इत्यनेन ह्रस्वे, 'ध + धा + थ' इति भूते "अभ्यासे चर्च" इति जश्त्वेन दकारे, "ऋतो भारद्वाजस्य" इति वैकल्पिकेऽभावे 'दधाथ' इति, इटि कृते तु—आलोपे 'दधिथ' इति द्वे रूपे भूते।

## अनजानि।

[2]'अञ्ज'धातोर्लोटि, तत्स्थाने, 'मिप्'प्रत्यये "रुधादिभ्यः श्नम्" इति सूत्रेण श्नम्यनुबन्धलोपे "श्नसोरल्लोपः" इत्यनेनाकारस्य लोपे "लोटो लङ्वत्" इति लङ्कार्यातिदेशेन "तस्थस्थमिपां तान्तन्तामः" इत्यनेन मिपः प्राप्तममादेशं बाधित्वा "मेर्निः" इति सूत्रेण मेर्न्यादेशे इकारोच्चारणसामर्थ्यात्, नेरिकारस्येत्वाभावे "आडुत्तमस्य पिच्च" इत्यनेनाऽऽडागमेऽनुबन्धलोपे "निमित्तापाये नैमित्तिकस्याप्यपायः" इति न्यायेन नकारनिवृत्तावनुस्वारे परसवर्णे च कृते 'अनजानि' इति रूप सिद्धम्।

## अक्षत।

'क्षणु [3]हिंसायाम्' इत्यस्माद्धातोः "लुङ्" इति सूत्रेण लुङि, लुङः स्थाने 'त' प्रत्यये "लुङ्-लङ्-लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमेऽनुबन्धलोपे "च्लि लुङि" इत्यनेन च्लौ "च्लेः सिच्" इति सिचि "तनादिभ्यस्तथासोः" इति सूत्रेण सिचः पाक्षिके लुकि "अनुदात्तोपदेश-वनति-तनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इति सूत्रेण नकारलोपे 'अक्षत' इति रूपं सिद्धम्। लुगभावपक्षे—इटि, षत्वे ष्टुत्वे च कृते 'अक्षणिष्ट' इति द्वे रूपे साधुनी।

---

1 धारण करना, पालन-पोषण करना। 2 प्रकट करना, चिकना करना, सुन्दर होना, जाना। 3 मारना।

स्तभान ।

अस्य साधनप्रकारः सन् १६३० वर्षे ( ८ ) पृष्ठेऽवलोकनीयः ।

गृहाण ।

'ग्रह [1]उपादाने' इत्यस्माद्धातोः "लोट् च" इति सूत्रेण लोटि, लोटः स्थाने सिपि, "सेर्ह्यपिच्च" इत्यनेन सिपो हौ "क्र्यादिभ्यः श्ना" इति सूत्रेण 'श्ना'प्रत्यये "ग्रहि-ज्या-वयि-व्यधि-वष्टि-विचति-वृश्चति-पृच्छति भृज्जतीनां ङिति च" इत्यनेन सम्प्रसारणे, "सम्प्रसारणाच्च" इति पूर्वरूपे "हलः श्नः शानज्झौ" इत्यनेन श्नः शानजादेशेऽनुबन्धलोपे 'गृह्+आन+हि' इति स्थिते, नकारस्य णत्वे "अतो हेः" इत्यनेन हेर्लुकि 'गृहाण' इति रूपं साधु ।

प्र० [ ४ ] बुभूषति ।

असौ प्रयोगः सन् १६३० वर्षे ( ६ ) पृष्ठे द्रष्टव्यः ।

[2]प्रतिष्ठते ।

'प्रतिष्ठते' इत्यत्र "समवप्रविभ्यः स्थः" इति सूत्रेणाऽऽत्मनेपदम्, 'प्रतिष्ठते' इति रूपं निष्पन्नम् ।

[3]स्मरसि कृष्ण ! गोकुले वत्स्यामः ।

'स्मरसि'—इत्युपपदात् 'वस्'धातोर्भूतानद्यतने लङि प्राप्ते, त बाधित्वा "अभिज्ञावचने लृट्" इत्यनेन लृटि, लृटो मसि "स्यतासी लृलुटोः" इत्यनेन 'स्य'प्रत्यये "सः स्यार्धधातुके" इत्यनेन सस्य तकारे "अतो दीर्घो यञि" इत्यनेन दीर्घे, सकारस्य रुत्वे विसर्गे च कृते तत्सिद्धिः ।

—

१ लेना । २ ठहरता है । ३ हे कृष्ण ! स्मरण है ? कि [हम लोग] गोकुल में रहते थे ।

[1]आदृत्यः ।

आदर्तुं योग्यः इति विग्रहे 'आङ् उपसर्गक-'दृ' धातोः "एतिस्तुशास्वृदृजुषः क्यप्" इति सूत्रेण क्यप्यनुबन्धलोपे "ह्रस्वस्य पिति कृति तुक्" इत्यनेन तुगागमेऽनुबन्धलोपे, प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च सति 'आदृत्यः' इति रूपं साधु ।

भुग्नः ।

'भुग्नः' अस्योत्तरं सन् १६३१ वर्षे ( २४ ) पृष्ठे प्रेक्षणीयम् ।

[2]हित्वा ।

धानम् इति विग्रहे 'धा' धातोः "समानकर्तृकयोः पूर्वकाले" इत्यनेन 'क्त्वा'प्रत्ययेऽनुबन्धलोपे "दधातेर्हिः" इत्यनेन धा-स्थाने 'हि' इत्यादेशे, ततः प्रातिपदिकत्वे स्वादिकार्ये च कृते 'हित्वा' इति रूपं साधु।

परमराज्ञः ।

असौ प्रयोगः सन् १६३० वर्षे ( ११ ) पृष्ठे वर्तते ।

[3]वाहीकः ।

बहिर्भवः इति विग्रहे 'बहिष्'शब्दात् "ईकक् च" इत्यनेन 'ईकक्'-प्रत्यये, टिलोपे च "किति च" इत्यादेरचो वृद्धौ, ततः प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'बाहीकः' इति रूपं निष्पन्नम् ।

[4]मेधावी ।

मेधा अस्यास्तीति विग्रहे 'मेधा'शब्दात् "अस्मायामेधास्रजो विनिः" इत्यनेन 'विनि' प्रत्यये, "सौ च" इत्यनेन दीर्घे, सोर्लोपे, "नलोपः प्रातिपदिकान्तस्य" इति सूत्रेण नकारस्य लोपे 'मेधावी' इति रूपं सिद्धम् ।

१ आदरणीय, आदर सत्कार करने योग्य । २ धारण करके ।
३ बाहर होने वाला । ४ बुद्धिमान् ।

[1]अमुतः।

अमुष्मादिति विग्रहे 'अदस्'शब्दात् "पञ्चम्यास्तसिल्" इति सूत्रेण 'तसिल्'प्रत्ययेऽनुबन्धलोपे "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपो लुकि "त्यदादीनामः" इत्यत्वे "अतो गुणे" इत्यनेन पररूपे "अदसोऽसेर्दादु दो मः" इत्यनेन उत्वे, मत्वे, अव्ययत्वात्सोर्लुकि, रुत्वे विसर्गे च कृते 'अमुतः' इति रूपं निष्पन्नम्।

•०•

सन् १९३६

## प्रश्नाः

१ कृष्णर्द्धिः, उ उमेशः, किल्ँ ह्लादयति, शम्भू राजते। एतेषु सूत्रोल्लेखपूर्वकं सन्धिकार्याणि दर्शयत। २०

२ पूर्वस्मात्, प्रध्यम्, श्रीणाम्, कतरत्, राजभिः, युष्मभ्यम्, समीचः, दक्, तुदन्ती, उदेतोः। एतानि संक्षिप्तप्रक्रियया साधनीयानि। ३०

३ आतिष्म, अहृत, द्रासीष्ट, ससौ, लोभिता, कुर्वीत, गृहाण, अजीगणत्। एतानि रूपाणि सम्यक् साधनीयानि। ३२

४—जिघत्सति, सरोजम्, उप्त्रिमम्। एते प्रयोगाः साधनीयाः। ६

५ यावतोऽश्वात्पतति, यूपदारु, औत्सः, गोपी। एषु प्रयोगेषु विशेषकार्याणि दर्शनीयानि। ८

:०*०:

## उत्तराणि

[2]कृष्णर्द्धिः।

'कृष्ण + ऋद्धि' इत्यवस्थायां "स्थानेऽन्तरतमः" इति परिभाषा-

१ उससे। २ भगवान श्रीकृष्ण की समृद्धि।

वलेन कण्ठमूर्द्धस्थानिकयोः अकार–ऋकारयोः स्थाने "उरण् रपरः" इति सूत्रसहकारेण "आद्गुणः" इति कण्ठमूर्द्धस्थानिके गुणे अरि जलतुम्बिकान्यायेन रेफस्योर्द्ध्वगमने च कृते 'कृष्णर्द्धिः' इति रूपं निष्पन्नम् ।

[1]उ उमेशः ।

'उ + उमेशः' इत्यवस्थायां पूर्वस्योकारस्य "चादयोऽसत्त्वे" इत्यनेन निपातसञ्ज्ञायां "निपात एकाजनाङ्" इत्यनेन प्रगृह्यसञ्ज्ञायां कृतायां "प्लुतप्रगृह्या अचि नित्यम्" इत्यनेन प्रकृतिभावे च कृते 'उ उमेशः' इति रूपं सिद्धम् ।

[2]किल्ँ ह्लादयति ।

'किम् + ह्लादयति' इत्यवस्थाया "मोऽनुस्वारः" इत्यनेन प्राप्तमनुस्वारम्प्रबाध्य "यवलपरे यवला वा" इति वार्तिकेन लपरके हकारे परे मकारस्य सानुनासिके लकारे कृते 'किल्ँ ह्लादयति' इति । सानुनासिकलकाराभावपक्षे "मोऽनुस्वारः" इत्यनेन मकारस्यानुस्वारे 'किं ह्लादयति' इति रूपद्वयं साधु ।

[3]शम्भू राजते ।

'शम्भुस्+राजते' इति दशायां "ससजुषो रुः" इत्यनेन सकारस्य रुत्वेऽनुबन्धलोपे, 'शम्भुर्+ राजते' इति जाते "रोरि" इत्यनेन रेफस्य लोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इत्यनेन भकारोत्तरवर्त्तिन उकारस्य दीर्घे 'शम्भू राजते' इति रूपं साधु ।

प्र० [ २ ] पूर्वस्मात् ।

[4]'पूर्व' शब्दात्प्रातिपदिकसञ्ज्ञाया ततः सर्वनामसञ्ज्ञायाञ्च कृतायां प्रातिपदिकत्वात्पञ्चम्येकवचने ङसि विभक्तावनुबन्धलोपे "न विभक्तौ तुस्माः"

1 क्या यह महादेव हैं ? । २ क्या प्रसन्न करता है ? । ३ श्रीशम्भु भगवान् प्रकाशमान हैं । ४ पहला ।

इत्यनेन सकारस्येत्संज्ञानिषेधे "टाङसिङसामिनात्स्याः" इति सूत्रं बाधित्वा "ङसिङ्योः स्मात्स्मिनौ" इति स्मादादेशे प्राप्ते "पूर्वादिभ्यो नवभ्यो वा" इति सूत्रेण वैकल्पिके स्मादादेशे कृते 'पूर्व + स्मात्' इति स्थिते, "झलां जशोऽन्ते" इत्यनेन जश्त्वे "वाऽवसाने" इत्यनेन वैकल्पिके चर्त्वे 'पूर्वस्मात्' इति। चर्त्वाभावपक्षे–'पूर्वस्माद्' इति। स्मादादेशाभावपक्षे —'पूर्व + अस्' इत्यवस्थाया "टाङसिङसामिनात्स्याः" इत्यनेनाऽऽदादेशे, जश्त्वे, वैकल्पिके चर्त्वे च कृते 'पूर्वात्' इति। चर्त्वाभाव-पक्षे —'पूर्वाद्' इति चत्वारि रूपाणि भवन्ति।

## प्रध्यम्।

प्रातिपदिकत्वात् [1]'प्रधी'शब्दाद् द्वितीयैकवचने 'अम्' विभक्तौ समागतायां सत्याम्, 'प्रधी + अम्' इति स्थिते, "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इत्यनेनेयङादेशे प्राप्ते तम्प्रबाध्य "एरनेकाचोऽसंयोगपूर्वस्य" इति सूत्रेण यणि 'प्रध्यम्' इति रूपं साधु।

## श्रीणाम्।

[2]'श्री'शब्दस्य प्रातिपदिकसंज्ञायाम्, 'आम्' विभक्तौ "वाऽऽमि" इत्यनेन वैकल्पिके नदीसञ्ज्ञाया "ह्रस्वनद्यापो नुट्" इत्यनेन नुडागमेऽनुबन्धलोपे च "अट्कुप्वाङ्नुम्व्यवायेऽपि" इत्यनेन नकारस्य णत्वे 'श्रीणाम्' इति। नदीत्वाभावपक्षे–"अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इत्यनेनेयङि कृते 'श्रियाम्' इति द्वे रूपे सिद्धे।

## कतरत्।

[3]'कतर्'शब्दस्य प्रातिपदिकसंज्ञाया सौ विभक्तौ "स्वमोर्नपुंसकात्" इत्यनेन सोर्लुकि प्राप्ते, तं बाधित्वा "अतोऽम्" इत्यनेन सोरमादेशे प्राप्ते, तमपि प्रबाध्य "अद्ड्डतरादिभ्यः पञ्चभ्यः" इत्यनेन सोरद्डादेशेऽनु-

१ अच्छे ध्यान वाला। २ श्री शब्द का अर्थ है शोभा या लक्ष्मी। ३ दो में से कौन सा (कुछ)।

न्धलोपे च कृते 'कतर + अदड्' इति जाते "यचि भम्" इति सूत्रेण भसञ्ज्ञायां भत्वात् "टेः" इत्यनेन टिलोपे, टेर्लुभत्वात् "प्रथमयोः पूर्वसवर्णः" इत्यनेन पूर्वसवर्णदीर्घाभावे, ततो "वाऽवसाने" इति वैकल्पिके दकारस्य चर्त्वेन तकारे, 'कतरत्'–'कतरद्' इति रूपद्वयं सिद्धम् ।

राजभिः ।

प्रातिपदिकत्वात्–[1]'राजन्'शब्दाद्भिसि विभक्तौ समागतायां "नलोपः प्रातिपदिकान्तस्य" इत्यनेन नकारस्य लोपे, तस्याऽसिद्धत्वाददन्तत्वाभावेन "अतो भिस ऐस्" इत्यनेन भिस ऐसोऽभावे, सकारस्य रुत्वे विसर्गे च कृते 'राजभिः' इति रूपं निष्पन्नम् ।

युष्मभ्यम् ।

प्रातिपदिकसंज्ञकात्–[2]'युष्मद्'शब्दात् भ्यसि विभक्तौ "भ्यसोऽभ्यम्" इत्यनेन भ्यसोऽभ्यमादेशे "शेषे लोपः" इति सूत्रेण टिलोपे 'युष्मभ्यम्' इति रूपं निष्पन्नम् ।

समीचः ।

सम् पूर्वात्–[3]'अञ्चु'धातोः "ऋत्विग्-दधृक्-स्रग्-दिगुष्णिगञ्चु-युजि-क्रुञ्चां च" इति सूत्रेण 'क्विन्'प्रत्यये, तस्य सर्वापहारलोपे "समः समि" इत्यनेन समः सम्यादेशे, अकृतव्यूहपरिभाषया यणोऽभावे, कृदन्तत्वात् "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकत्वात् 'शस्'विभक्तावनुबन्धलोपे, "अचः" इत्यनेनाऽकारलोपे "चौ" इत्यनेन दीर्घे, सकारस्य रुत्वे विसर्गे च कृते 'समीचः' इति रूपं साधु ।

दृक् ।

प्रातिपदिकसञ्ज्ञक–[4]'दृश्'शब्दात्सौ विभक्तौ समागतायाम्, तस्य लोपे "व्रश्च-भ्रस्ज-सृज-मृज-यज-राज-भ्राज-च्छशां षः" इत्यनेन शकार-

१ राजा । २ तूँ । ३ समपूर्वक 'अञ्च' धातु का अर्थ है अच्छी प्रकार चलने वाला पूजा या करने वाला । ४ आँख ।

रस्य षत्वे, "झलां जशोऽन्ते" इति जश्त्वेन डकारे "त्यदादिषु दृशो-ऽनालोचने कञ्च" इति सूत्रेण दृशेः क्विनो विधानादत्र क्विनोऽभावेऽपि डकारस्य "क्विन्प्रत्ययस्य कुः" इति कुत्वेन गकारे "वाऽवसाने" इति वैकल्पिके चर्त्वेन गकारस्य ककारे 'दृक्' 'दृग्' इति द्वे रूपे सिद्धे।

तुदन्ती।

प्रातिपदिकसञ्ज्ञक [1]'तुदत्'शब्दात् 'औ'विभक्तौ 'तुदत्+औ' इति स्थितौ "नपुंसकाच्च" इति सूत्रेण औङः शी्यादेशेऽनुबन्धलोपे "आच्छीनद्योर्नुम्" इत्यनेन वैकल्पिके नुम्यनुबन्धलोपे च कृते 'तुदन्ती'-'तुदती' इति द्वे रूपे साधुनी।

[2]उदेतोः।

उत्पूर्वात् 'इण्'धातोः "भावलक्षणे स्थेण्-कृञ्-वदि-चरि-हुत-मि-जनिभ्यस्तोसुन्" इति सूत्रेण 'तोसुन्'प्रत्ययेऽनुबन्धलोपे, गुणे, कृदन्तत्वात् "कृत्तद्धितसमासाश्च" इति सूत्रेण प्रातिपदिकत्वात्सुबुत्पत्तौ "क्त्वा-तोसुन्-कसुनः" इति सूत्रेणाव्ययत्वात् "अव्ययादाप्सुपः" इत्यनेन सुपो लुकि, रुत्वे विसर्गे च कृते 'उदेतोः' इति रूपं साधु।

प्र० [ ३ ] आतिष्म।

'अत *सातत्यगमने' इत्यस्माद्धातोः "लुङ्" इति सूत्रेण लुङ्यनुबन्धलोपे, लस्य स्थाने, उत्तमपुरुषबहुवचने 'मस्'प्रत्यये "लुङ्-लङ्-लृङ्-क्ष्वडुदात्तः" इति सूत्रेणाडागमे प्राप्ते, तम्प्रबाध्य "आडजादीनाम्" इत्यनेनाऽऽडागमेऽनुबन्धलोपे "आटश्च" इत्यनेन वृद्धौ "च्लि लुङि" इत्यनेन च्लौ, "च्लेः सिच्" इत्यनेन सिच्यनुबन्धलोपे, सकारस्याऽऽर्ध-

* सततस्य भावः सातत्यम्, सातत्यञ्च तद्गमनञ्चेति सातत्यगमनं निरन्तरगमनं तस्मिन्नित्यर्थः।

१ दुःख देता हुआ या दुःखदायी ( कुल )। २ उदय होकर।

धातुकसंज्ञायाम्, 'आर्धधातुकस्येड्वलादेः" इत्यनेन इट्यनुबन्धलोपे "आदेशप्रत्यययोः" इत्यनेन सकारस्य षत्वे "नित्यं ङितः" इत्यनेन सकारस्य लोपे 'आतिष्म' इति रूपं सिद्धम् ।

अहत ।

'हन-[1]हिंसागत्योः' इत्यस्माद्धातोः "अनद्यतने लङ्" इत्यने लङ्य-नुबन्धलोपे, लकारस्थाने मध्यमपुरुषबहुवचने 'थ'प्रत्यये, अडागमेऽनुबन्ध-लोपे, "तस्थस्थमिपां तान्तन्तामः" इत्यनेन थकारस्थाने तादेशे, शपि "अदिप्रभृतिभ्यः शपः" इत्यनेन शपो लुकि 'अ+हन्+त' इति जाते, "अनुदात्तोपदेश-वनति-तनोत्यादीनामनुनासिक-लोपो झलि क्ङिति" इत्यनेन नकारस्य लोपे 'अहत' इति रूपं सिद्धम्।

दासीष्ट ।

दानार्थकात्-[2]'दा' धातोः "आशिषि लिङ्-लोटौ" इत्यनेन लिङि, अनुबन्धलोपे, लकारस्थाने 'त'-आदेशे 'दा+त' इति स्थितौ "लिङः सीयुट्" इति सूत्रेण सीयुटि, अनुबन्धलोपे "सुट् तिथोः" इति सुट्य-नुबन्धलोपे 'दा+सी+स्+त' इति जाते "आदेशप्रत्यययोः" इति सूत्रेण सुटः सकारस्य षत्वे "ष्टुना ष्टुः" इत्यनेन ष्टुत्वे 'दासीष्ट' इति रूपं साधु ।

ससौ ।

'षो-[3]ऽन्तकर्मणि' इत्यस्माद्धातोः "लिट् च" इति सूत्रेण लिटि, अनुबन्धलोपे, लकारस्थाने तिपि, "परस्मैपदानां णलतुसुस्थलथु-सणल्वमाः" इति सूत्रेण तिपः स्थाने णल्यनुबन्धलोपे "धात्वादेः षः सः" इति सत्वे "आदेच उपदेशेऽशिति" इत्यनेनाऽत्वे 'सा+अ' इति स्थितौ, द्वित्वेऽभ्यासह्रस्वे, "आत औ णलः" इत्यनेन णल औकारे, वृद्धौ 'ससौ' इति रूपं सिद्धम् ।

१ मारना, चलना । २ देना । ३ नाश करना ।

### लोभिता।

'लुभ 'विमोहने' इत्यस्माद्धातो "अनद्यतने लुट्" इत्यनेन लुटयनुबन्धलोपे, लकारस्थाने तिपि, "स्य-तासी लृ-लुटोः" इत्यनेन तासि प्रत्यये "तीष-सह-लुभ-रुष-रिषः" इत्यनेन वैकल्पिके इडागमेऽनुबन्धलोपे "पुगन्तलघूपधस्य च" इत्यनेन गुणे "लुटः प्रथमस्य डा-रौ-रसः" इत्यनेन तिपो डादेशे, डित्वाट्टिलोपे च कृते 'लोभिता' इति, इडभावपक्षे जश्त्वेन तकारस्य धकारे च सति 'लोब्धा' इति द्वे रूपे साधुनी।

### कुर्वीत।

करणार्थकात्-[2]'कृ' धातो "विधि-निमन्त्रणाऽऽमन्त्रणाऽधीष्ट-संप्रश्न-प्रार्थनेषु लिङ्" इति सूत्रेण लिङि, आत्मनेपदे लस्य स्थाने तादेशे शपं बाधित्वा "तनादिकृञ्भ्य उः" इत्युप्रत्यये, गुणे रपरे च "लिङः सीयुट्" इत्यनेन सीयुड्यनुबन्धलोपे, सकारलोपे, उत्वे, यणि च कृते "न भकुर्छुराम्" इत्यनेन निषेधाद्दीर्घाभावे 'कुर्वीत' इति मञ्जुलं रूपं साधु।

### गृहाण।

असौ प्रयोगः सन् १६३५ वर्षे ( ६५ ) पृष्ठे वर्तते।

### अजीगणत्।

अयमपि प्रयोगः सन् १६३३ वर्षे ( ४४ ) पृष्ठे विद्यते।

### प्र० [ ४ ] जिघत्सति।

अस्याप्युत्तर सन् १६३४ वर्षे ( ५५ ) पृष्ठे प्रेक्षणीयम्।

### [3]सरोजम्।

सरसि जातमिति विग्रहे सप्तम्यन्त-'सरस'शब्दोपपदात् 'जन्' धातोः "सप्तम्यां जनेर्डः" इति सूत्रेण 'ड' प्रत्यये, डित्वाट्टिलोपे "उपपदमतिङ्" इत्यनेन समासे समासत्वात् "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपो लुकि, सकारस्य रुत्वे, उत्वे, गुणे 'सरोजम्' इति रूपं सिद्धम्।

१ लुभाना। २ करना। ३ कमल।

[1] उप्त्रिमम् ।

वापेन निर्वृत्तमिति विग्रहे 'डु वप्'–बीजसन्ताने, इत्यस्माद्धातो- "ड्वितः क्त्रिः" इत्यनेन क्त्रौ, "क्त्रेर्मम्नित्यम्" इत्यनेन निर्वृत्तेऽर्थे मपि "वचि-स्वपि-यजादीनां किति" इति सम्प्रसारणे "सम्प्रसारणाच्च" इत्यनेन पररूपे, ततः प्रातिपदिकत्वात्स्वादिकार्ये च कृते 'उप्त्रिमम्' इति रूपं साधु ।

प्र० [ ५ ] [2]धावतोऽश्वात्पतति ।

'देवदत्तो धावतोऽश्वात्पतति' इत्यत्र देवदत्तविश्लेषावधिरश्व इति तस्य "ध्रुवमपायेऽपादानम्" इति सूत्रेणापादानसंज्ञायाम्, "अपादाने पञ्चमी" इति पञ्चम्यां कृतायां 'धावतोऽश्वात्पतति' इत्यस्य सिद्धिः ।

[3]यूपदारु ।

यूपाय दारु, इति लौकिकविग्रहे 'यूप + ङे + दारु + सु' इत्यलौकिक विग्रहे च "चतुर्थी तदर्थार्थ-बलि-हित-सुख-रक्षितैः" इति सूत्रेण समासे "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपो लुकि, ततः प्रातिपदिकत्वाद्विभक्तिकार्ये च कृते 'यूपदारु' इति रूपं सिद्धम् ।

[4]औत्सः ।

उत्सस्यापत्यमिति विग्रहे 'उत्स'शब्दात् "उत्सादिभ्योऽञ्" इति सूत्रेण 'अञ्'प्रत्ययेऽनुबन्धलोपे "तद्धितेष्वचामादेः" इत्यादेरचो वृद्धौ 'यस्येति च' इत्यलोपे, ततः "कृत्तद्धितसमासाश्च" इत्यनेन प्रातिपदिकत्वात्सौ, रुत्वे विसर्गे च कृते 'औत्सः' इति रूपं सिद्धम् ।

[5]गोपी ।

गोपस्य स्त्री,–इति विग्रहे 'गोप' शब्दात् "पुंयोगादाख्यायाम्" इत्यनेन 'ङीप्'प्रत्ययेऽनुबन्धलोपे "यचि भम्" इत्यनेन भत्वे, भत्वाद्

१ बोया हुआ (खेत) । २ दौड़ते हुए घोड़े से गिरता है । ३ यज्ञ स्तम्भ के लिये लकड़ी । ४ उत्सका लड़का । ५ गोपकी स्त्री ।

"यस्येति च" इत्यकारस्य लोपे, ततः प्रातिपदिकत्वात्सौ "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन सोर्लुकि 'गोपी' इति रूपं सिद्धम् ।

सन् १६३७

प्रश्नाः

सूचना　सर्वत्र सूत्रादीनां निर्देशः स्पष्टतया करणीयः ।

१　(क) सुद्ध्युपास्यः, गवाग्रम्, उत्थानम्, शिवोऽर्च्यः,–एते प्रयोगाः साध्यन्ताम् । १२

(ख) अहो ईशा इत्यत्र किं सन्धिकार्य्यं प्राप्तम् ? कथं वा तदभावः ? इति लेखनीयम् । ३

२　'युष्मद्' शब्दस्य सर्वासु विभक्तिषु, 'श्रु श्रवणे' इत्यस्य लिटि, 'शीङ् स्वप्ने' इत्यस्य च लुङि रूपाणि लेख्यानि । १०

३　रामाय, वहुश्रेयस्याः, सर्वस्यै, दध्ना, चतुर्णाम्, युष्माकम्, अमुष्यै, अहोभ्याम्, पिधानम्,–एषां मध्ये सप्त प्रयोगाः साधनीयाः । २१

४　अभूवन्, अचीकमत, विदांचकार, जहीहि, अपादि, दुधविथ, उपास्किरत्, तृणेढि, उपस्कुरुते, प्रमिणीते, अचूचुरत्,–एतेषु प्रयोगेषु अष्टौ साधनीया. । ३२

५　(क) बोभवांचकार, याच्ञा, अन्यथाकारम्, अर्द्धपिप्पली, अर्द्धर्चः, पारलौकिकम्, प्रथिमा, भूयिष्ठः, इन्द्राणी, एतेषां मध्ये षट् प्रयोगाः साध्यन्ताम् । १८

(ख) अकथितं चेति सूत्रस्योदाहरणानि प्रदर्शनीयानि । ४

उत्तराणि

सूचना　यद्यप्यत्र प्रश्ने क्वचित् सप्तानामष्टानां षण्णां वा प्रयोगाणामेवोत्तरं प्रश्नकर्त्तुरभीप्सितं स्यात्तथाप्यत्र मया भवतां सौकर्य्याय सर्वेषा-

प्रयोगाणामेवोत्तरं दत्तम् । भवद्भिस्तु प्रष्टुरानुकूल्यमेवाऽऽचरणीयम् । एवमग्रेऽपि सर्वत्रावधेयम् ।

प्र० [ १ ] ( क ) [1]सुद्ध्युपास्यः ।

'सुधी + उपास्यः' इत्यवस्थायां "तस्मिन्निति निर्दिष्टे पूर्वस्य" "स्थानेऽन्तरतमः" इति परिभाषाद्वयसहकारेण "इको यणचि" इति सूत्रेण धकारोत्तरवर्तीकारस्य तालुस्थानिकस्य स्थाने तालुस्थानिके यकारे 'सुध् + य् + उपास्यः' इति जाते, "अनचि च" इति सूत्रेण धकारस्य वैकल्पिके द्वित्वे, 'सुध् + ध् + य् + उपास्यः' इति स्थिते "झलां जश् झशि" इति सूत्रेण पूर्वधकारस्य दकारे "अदर्शनं लोपः" इति लोपसंज्ञायाम्, अवगतायाम्, "अलोऽन्त्यस्य" इत्येतत्सहकारेण "संयोगान्तस्य लोपः" इत्यनेन यकारस्य लोपे प्राप्ते "यणः प्रतिषेधो वाच्यः" इति वार्तिकेन तन्निषेधे, वर्णसंमेलने च कृते 'सुद्ध्युपास्यः' इति रूपं सिद्धम् । द्वित्वाभावपक्षे 'सुध्युपास्यः' इति च रूपद्वयं सिद्ध्यतीति बोध्यम् ।

[2]गवाग्रम् ।

'गो + अग्रम्' इत्यवस्थायाम्, "अलोऽन्त्यस्य" इति परिभाषाबलात् "अवङ् स्फोटायनस्य" इति सूत्रेण वैकल्पिके गकारोत्तरवर्तिन ओकारस्य स्थानेऽवङादेशे, ङकारस्येत्संज्ञाया लोपे च कृते 'गव×अग्रम्' इति स्थिते "अकः सवर्णे दीर्घः" इति सूत्रेण दीर्घे 'गवाग्रम्' इति सिद्धम् । अवङोऽभावपक्षे "सर्वत्र विभाषा गोः" इति सूत्रेण प्रकृतिभावे 'गो अग्रम्' इति । प्रकृतिभावाऽभावपक्षे—"एङः पदान्तादति" इत्यनेन पूर्वरूपे 'गोऽग्रम्' इति त्रीणि रूपाणि साधूनि ।

उत्थानम् ।

अस्योत्तरं सन् १६३१ वर्षे ( १४ ) पृष्ठेऽवलोकनीयम् ।

१ विद्वानों के उपासनीय [ भगवान् शङ्कर या राजा ] । २ गौ का अग्रभाग ।

[1]शिवोऽर्च्यः।

'शिवस्+अर्च्यः' इत्यवस्थायां "ससजुषो रुः" इति सूत्रेण सकारस्य रुत्वेऽनुबन्धलोपे, 'शिव+र्+अर्च्यः' इति स्थिते, "अतो रोरप्लुतादप्लुते" इति रोः स्थाने उत्वे, 'शिव+उ+अर्च्यः' इति भूते "आद्गुणः" इत्यनेन अकार उकारयोः स्थाने ओकारे गुणे, "एङः पदान्तादति" इत्यनेन पूर्वरूपे च कृते 'शिवोऽर्च्यः' इति रूपं साधूपपन्नम्।

( ख ) [2]अहो ईशाः।

'अहो+ईशाः' इत्यत्र "एचोऽयवायावः" इति सूत्रेणावादेशे प्राप्ते तम्प्रबाध्य "ओत्" इत्यनेन प्रगृह्यसञ्ज्ञायां "प्लुतप्रगृह्या अचि नित्यम्" इत्यनेन प्रकृतिभावे 'अहो ईशाः' इति रूपं निष्पन्नम्।

[ २ ] [3]'युष्मद्' शब्दस्य रूपाणि।

| एकवचनम् | द्विवचनम् | बहुवचनम्। | |
|---|---|---|---|
| त्वम् | युवाम् | यूयम् | प्रथमा। |
| त्वाम् | युवाम् | युष्मान् | द्वितीया। |
| त्वया | युवाभ्याम् | युष्माभिः | तृतीया। |
| तुभ्यम् | युवाभ्याम् | युष्मभ्यम् | चतुर्थी। |
| त्वत् | युवाभ्याम् | युष्मत् | पञ्चमी। |
| तव | युवयो | युष्माकम् | षष्ठी। |
| त्वयि | युवयोः | युष्मासु | सप्तमी। |

[4]'श्रु'धातोर्लिटि रूपाणि।

| एकवचनम् | द्विवचनम् | बहुवचनम्। | |
|---|---|---|---|
| शुश्राव | शुश्रुवतुः | शुश्रुवुः | प्रथमपुरुषः। |
| शुश्रोथ | शुश्रुवथुः | शुश्रुव | मध्यमपुरुषः। |
| शुश्राव, शुश्रव | शुश्रुव | शुश्रुम | उत्तमपुरुषः। |

१ भगवान् शिव जी पूजा करने योग्य हैं। २ अहो ये राजा हैं। ३ तूँ। ४ सुनना।

[1]'शीङ्' धातोर्लुङि रूपाणि ।

| एकवचनम् | द्विवचनम् | बहुवचनम् । | |
|---|---|---|---|
| अशयिष्ट | अशयिषाताम् | अशयिषत | प्रथमपुरुषः । |
| अशयिष्ठाः | अशयिषाथाम् | अशयिढ्वम् / अशयिध्वम् | मध्यमपुरुषः । |
| अशयिषि | अशयिष्वहि | अशयिष्महि | उत्तमपुरुषः । |

प्र० [ ३ ] रामाय ।

अस्य प्रयोगस्योत्तरं सन् १९३२ वर्षे ( २८ ) पृष्ठे प्रेक्षणीयम् ।

बहुश्रेयस्याः ।

प्रातिपदिकत्वात्—'बहुश्रेयसी'शब्दात्पञ्चम्येकवचने ङसि विभक्तावनुबन्धलोपे **"प्रथमलिङ्गग्रहणञ्च"** इति वार्तिक सहकारेण **'यू स्त्र्याख्यौ नदी"** इति सूत्रेण नदीसञ्ज्ञायाम्, **"आण्नद्याः"** इति सूत्रेणाऽऽडागमेऽनुबन्धलोपे **"आटश्च"** इत्यनेन वृद्धौ, **"इको यणचि"** इति सूत्रेण यणि **"ससजुषो रुः"** इत्यनेन रुत्वे, **"खरवसानयोर्विसर्जनीयः"** इति सूत्रेण विसर्गे च कृते **'बहुश्रेयस्याः'** इतिरूपं सिद्धम् ।

सर्वस्यै ।

प्रातिपदिकत्वात् [2]'सर्वा'शब्दात् 'ङे' विभक्तावनुबन्धलोपे **"याडापः"** इति सूत्रेण याडागमे प्राप्ते, तम्प्रबाध्य **"सर्वनाम्नः स्याड्ढ्रस्वश्च"** इत्यनेन स्याडागमेऽनुबन्धलोपे, आपो ह्रस्वे च, ततो **"वृद्धिरेचि"** इत्यनेन वृद्धौ **'सर्वस्यै'** इति रूप निष्पन्नम् ।

दध्ना ।

प्रयोगोऽयं सन् १९३० वर्षे ( ५ ) पृष्ठे द्रष्टव्यः ।

चतुर्णाम् ।

प्रातिपदिकसञ्ज्ञक [3]'चतुर्'शब्दात् 'आम्'विभक्तौ समागतायां सत्यां

१ सोना । २ सब । ३ चार ।

"षट्चतुर्भ्यश्च" इति सूत्रेण नुडागमेऽनुबन्धलोपे, 'चतुर्+न्+आम्' इति स्थिते, "रषाभ्यां नो णः समानपदे" इत्यनेन णत्वे "अचो रहाभ्यां द्वे" इति सूत्रेण वैकल्पिके णकारस्य द्वित्वे 'चतुर्ण्णाम्' इति, द्वित्वाभावपक्षे 'चतुर्णाम्' इति च रूपद्वयं निष्पन्नम् ।

युष्माकम् ।

अस्योत्तरं सन् १६३१ वर्षे (१७) पृष्ठे कृतं राजते ।

अमुष्यै ।

प्रातिपदिकसंज्ञक -[1]'अदस्'शब्दात् 'ङे'विभक्तावनुबन्धलोपे च 'अदस्+ए' इति जाते, "त्यदादीनामः" इत्यत्वे "अतो गुणे" इति सूत्रेण पररूपत्वे, "अजाद्यतष्टाप्" इति टाप्यनुबन्धलोपे, दीर्घे "सर्वनाम्नः स्याड्ढ्रस्वश्च" इत्यनेन स्याडागमेऽनुबन्धलोपे, आपो ह्रस्वे च, "वृद्धिरेचि" इति सूत्रेण वृद्धौ "अदसोऽसेर्दादु दो मः" इत्यनेन मुत्वे "आदेशप्रत्यययोः" इत्यनेन सकारस्य षत्वे 'अमुष्यै' इति रूपं सिद्धम् ।

अहोभ्याम् ।

प्रातिपदिकसञ्ज्ञक [2]'अहन्'शब्दाद् भ्यामि विभक्तौ "स्वादिष्वसर्वनामस्थाने" इत्यनेन पदत्वात् 'अहन्'-इत्यस्य नकारस्य रुत्वे "हशि च" इत्युत्वे "आद्गुणः" इत्यनेन गुणे च कृते 'अहोभ्याम्' इति रूप साधु ।

[3]पिधानम् ।

'अपिधानम्'-इत्यत्र "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इत्युक्त्वा "भागुरि'मतेऽकारस्य लोपे 'पिधानम्' इति । अकारलोपाभावे-'अपिधानम्' इति द्वे रूपे निष्पन्ने ।

१ यह । २ दिन । ३ ढकना ।

प्र० [ ४ ] अभूवन् ।

'भू'धातोर्लुङि, लुङः प्रथमपुरुषैकवचने "तिप्-तस्-झि-सिप्-थस्-थ-मिब्-वस्-मस्-ता-ऽऽतां-झ-थासा-थां-ध्वमिड्-वहि-महिङ्"इति सूत्रेण 'झि'प्रत्यये "लुङ्-लङ्-लृङ्क्ष्वडुदात्त." इत्यनेनाडागमेऽनुबन्धलोपे 'अ + भू + झि', इति जाते, "च्लि लुङि" इत्यनेन 'च्लि' प्रत्यये तस्य "च्लेः सिच्" इत्यनेन सिजादेशेऽनुबन्धलोपे 'अ + भू×स् + झि' इति स्थिते "गाति-स्था-घु-पा-भूभ्यः सिचः परस्मैपदेषु" इत्यनेन सकारस्य लोपे "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे प्राप्ते "भूसुवोस्तिङि" इत्यनेन गुणनिषेधे "झोऽन्तः" इत्यनेन, अन्तादेशे 'अ × भू + अन्ति' इति जाते "इतश्च" इत्यनेन, इकारस्य लोपे "भुवो वुग्लुङ्-लिटो." इत्यनेन वुगागमेऽनुबन्धलोपे "संयोगान्तस्य लोपः" इत्यनेन तकारस्य लोपे 'अभूवन्' इति रूपं निष्पन्नम् ।

अचीकमत ।

[1]कान्त्यर्थकात् 'कम्'धातोः "आयादय आर्धधातुके वा" इत्यनेन पाक्षिके णिङि' अनुबन्धलोपे "अत उपधायाः" इत्यनेन वृद्धौ 'कामि' इति स्थिते, तस्य "सनाद्यन्ता धातव." इति सूत्रेण धातुसंज्ञायां धातुत्वाल्लुङि, लुङस्तप्रत्यये "च्लि लुङि" इति सूत्रेण च्लौ, च्लेः सिजादेशं च बाधित्वा "णि-श्रि-द्रु-स्रुभ्यः कर्त्तरि चङ्" इत्यनेन च्लेश्चङि, अनुबन्धलोपे, 'अ + कामि + अ + त' इति स्थिते "णेरनिटि" इत्यनेन णेर्लोपे कृते 'अ + काम् + अ + त' इति जाते, "णौ चङ्युपधाया ह्रस्वः" इति सूत्रेणोपधाह्रस्वे 'अ + कम् + अ + त' इति भूते "चङि" इति सूत्रेण द्वित्वे, "पूर्वोऽभ्यास." इत्यनेनाभ्यासत्वे "हलादिः शेषः" इत्यनेन मकारस्य लोपे 'अ + क + कम् + अ + त' इति जाते "कुहोश्चुः" इत्यनेन चुत्वे "सन्वल्लघुनि चङ्परेऽनग्लोपे" इत्यनेन सन्वद्भावे

[1] इच्छा ।

"सन्यतः" इत्यभ्यासीकारस्य, इकारे 'अ+चि+कम्×अ×त' इति स्थिते, "दीर्घो लघोः" इति सूत्रेण दीर्घे च कृते 'अचीकमत' इति रूपं सिद्धम्।

### विदाञ्चकार ।

'विद—[1]ज्ञाने' इत्यस्माद्धातोः "लिट् च" इति सूत्रेण लिटि "उष-विद-जागृभ्योऽन्यतरस्याम्" इति सूत्रेणाऽऽमि, 'विद'—इत्यदन्तनिपातनात् "पुगन्तलघूपधस्य च" इत्यनेन गुणाभावे, लिटो लुकि, लिट्परकृञोऽनुप्रयोगे "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इत्यनेन तिपो णलि "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्यासत्वे "उरत्" इत्यत्वे, रपरे, हलादि शेषे "कुहोश्चुः" इत्यनेन चुत्वे, गुणे, रपरे, "अत उपधायाः" इत्यनेन वृद्धौ, अनुस्वारे, परसवर्णे च कृते 'विदाञ्चकार' इति रूपं सिद्धम्। आमोऽभावपक्षे-द्वित्वेऽभ्यासकार्ये, गुणे च कृते 'विवेद' इति च सिद्ध्यति ।

### जहीहि ।

त्यागार्थकात् [2]'हा' धातो "आशिषि लिङ्-लोटौ" इत्यनेन लोटि, लोटः सिपि "सेर्ह्यपिच्च" इत्यनेन सिपो हौ "जुहोत्यादिभ्यः श्लुः" इत्यनेन शपश्लौ "श्लौ" इति सूत्रेण द्वित्वे, ह्रस्वे, चुत्वे जश्त्वे "आ च हौ" इत्यनेनाऽऽत्वे 'जहाहि' इति प्रथम रूपम् । इत्वे-'जहिहि' इति द्वितीयम् । ईत्वे कृते 'जहीहि' इति त्रीणि रूपाणि साधूनि ।

### अपादि ।

'पद [3]गतौ' इत्यस्माद्धातोर्लुङ्यनुबन्धलोपे, लकारस्थाने 'त'प्रत्यये "च्लि लुङि" इत्यनेन च्लौ, "चिण् ते पदः" इत्यनेन च्लेश्चिणि "चिणो लुक्" इति सूत्रेण तकारस्य लुकि "अत उपधायाः" इत्यनेन वृद्धौ 'अपादि' इति रूपं निष्पन्नम् ।

१ जानना । २ त्याग या छोड़ना । ३ गमन, चलना ।

## दुधविथ ।

'धूञ् [1]कम्पने' इत्यस्माद्धातोर्लोटि, लोटः सिपि, सिपो थलि, "**लिटि धातोरनभ्यासस्य**" इत्यनेन द्वित्वे "**पूर्वोऽभ्यासः**" इत्यभ्यासत्वे "**ह्रस्वः**" इत्यनेनह्रस्वे, जश्त्वे, "**स्वरति-सूति-सूयति-धूञूदितो वा**" इति सूत्रेण वैकल्पिके इडागमेऽनुबन्धलोपे, गुणे, अवादेशे च कृते '**दुधविथ**' इति, पक्षे '**दुधोथ**' इति द्वे रूपे साधुनी।

## उपास्किरत् ।

'उप-पूर्वात्'कॄ [2]विक्षेपे' इत्यस्माद्धातोः "**अनद्यतने लङ्**" इत्यनेन लङि, अनुबन्धलोपे, लस्य स्थाने तिप्यनुबन्धलोपे "**लुङ्-लङ्-लृङ्क्ष्वडुदात्तः**" इत्यनेनाडागमेऽनुबन्धलोपे च "**तुदादिभ्यः शः**" इत्यनेन 'श'प्रत्ययेऽनुबन्धलोपे "**ॠत इद्धातोः**" इतीत्वे, रपरे "**सुट् कात्पूर्व इति वक्तव्यम्**" इति बलात् "**अडभ्यासव्यवायेऽपि**" इति ककारात्पूर्वं सुट्यनुबन्धलोपे, दीर्घे, "**इतश्च**" इतीकारलोपे '**उपास्किरत्**' इति रूपं साधु।

## तृणेढि ।

'तृह' हिंसि-[3]हिंसायाम्' इत्यस्माद्धातोः "**वर्त्तमाने लट्**" इति सूत्रेण लट्यनुबन्धलोपे, लस्य स्थाने तिपि "**रुधादिभ्यः श्नम्**" इत्यनेन श्नम्यनुबन्धलोपे "**ॠवर्णान्नस्य णत्वं वाच्यम्**" इति णत्वे "**तृणह इम्**" इति सूत्रेणेमागमेऽनुबन्धलोपे, गुणे, हकारस्य ढत्वे "**झषस्तथोर्धोऽधः**" इत्यनेन तकारस्य धकारे, ष्टुत्वे "**ढो ढे लोपः**" इति ढकारस्य लोपे कृते '**तृणेढि**' इति रूपं निष्पन्नम्।

## उपस्कुरुते ।

'उप' पूर्वात् 'कृ' धातोर्लट्यनुबन्धलोपे लकारस्थाने 'त'प्रत्यये "**टित**

1 काँपना। 2 फेंकना। 3 हिंसा करना या मारना।

आत्मनेपदानां टेरे" इति सूत्रेण एत्वे "तनादि कृञ्भ्य उः" इति सूत्रेण 'उ'प्रत्यये, गुणे, रपरे, ततः "अत उत्सार्वधातुके" इत्युत्वे "उपात्प्रतियत्न-वैकृत-वाक्याध्याहारेषु च" इति सूत्रेण सुट्यनुबन्ध-लोपे च कृते 'उपस्कुरुते' इति रूपं साधु।

## प्रमीणीते।

हिंसार्थकात् प्रपूर्वात् 'मी'धातोर्लटि, लटः स्थाने 'त' प्रत्यये, "टित आत्मनेपदानां टेरे" इति सूत्रेण टेरेत्वे "क्र्यादिभ्यः श्ना" इत्यनेन 'श्ना'प्रत्ययेऽनुबन्धलोपे "ई हल्यघोः" इत्यनेन ईत्वे "हिनु-मीना" इति सूत्रेण णत्वे च कृते 'प्रमीणीते' इति रूपं निष्पन्नम्।

## अचूचुरत्।

असौ प्रयोगः सन् १६३० वर्षे ( ८ ) पृष्ठेऽवलोकनीयः।

## प्र० [ ५ ] (क)[1]बोभवाञ्चकार।

'भू'धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति-सूत्रेण 'यङ्'प्रत्यये "यङोऽचि च" इत्यनेन यङो लुकि, ततः प्रत्यय-लक्षणेन यङन्तत्वाद् "सन्यङोः" इति सूत्रेण द्वित्वे, "गुणो यङ्लुकोः" इत्यनेनाऽभ्यासस्य गुणे "अभ्यासे चर्च" इति सूत्रेण भकारस्य बकारे "सनाद्यन्ता धातवः"-इत्यनेन धातुसञ्ज्ञाया धातुत्वात् "परोक्षे लिट्" इत्यनेन लिटि "कास्प्रत्ययादाममन्त्रे लिटि" इत्यामि "आमः" इति सूत्रेण लिटो लुकि "कृञ्चानुप्रयुज्यते लिटि" इत्यनेन लिट्परकृञोऽ-नुप्रयोगे,लिट् स्थाने तिपि, "परस्मैपदानां णलतुसुस्थलथुसणल्वमाः" इत्यनेन तिपो णल्यनुबन्धलोपे, द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्यासत्वे "उरत्" इत्यत्वे, रपरे, हलादेः शेषे 'कुहोश्चुः' इति चुत्वे, वृद्धौ, अनु-स्वारे परसवर्णादिकार्ये च कृते 'बोभवाञ्चकार'-इति रूपं निष्पन्नम्।

[1] बार बार किया।

[1]याच्ञा।

याचनमिति विग्रहे 'याच्'धातोः "यज-याच-यत-विच्छ-प्रच्छ-रक्षो नङ्" इति सूत्रेण 'नङ्'प्रत्ययेऽनुबन्धलोपे "स्तोः श्चुना श्चुः" इति सूत्रेण नस्य श्चुत्वेन ञकारे, टापि, प्रातिपदिकत्वात्स्वादिकार्ये च कृते 'याच्ञा' इति रूपं सिद्धम्।

[2]अन्यथाकारम्।

'अन्यथाकृत्वा ( भुङ्क्ते ) इति विग्रहे 'अन्यथा'-इत्यस्य योगे "अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्" इत्यनेन कृञो 'णमुल्'-प्रत्ययेऽनुबन्धलोपे, "अचो ञ्णिति" इत्यनेन वृद्धौ, स्वादिकार्ये च सति 'अन्यथाकारम्' इति रूपं साधु।

[3]अर्द्धपिप्पली।

अर्धं पिप्पल्याः, इति लौकिकविग्रहे 'अर्ध + सु + पिप्पली + ङस्' इत्यलौकिकविग्रहे "षष्ठी" इति सूत्रेण षष्ठीसमासं बाधित्वा "अर्धं नपुंसकम्" इति सूत्रेण समासे "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपो लुकि, समासत्वात्प्रातिपदिकत्वेन सौ "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति सूत्रेण परपदलिङ्गत्वात्सोर्लोपे 'अर्धपिप्पली' इति रूपं निष्पन्नम्।

[4]अर्द्धर्चः।

अर्धं ऋचः, इति लौकिकविग्रहे 'अर्ध + सु + ऋच + ङस्' इत्यलौकिकविग्रहे "ऋक्पूरब्धूः पथामानक्षे" इति सूत्रेण 'अ'प्रत्यये, गुणे, रपरे, सुपो लुकि "अर्धर्चाः पुंसि" इत्यनेन पुंस्त्वे, ततः प्रातिपदिकत्वात्स्वादिकार्ये च कृते 'अर्धर्चः' इति रूपं साधु।

[5]पारलौकिकम्।

परलोके भवम्-इति विग्रहे 'परलोक' शब्दात् "अध्यात्मादेष्ठञि-

१ माँगना। २ दूसरी तरह। ३ पिप्पली का अर्धभाग। ४ ऋचा का आधा भाग। ५ परलोक में होने वाला।

ध्यते" इति सूत्रेण 'ठञ्'प्रत्यये "ठस्येकः" इत्यनेनेकादेशे "अनुशतिकादीनां च" इति सूत्रेणोभयपदवृद्धौ, भत्वे अकारस्य लोपे, ततः प्रातिपदिकत्वादिकार्ये च सति 'पारलौकिकम्' इति रूपं मनोरमम् ।

[1]प्रथिमा ।

पृथोर्भावः इति विग्रहे 'पृथु'शब्दात् "पृथ्वादिभ्य इमनिज्वा" इत्यनेन 'इमनिच्' प्रत्ययेऽनुबन्धलोपे "पृथु-मृदु-भृश-कृश-दृढ-परिवृढानामेव रत्वम्" इति "र ऋतो हलादेर्लघोः" इति ऋकारस्य रादेशे, टिलोपे, ततः प्रातिपदिकत्वात्सौ, "सौ च" इत्यनेन दीर्घे, सुलोपे, नकारस्य च लोपे 'प्रथिमा' इति रूपं साधु । पक्षे "इगन्ता च लघुपूर्वात्" इत्यनेन 'अण्'प्रत्ययेऽनुबन्धलोपे, वृद्धौ, रपरे, "ओर्गुणः" इति गुणे, अवादेशे, ततः स्वादिकार्ये च कृते 'पार्थवम्' इत्यपि भवतीति बोध्यम् ।

[2]भूयिष्ठः ।

अयमनयोरतिशयेन बहुरिति विग्रहे 'बहु'शब्दात् "इष्ठस्य यिट् च" इत्यनेन इष्ठनि, इलोपे, यिडागमेऽनुबन्धलोपे च कृते "बहोर्लोपो भू च बहोः" इत्यनेन बहोः स्थाने 'भू'-इत्यादेशे 'भूयिष्ठः' इति रूपं निष्पन्नम् ।

[3]इन्द्राणी ।

इन्द्रस्य स्त्री इति विग्रहे 'इन्द्र'शब्दात् "इन्द्र-वरुण-भव-शर्व-रुद्र-मृड-हिमारण्य-यव-यवन-मातुलाचार्याणामानुक्" इति सूत्रेण ङीषि, आनुगागमे चाऽनुबन्धलोपे "अकः सवर्णे दीर्घः" इति दीर्घे, णत्वे, ततः प्रातिपदिकत्वात्सौ, सोर्लुकि च कृते 'इन्द्राणी' इति रूपं सिद्धम् ।

( ख ) "अकथितं च" इति सूत्रस्योदाहरणानि—

[4]गां दोग्धि पयः । [5]बलिं याचते वसुधाम् । [6]तण्डुलानोदनं पचति ।

१ मोटापन । २ बहुत । ३ इन्द्र की स्त्री । ४ गौ से ( गोप ) दूध दूहता है । ५ राजा बलि से पृथ्वी माँगता है । ६ चावलों से भात बनाता है ।

[1]गर्गान् शतं दण्डयति । [2]व्रजमवरुणद्धि गाम् । [3]माणवकं पन्थानं पृच्छति । [4]वृक्षमवचिनोति फलानि । [5]माणवकं धर्मं ब्रूते शास्ति वा । [6]शतं जयति देवदत्तम् । [7]सुधां क्षीरनिधिं मथ्नाति । [8]देवदत्तं शतं मुष्णाति । [9]ग्राममजां नयति, हरति, कर्षति, वहति वा-इत्यादि **"अकथितं च"** इति सूत्रस्योदाहरणानि ।

## सन् १९३८

## प्रश्नाः

१ गव्यूतिः, प्रार्णम्, सन्नच्युतः, शम्भू राजते- एषु प्रयोगेषु सशास्त्रं सन्धिकार्यं दर्शयत । १९

२ 'विष्णो इति' इति स्थिते कानि कानि कार्याणि भवन्ति कानि च रूपाणि ? स्पष्टं लिखत । २९

३ हरेः, प्रध्यि, स्त्रियम्, हे मधु, चतुर्णाम्, अमीभिः, अनया, दीव्यन्ति-एषु केचन सप्त प्रयोगाः साधनीयाः । २१

४ अभूवन्, भेजे, जघसिथ, जिह्रीयात्, स्यति, स्तार्यात्, औनत्, कुर्वन्ति, स्तरिषीष्ट, अजीगणत्-एषु कान्यपि सप्त रूपाणि साधनीयानि । २८

५ पिपठिषति, बोभूयात्, अस्तावि, पचेलिमाः, सुशर्मा,

१ गर्गों से सौ रुपया दण्ड लेता है । २ व्रज में गौ को रोकता है । ३ लड़के से रास्ता पूछता है । ४ वृक्ष से फल चुनता है । ५ बालक को धर्मोपदेश देता है । ६ देवदत्त से सौ रुपया जीतता है । ७ अमृत के लिये क्षीरसागर को मथता है । ८ देवदत्त से सौ ( रुपया ) चुराता है । ९ बकरी को गाँव में ले जाता है ।

हितम्, द्युतित्वा, सहरि, अहोरात्रः,—एषु केऽपि षट् प्रयोगाः, साधनीयाः । १८

६ श्वाफल्कः, पित्र्यम्, पटपटाकरोति, शकटी, अतिकेशी एषु कान्यपि चत्वारि रूपाणि साधयत । ८

७ 'सखि'शब्दस्य सर्वासु विभक्तिषु, 'गुप्' धातोर्लुटि, 'मीञ्' धातोर्लुङि—रूपाणि लेखनीयानि । १०

०

## उत्तराणि

### [ १ ] गव्यूतिः ।

'गो + यूतिः' इत्यवस्थायाम्, "अध्वपरिमाणे च" इति वार्तिकेन गकारोत्तरवर्तिन ओकारस्य स्थानेऽवादेशे कृते 'गव्यूतिः' इति रूपं सिद्धम् ।

### [2] प्रार्णम् ।

'प्र + ऋणम्' इत्यत्रस्थायाम्, "आद्गुणः" इति सूत्रेण गुणे प्राप्ते, त बाधित्वा "प्र-वत्सतर-कम्बल-वसनार्ण-दशानामृणे" इति वार्तिकेन पूर्वपरयोः स्थाने आकारवृद्धौ "उरण् रपरः" इति रपरत्वे च कृते 'प्रार्णम्' इति रूपं निष्पन्नम् ।

### [3] सन्नच्युतः ।

'सन् + अच्युतः' इत्यवस्थाया "ङमो ह्रस्वादचि ङमुण् नित्यम्" इति सूत्रेण नुडागमेऽनुबन्धलोपे नकारयोरकारेण सयोगे च कृते 'सन्नच्युतः' इति रूपं साधु ।

### शम्भू राजते ।

असौ प्रयोगः सन् १९३६ वर्षे ( ६८ ) पृष्ठे प्रेक्षणीय ।

१ दो कोस को कहते हैं । २ अधिक ऋण ( कर्जा ) । ३ अच्युत भगवान् नित्य है ।

प्र० [ २ ]

अस्योत्तरं सन् १९३१ वर्षे ( १४ ) पृष्ठे द्रष्टव्यम् ।

[ ३ ] हरेः ।

एष प्रयोगः सन् १९३३ वर्षे ( ४० ) पृष्ठेऽवलोकनीयः ।

प्रध्यि ।

'प्रधी'शब्दस्य प्रातिपदिकसंज्ञायां प्रातिपदिकत्वात्सप्तम्येकवचने 'ङि' विभक्तावनुबन्धलोपे 'प्रधी + इ' इति जाते, **"इको यणचि"** इति सूत्रेण यणं बाधित्वा **"अचि श्नुधातुभ्रुवां य्वोरियङुवङौ"** इति सूत्रेण इयङि प्राप्ते, तम्प्रबाध्य **"एरनेकाचोऽसंयोगपूर्वस्य"** इत्यनेन यणि **'प्रध्यि'** इति रूपं निष्पन्नम् ।

स्त्रियम् ।

प्रातिपदिकसञ्ज्ञक [१]'स्त्री'शब्दस्य द्वितीयैकवचने 'अम्'विभक्तौ **"वाऽम्शसोः"** इति सूत्रेण वैकल्पिके इयङादेशेऽनुबन्धलोपे **'स्त्रियम्'** इति, इयङभावपक्षे **"अमि पूर्वः"** इत्यनेन पूर्वरूपे **'स्त्रीम्'** इति रूपद्वयं सिद्धम् ।

हे मधु ।

प्रातिपदिकसञ्ज्ञक [२]'मधु'शब्दस्य सम्बोधनैकवचने सौ विभक्तौ **"स्वमोर्नपुंसकात्"** इति सूत्रेण सोर्लुकि **"न लुमताङ्गस्य"** इत्यस्यानित्यत्वात् **"प्रत्ययलोपे प्रत्ययलक्षणम्"** इति प्रत्ययलक्षणेन पाक्षिके **"ह्रस्वस्य गुणः"** इति सूत्रेण गुणे **'हे मधो !'** इति । गुणाभावपक्षे **'हे मधु'** इति रूपं सिद्धम् ।

चतुर्णाम् ।

अयं प्रयोगः सन् १९३७ वर्षे ( ७८ ) पृष्ठे प्रेक्षणीयः ।

१ स्त्री ( औरत ) । २ शहद, मदिरा ।

अमीभिः ।

प्रातिपदिकसञ्ज्ञक-'अदस्'शब्दात्तृतीयाबहुवचने भिसि विभक्तौ "त्यदादीनामः" इति सूत्रेणात्वे "अतो गुणे" इत्यनेन पररूपे "अतो भिस ऐस्" इति भिस प्राप्तमैसादेशं प्रबाध्य "नेदमदसोरकोः" इति निषेधे, "बहुवचने झल्येत्" इत्येत्वे "एत ईद्बहुवचने" इत्येकारस्य ईकारे, "अदसोऽसेर्दादु दो मः" इत्यनेन दकारस्य मत्वे, ततः सकारस्य रुत्वे विसर्गे च कृते 'अमीभिः' इति रूपं सिद्धम् ।

अनया ।

प्रातिपदिकसञ्ज्ञक-[1]'इदम्'शब्दस्य तृतीयैकवचने 'टा'विभक्तावनुबन्धलोपे "त्यदादीनामः" इत्यनेनात्वे "अतो गुणे" इत्यनेन पररूपत्वे "अजाद्यतष्टाप्" इत्यनेन टापि, दीर्घे "आङि चाऽपः" इत्येत्वे "एचोऽयवायावः" इत्यनेनायादेशे, "अनाप्यकः" इति सूत्रेण इद अनादेशे च कृते "अनया" इति रूप सिद्धम् ।

दीव्यन्ति ।

प्रातिपदिकसञ्ज्ञकात्-[2]'दीव्यत्'शब्दाज्जसि विभक्तौ समागतायां सत्यां "जश्शसोः शिः" इति सूत्रेण जसः श्यादेशेऽनुबन्धलोपे "नपुंसकस्य झलचः" इति सूत्रेण नुम्यनुबन्धलोपे च 'दीव्यन्ति' इति रूपं साधु ।

प्र० [ ४ ] अभूवन् ।

अस्योत्तरं सन् १६३७ वर्षे ( ८० ) पृष्ठे द्रष्टव्यम् ।

भेजे ।

'भज-सेवायाम्' इत्यस्माद्धातो "परोक्षे लिट्" इति लिटयनुबन्धलोपे, तकारस्थाने "तिप्-तस्-झि-सिप्-थस्-थ-मिब्-वस्-मस्-ता-ऽऽतां-झ-थासाथां-ध्वमिड्-वहि-महिङ्" इति सूत्रेण 'त'

[1] यह । [2] खेलता हुआ ।

प्रत्यये "लिटस्तझयोरेशिरेच्" इति सूत्रेणैश्यनुबन्धलोपे "लिटि धातोरनभ्यासस्य" इत्यनेन द्वित्वेऽभ्यासकार्ये च कृते, ततः "अत एकहल्मध्येऽनादेशादेर्लिटि" इति सूत्रेण एत्वेऽभ्यासस्य लोपे च कृते 'भेजे' इति रूपं साधु।

जघसिथ।

भक्षणार्थकात्-'अद' धातोः "परोक्षे लिट्" इत्यनेन लिटि "लिट्यन्यतरस्याम्" इत्यनेन वैकल्पिके घस्लादेशेऽनुबन्धलोपे लिटः सिपि, सिपस्थल्यनुबन्धलोपे द्वित्वे, हलादेः शेषे, चुत्व, जश्त्वे, तासि घसोऽभावात् थलि क्रादिनियमान्नित्ये इटयनुबन्धलोपे 'जघसिथ' इति रूपं सिद्धम्।

घस्लादेशाभावपक्षे-द्वित्वे "अत आदेः" इति सूत्रेण दीर्घे, "अकः सवर्णे दीर्घः" इत्यनेन च सवर्णदीर्घे, तत "इडत्यर्तिव्ययतीनाम्" इत्यनेनेडागमेऽनुबन्धलोपे 'आदिथ' इति द्वे रूपे साधुनी।

जिह्रीयात्।

'ह्री-लज्जायाम्' इत्यस्माद्धातोर्विधिर्लिङस्तिप इकारलोपे, शपः श्लौ, "श्लौ" इति सूत्रेण द्वित्वेऽभ्यासत्वे, ह्रस्वे, "कुहोश्चुः" इत्यनेन हकारस्य झकारे "अभ्यासे चर्च" इति झकारस्य जकारे, यासुटि, "लिङः सलोपोऽनन्त्यस्य" इत्यनेन सकारस्य च लोपे कृते 'जिह्रीयात्' इति रूपं साधु।

स्यति।

'षो-ऽन्तकर्मणि' इत्यस्माद्धातोर्लटि, लटस्तिप्यनुबन्धलोपे, शपं बाधित्वा "दिवादिभ्यः श्यन्" इत्यनेन 'श्यन्'प्रत्ययेऽनुबन्धलोपे "धात्वादेः षः सः" इत्यनेन सत्वे "ओतः श्यनि" इति सूत्रेण ओकारस्य लोपे 'स्यति' इति रूपं सिद्धम्।

स्तर्यात्।

'स्तृञ्-[1]आच्छादने' इत्यस्माद्धातोराशीर्लिङि, लिङः स्थाने तिप्यनु-

[1] ढकना।

न्धलोपे, "इतश्च" इत्यनेन इकारलोपे, "किदाशिषि" इति सूत्रेण यासुडागमेऽनुबन्धलोपे, "लिङाशिषि" इति तस्याऽऽर्धधातुकत्वे कित्वे च "स्कोः संयोगाद्योरन्ते च" इत्यनेन सकारलोपे, यासुटः कित्वाद्गुणाभावे प्राप्ते, परञ्च "गुणोऽर्त्तिसंयोगाद्योः" इत्यनेन गुणे रपरे च सति 'स्वर्यात्' इति रूपं सिद्धम् ।

औनत् ।

[1]क्लेदनार्थकात् 'उन्द'धातोः "अनद्यतने लङ्" इत्यनेन लङि, अनुबन्धलोपे, लस्य स्थाने तिप्यनुबन्धलोपे, "रुधादिभ्यः श्नम्" इत्यनेन श्नम्यनुबन्धलोपे "इतश्च" इत्यनेन इकारस्य लोपे "आडजादीनाम्" इति सूत्रेणाऽऽडागमेऽनुबन्धलोपे "आटश्च" इति वृद्धौ "श्नान्नलोपः" इति नकारलोपे "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन तकारस्य लोपे, वैकल्पिके दस्य चर्त्वे च कृते 'औनत्'–'औनद्' इति रूपद्वयं सिद्धम् ।

कुर्वन्ति ।

'कृ'धातोर्लटि, लटो झौ, शपं बाधित्वा "तनादि कृञ्भ्य उः" इत्युप्रत्यये, गुणे, रपरे "अत उत्सार्वधातुके" इत्युत्वे "झोऽन्तः" इति सूत्रेण झस्यान्तादेशे, यणि, "हलि च" इति प्राप्तं दीर्घे "न भकुर्छुराम्" इति निषेधे 'कुर्वन्ति' इति रूपं सिद्धम् ।

स्तरिषीष्ट ।

आच्छादनार्थकात् 'स्तॄ'धातोराशीर्लिङि, लिङः 'त'प्रत्यये "लिङः सीयुट्" इति सूत्रेण यकारस्य लोपे "सुट् तिथोः" इत्यनेन सुटयनुबन्धलोपे "लिङ् सिचोरात्मनेपदेषु" इत्यनेन वैकल्पिके इडागमेऽनुबन्ध लोपे "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे रपरे "वृतो वा" इत्यनेन दीर्घे प्राप्ते "न लिङि" इत्यनेन तन्निषेधे "आदेशप्रत्यययोः"-

१ भिगोना ।

इति षत्वे "ष्टुना ष्टुः" इति ष्टुत्वे 'स्तरिषीष्ट' इति, इडभावपक्षे "उश्च" इति किरवाद्गुणाभावे, इत्वे, रपरे, "हलि च" इत्यनेन दीर्घे 'स्तीर्षीष्ट' इति द्वे रूपे साधुनी।

अजीगणत्।

अस्योत्तरं सन् १६३३ वर्षे ( ४४ ) पृष्ठे प्रेक्षणीयम्।

प्र० [ ५ ] पिपठिषति।

अस्याप्युत्तरं सन् १६३२ वर्षे ( ३४ ) पृष्ठे द्रष्टव्यम्।

बोभूयात्।

'भू'धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति सूत्रेण 'यङ्'प्रत्यये "यङोऽचि च" इत्यनेन यङो लुकि, प्रत्यय लक्षणेन यङन्तत्वाद् "सन्यङोः" इति द्वित्वे, अभ्यासस्य ह्रस्वे, भस्य जश्त्वेन बत्वे "गुणो यङ्लुकोः" इत्यनेनाभ्यासस्य गुणे 'बोभुय' इत्यस्य "सनाद्यन्ता धातवः" इति धातुसंज्ञायां धातुत्वाद्विधिलिङि, तस्य स्थाने तिप्यनुबन्धलोपे, इकारलोपे, यासुटि, सकारलोपे च कृते 'बोभूयात्' इति रूपं सम्पन्नम्।

[1]अस्तावि।

'स्तु'—इत्यस्माद्धातोर्भावे "भावकर्मणोः" इत्यात्मनेपदत्वाल्लुङि, लुङस्तप्रत्ययेऽटि, च्लौ "चिण् भावकर्मणोः" इति सूत्रेण च्लेश्चिणि, वृद्धौ, आवादेशे, "चिणो लुक्" इत्यनेन तस्य लुकि 'अस्तावि' इति रूपं निष्पन्नम्।

[2]पचेलिमाः।

'पक्तुमर्हाः' इति विग्रहे 'पच्'धातोः "केलिमर उपसङ्ख्यानम्" इति कर्मणि 'केलिमर' प्रत्ययेऽनुबन्धलोपे, ततः प्रातिपदिकत्वादिकार्ये च कृते 'पचेलिमाः' इति रूपं सिद्धम्।

१ स्तुति किया हुआ। २ पकाने योग्य।

¹सुशर्मा ।

सुष्ठु शृणातीति विग्रहे सु—पूर्वात् 'शॄ' हिंसायाम्, इत्यस्माद्धातोः "अन्येभ्योऽपि दृश्यन्ते" इत्यनेन 'मनिन्' प्रत्ययेऽनुबन्धलोपे "आर्धधातुकं शेषः" इत्यार्धधातुकसंज्ञायां 'सार्वधातुकार्धधातुकयोः" इत्यनेन गुणे "उरण् रपरः" इत्यनेन रपरे "आर्धधातुकस्येड्वलादेः" इति सूत्रेण प्राप्तमिडागमं "नेड्वशिकृति" इत्यनेन निषेधे, ततः 'सुशर्मन्' इत्यस्य प्रातिपदिकत्वात्सौ "सर्वनामस्थाने चाऽसम्बुद्धौ" इति दीर्घे "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इति सुलोपे "नलोपः प्रातिपदिकान्तस्य" इति नकारलोपे 'सुशर्मा' इति रूपं साधु ।

²हितम् ।

अधायि इति विग्रहे 'धा' धातोः "निष्ठा" इत्यनेन 'क्त' प्रत्ययेऽनुबन्धलोपे "दधातेर्हिः" इति सूत्रेण 'हि' इत्यादेशे, प्रातिपदिकत्वात्सौ, अमि, पूर्वरूपे च कृते 'हितम्' इति रूप सिद्धम् ।

द्युतित्वा ।

द्योतनम् इति विग्रहे 'द्युत' धातो 'क्त्वा' प्रत्यये, इडागमेऽनुबन्धलोपे च "न क्त्वा सेट्" इत्यनेन कित्त्वप्रतिषेधं बाधित्वा "रलो व्युपधाद्धलादेः संश्च" इति सूत्रेण पाक्षिककित्त्वाद्गुणनिषेधे 'द्युतित्वा' इति । पक्षे गुणे कृते 'द्योतित्वा' इति रूपद्वय सम्पन्नम् ।

³सहरि ।

हरेः सादृश्यम्, इति लौकिकविग्रहे 'हरि + ङस् + सह' इत्यलौकिकविग्रहे "अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावा-ऽत्यया-ऽसम्प्रति-शब्दप्रादुर्भाव-पश्चाद्यथा-ऽऽनुपूर्व्य-यौगपद्य-सादृश्य-

१ सुन्दर काटने वाला । २ हित (कल्याण) किया हुआ ।
३ हरि का सादृश्य ।

सम्पत्ति-साकल्या-ऽन्तवचनेषु" इति सूत्रेण समासत्वात्प्रातिपदिकत्वेन "सुपो धातुप्रातिपदिकयोः" इत्यनेन सुपो लुकि "प्रथमानिर्दिष्टं समास उपसर्जनम्" इति सूत्रेण 'सह'—इत्यस्योपसर्जनत्वात् "उपसर्जनं पूर्वम्" इति पूर्वप्रयोगे "अव्ययीभावे चाकाले" इति 'सह' इत्यस्य स्थाने सादेशे एकदेशविकृतस्यानन्यत्वात्प्रातिपदिकत्वेन सौ "अव्ययादाप्सुपः" इत्यनेन सोर्लुकि 'सहरि' इति रूपं सम्पन्नम् ।

[1]अहोरात्रः ।

अहश्च रात्रिश्च, इति लौकिकविग्रहे 'अहन् + सु + रात्रि + सु' इत्यलौकिकविग्रहे द्वन्द्वसमासे "अहः सर्वैकदेश-संख्यात-पुण्याच्च रात्रेः" इति सूत्रेण 'अच्'-प्रत्ययेऽनुबन्धलोपे, सुपो लुकि 'अहन् + रात्रि + अ' इति स्थिते, "यचि भम्" इत्यनेन भत्वे "यस्येति च" इतीकारलोपे "रूप-रात्रि-रथ-तरेषु रुत्वं वाच्यम्" इति रुत्वे "हशि च" इत्युत्वे "आद्गुणः" इति गुणे "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति स्त्रीत्वे प्राप्ते, तम्प्रबाध्य "रात्राह्नाहाः पुंसि" इति पुंस्त्वे, ततः प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च सति 'अहोरात्रः' इति रूपं साधु ।

प्र० [ ६ ] [2]श्वाफल्कः ।

श्वफल्कस्यापत्यम्—इति विग्रहे 'श्वफल्क'शब्दात् "ऋष्यन्धक-वृष्णि-कुरुभ्यश्च" इति सूत्रेण 'अण्'प्रत्ययेऽनुबन्धलोपे "तद्धितेष्वचामादेः" इत्यनेनाऽऽदिवृद्धौ, "यचि भम्" इति भत्वे "यस्येति च" इत्यकारलोपे, ततः "कृत्तद्धितसमासाश्च" इति सूत्रेण प्रातिपदिकसंज्ञायां सौ रुत्वे विसर्गे च कृते 'श्वाफल्कः' इति रूपं सिद्धम् ।

[3]पित्र्यम् ।

पितरो देवता अस्येति विग्रहे 'पितृ'शब्दात् 'वाय्वृतुपित्रुषसो यत्"

१ दिन—रात । २ श्वफल्क का लड़का ( अक्रूर ) । ३ पितृदेवताक ।

इति सूत्रेण 'यत्'प्रत्ययेऽनुबन्धलोपे **"रीङ् ऋतः"** इति ऋकारस्य रीङा-देशे, भत्वे, **"यस्येति च"** इतीकारलोपे, ततः प्रातिपदिकत्वात्स्वादिकार्ये च कृते **'पित्र्यम्'** इति रूपं साधु ।

[1] पटपटा करोति ।

पटत् पटदिति सम्पद्यते, तं करोतीति विग्रहे 'पटत्' शब्दस्य **"डाचि विवक्षिते द्वे बहुलम्"** इति द्वित्वे, ततः **"अव्यक्तानुकरणाद्द्व्यज-वरार्धादनितौ डाच्"** इत्यनेन डाचि, टिलोपे **"तस्य परमाम्रेडितम्"** इत्याम्रेडितसंज्ञायां **"नित्यमाम्रेडिते डाचीति वक्तव्यम्"** इति तकार-पकारयोः पकारे कृते **'पटपटा करोति'** इत्यस्य सिद्धिः ।

[2] शकटी ।

'शकटी' इत्यत्र 'शकटि'शब्दात् **"सर्वतोऽक्तिन्नर्थादित्येके"** इति सहकारेण **"कृदिकारादक्तिनः"** इति वार्तिकेन वैकल्पिके 'ङीप्'प्रत्ययेऽनुबन्ध लोपे **"यचि भम्"** इति सूत्रेण भसंज्ञायां **"यस्येति च"** इतीकारस्य लोपे, ततः प्रातिपदिकत्वात्सौ हल्ङ्यादिलोपे च कृते **'शकटी'** इति । ङीपोऽभावपक्षे—सौ रुत्वे विसर्गे च सति **'शकटिः'** इति द्वे रूपे साधुनी ।

[3] अतिकेशी ।

केशानतिक्रान्ता इति लौकिकविग्रहे 'केश + शस् + अति' इत्यलौकिकविग्रहे **"अत्यादयः क्रान्ताद्यर्थे द्वितीयया"** इति सूत्रेण समासे, समासत्वात्प्रातिपदिकत्वेन **"सुपो धातुप्रातिपदिकयोः"** इत्यनेन सुपो लुकि, ततः 'अतिकेश'शब्दात् **"स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्"** इति सूत्रेण वैकल्पिके 'ङीप्'प्रत्यये, ङकारपकारयोर्लोपे **"यचि भम्"** इति भत्वे, **"यस्येति च"** इत्यलोपे, ततः पुनः प्रातिपदिकत्वात्सौ, सोर्लुकि **'अतिकेशी'** इति, ङीपोऽभावपक्षे—टापि, सवर्णदीर्घे च कृते **'अतिकेशा'** इति रूपद्वयं सिद्धम् ।

१ पटत् ऐसा अव्यक्त ( जो सुनने में न मालूम पड़े ऐसा ) शब्द करता है । २ गाड़ी । ३ बहुत केशवाली स्त्री ।

## प्र० ( ७ )

### [१]'सखि'शब्दस्य रूपाणि ।

| एकवचनम् | द्विवचनम् | बहुवचनम् | |
|---|---|---|---|
| सखा | सखायौ | सखायः | प्रथमा । |
| सखायम् | सखायौ | सखीन् | द्वितीया । |
| सख्या | सखिभ्याम् | सखिभिः | तृतीया । |
| सख्ये | सखिभ्याम् | सखिभ्यः | चतुर्थी । |
| सख्युः | सखिभ्याम् | सखिभ्यः | पञ्चमी । |
| सख्युः | सख्योः | सखीनाम् | षष्ठी । |
| सख्यौ | सख्योः | सखिषु | सप्तमी । |
| हे सखे ! | हे सखायौ ! | हे सखायः ! | सम्बोधनम् । |

### [२]'गुप्धातोर्लुटि रूपाणि ।

| एकवचनम् | द्विवचनम् | बहुवचनम् । | |
|---|---|---|---|
| गोपायिता | गोपायितारौ | गोपायितारः | |
| गोपिता | गोपितारौ | गोपितारः | प्रथमपुरुषः |
| गोप्ता | गोप्तारौ | गोप्तारः | |
| गोपायितासि | गोपायितास्थः | गोपायितास्थ | |
| गोपितासि | गोपितास्थः | गोपितास्थ | मध्यमपुरुषः |
| गोप्तासि | गोप्तास्थः | गोप्तास्थ | |
| गोपायितास्मि | गोपायितास्वः | गोपायितास्मः | |
| गोपितास्मि | गोपितास्वः | गोपितास्मः | उत्तमपुरुषः |
| गोप्तास्मि | गोप्तास्वः | गोप्तास्मः | |

१ मित्र । २ रक्षा करना ।

१'मीञ्'धातोर्लुङि रूपाणि ।

परस्मैपदे—

| एकवचनम् | द्विवचनम् | बहुवचनम् । | |
|---|---|---|---|
| अमासीत् | अमासिष्टाम् | अमासिषु: | प्रथमपुरुष: । |
| अमासीः | अमासिष्टम् | अमासिष्ट | मध्यमपुरुषः । |
| अमासिषम् | अमासिष्व | अमासिष्म | उत्तमपुरुष: । |

आत्मनेपदे

| | | | |
|---|---|---|---|
| अमास्त | अमासाताम् | अमासत | प्रथमपुरुषः । |
| अमास्था: | अमासाथाम् | अमाध्वम् | मध्यमपुरुष । |
| अमासि | अमास्वहि | अमास्महि | उत्तमपुरुषः । |

सन् १९३९

## प्रश्नाः

१ क, छ, ड, ध, म, श, इत्येतेषां वर्णानां कानि बाह्यप्रयत्नानि । ६
२ शिवेहि, अमुकेऽत्र, सँस्कर्ता, मनोरथः, एतेषां प्रयोगाणां सशास्त्रं सिद्धिं प्रदर्शयत । १६

अथवा

गो + अग्रम्, त्वं + करोषि, सन् + शम्भुः नॄन् + पाहि, इत्यस्यां स्थितौ कानि रूपाणि भवन्ति, कथञ्च तत्सिद्धिरिति ससूत्रं प्रतिपादयत ।

३ रामाय स्त्रियै विश्वौहः, बभूव, मिमीते, अह्निः, ।
एषु प्रयोगेषु ससूत्रां सिद्धिप्रकारं लिखत । २४
४ अबोभोत्, अत्नासि, अवावा, शुभंयुः, मानुषी, विप्राय गां ददाति । एतान् प्रयोगान् सम्यक् प्रसाधयत । २४

१ मारना ।

५ अन्तादिवच्च, प्रथमलिङ्गग्रहणं च, नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे, आद्यन्तवदेकस्मिन् एतेषां शास्त्राणां सोदाहरणमर्थं ब्रूत । १०

अथवा

नेर्गद०, पाघ्राध्मा०, दाम्नीश०, अव्ययं विभक्ति०, पङ्क्तिविंशति०, एतानि केवलानि सूत्राणि सम्पूर्णानि शुद्धानि विलिखत ।

६ समासः कतिविधः । कानि च तदुदाहरणानीति स्पष्टं प्रतिपादयत । १०

७ त्रिषु लिङ्गेषु द्वि, त्रि, चतुर्, शब्देष्वन्यतमस्य, युष्मदस्मदोरन्यतरस्य च सर्वासु विभक्तिषु रूपाणि विलिख्य, लिह् आस्वादने, ब्रूञ् व्यक्तायां वाचि धात्वोरनयोरन्यतरस्य सर्वलकारेषु प्रथमं रूपञ्च स्पष्टं लिखत । १०

## उत्तराणि

प्र० [ १ ]

क इत्यस्य विवारो श्वासोऽघोषोऽल्पप्राणप्रयत्नो भवति ।
छ „ विवारो श्वासोऽघोषो महाप्राणप्रयत्नोऽस्ति ।
ड „ सवारो नादो घोषोऽल्पप्राणप्रयत्नो भवति ।
ध „ „ „ „ महाप्राणप्रयत्नोऽस्ति ।
म „ „ „ „ अल्पप्राणप्रयत्नो विद्यते ।
श „ विवारो श्वासोऽघोषो महाप्राणप्रयत्नो भवति ।

प्र० [ २ ] शिवेहि ।

अस्योत्तरं ( २ ) द्वितीयपृष्ठे द्रष्टव्यम् ।

¹अमुकेऽत्र ।

*'अमुके+अत्र' इत्यवस्थायाम्, "एङः पदान्तादति" इति सूत्रेण पूर्वरूपे कृते 'अमुकेऽत्र' इति रूपं सिद्धम् ।

नन्वत्र "अदसो मात्" इति सूत्रे माद्ग्रहणं किमर्थमिति प्रश्नः । उत्तरयति माद्ग्रहणाभावे "ईदूदेद्द्विवचनं प्रगृह्यम्" इति सूत्रात्-एदित्यस्याप्यनुवृत्त्या 'अदस्'शब्दात्परस्य एकारस्यापि प्रगृह्यसंज्ञाविधानाद् 'अमुके+अत्र' इति दशायां ककारोत्तरवर्तिन एकारस्य प्रगृह्यसञ्ज्ञाया "प्लुतप्रगृह्या अचि नित्यम्" इति प्रकृतिभावेन 'अमुके अत्र' इत्यनिष्टं रूपं स्यादतो सूत्रे माद्ग्रहणं कर्तव्यम् । कृते तु माद्ग्रहणे तत्सामर्थ्यान्न एदित्यस्यानुवृत्तिरिति, न तत्र प्रगृह्यसञ्ज्ञात्वेन प्रकृतिभावः । अपि तु पररूपमेव भवतीति दिक् ।

²सँस्कर्ता ।

'सम्+स्कर्ता' इत्यवस्थाया "समः सुटि" इति सूत्रेण मकारस्य रुत्वेऽनुबन्धलोपे "अत्रानुनासिकः पूर्वस्य तु वा" इति सूत्रेण वैकल्पिकेऽनुनासिकत्वे "खरवसानयोर्विसर्जनीयः" इति रेफस्य विसर्गे, ततो "विसर्जनीयस्य सः" इति सूत्रेण विसर्गस्य सत्वे प्राप्ते, तम्बाधित्वा "वा शरि" इत्यनेन वैकल्पिके विसर्गे प्राप्ते, तमपि प्रबाध्य "सम्पुङ्कानां सो वक्तव्यः" इति वार्तिकेन सकारादेशे 'सँस्कर्ता' इति, अनुनासिकत्वाभावपक्षे "अनुनासिकात्परोऽनुस्वारः" इति सूत्रेणानुस्वारागमे, रेफस्य

* 'अदस्'शब्दात् "अव्ययसर्वनाम्नामकच् प्राक्टेः" इति सूत्रेण 'अकच्'प्रत्ययेऽनुबन्धलोपे, ततः प्रातिपदिकत्वात् 'अदकस्'शब्दाज्जसि विभक्तौ "त्यदादीनामः" इत्यत्वे "अतो गुणे" इति पररूपे, "जसः शी" इत्यनेन जसः श्यादेशेऽनुबन्धलोपे, गुणे, मुत्वे च कृते 'अमुके' इत्यस्य सिद्धिर्भवतीति बोध्यम् ।

१ ये यहाँ है । २ संस्कार करने वाला ।

विसर्गे, विसर्गस्य सकारे च कृते 'संस्कर्ता' इति इति रूपद्वयं साधु ।

मनोरथः ।

अस्य साधनं १६३२ वर्षे ( २८ ) पृष्ठे कृतं मया ।

गो अग्रम् ।

अयमपि प्रयोगः १६३३ वर्षे ( ३६ ) पृष्ठे साधितोऽस्ति ।

[1] त्वङ्करोषि ।

'त्वम् + करोषि' इत्यवस्थायां "मोऽनुस्वारः" इति सूत्रेण मकारस्यानुस्वारे "अनुस्वारस्य ययि परसवर्णः" इति सूत्रम्प्रवाध्य "वा पदान्तस्य" इत्यनेन वैकल्पिके ङकारे परसवर्णे 'त्वङ्करोषि' इति, परसवर्णाभावपक्षे 'त्वं करोषि' इति द्वे रूपे साधुनी ।

सम्ऽगुः ।

अस्योत्तर सन् १६३० वर्षे ( २ ) द्वितीय–पृष्ठे प्रेक्षणीयम् ।

[2] नॄँ ᳲपाहि ।

'नॄन् + पाहि' इत्यवस्थायां "नॄन्पे" इति सूत्रेण वैकल्पिके नकारस्य रुत्वेऽनुबन्धलोपे "अत्रानुनासिकः पूर्वस्य तु वा" इत्यनेन वैकल्पिकेऽनुनासिकागमे, ततः "खरवसानयोर्विसर्जनीयः" इति रेफस्य विसर्गे "विसर्जनीयस्य सः" इति विसर्गस्य सकारे प्राप्ते, तम्प्रबाध्य "कुप्वोः ᳲकᳲपौ च" इति सूत्रेण विसर्गस्य ᳲपादेशे, 'नॄँ ᳲपाहि' इति प्रथमं रूपं सिद्धम् । अनुनासिकाभावपक्षे–"अनुनासिकात्परोऽनुस्वारः" इति सूत्रेणाऽनुस्वारागमे कृते 'नॄं ᳲपाहि' इति द्वितीयं रूपम् । ᳲपादेशाभावपक्षे रुत्वानुनासिकविसर्गेषु कृतेषु 'नॄँः पाहि' इति तृतीयम् । अनुस्वारागमपक्षे 'नॄंः पाहि' इति चतुर्थम् । रुत्वाभावपक्षे–'नॄन्पाहि' इति पञ्च रूपाणि साधूनि ।

1 तुम (क्या) करते हो ? । 2 मनुष्यों की रक्षा करो ।

प्र० [ ३ ] रामाय ।

अस्योत्तरं सन् १६३२ वर्षे ( २८ ) पृष्ठे प्रेक्षणीयम् ।

स्त्रियै ।

प्रातिपदिकत्वात्–'स्त्रि'शब्दात् 'ङे'विभक्तावनुबन्धलोपे "**यू स्त्र्याख्यौ नदी**" इति सूत्रेण नदीसञ्ज्ञायाम्, "**आण्नद्याः**" इत्यनेनाऽऽडागमेऽनुबन्धलोपे "**आटश्च**" इति सूत्रेण वृद्धौ "**स्त्रियाः**" इत्यनेन इयङादेशेऽनुबन्धलोपे च कृते '**स्त्रियै**' इति रूपं सिद्धम् ।

विश्वौहः ।

अस्य प्रयोगस्य साधनप्रकारः सन् १६३२ वर्षे ( ३० ) पृष्ठे प्रेक्षणीयः ।

बभूव ।

'भू—सत्तायाम्' इत्यस्माद्धातोः "**परोक्षे लिट्**" इति सूत्रेण लिट्यनुबन्धलोपे, लस्य स्थाने "**तिप्-तस्-झि-सिप्-थस्-थ-मिप्-वस्-मस्-ता-ऽऽतां-झ-थासाथां-ध्वमिड्-वहि-महिङ्**" इत्यनेन प्रथमपुरुषैकवचने 'तिप्'प्रत्यये "**परस्मैपदानां णलतुसुस्थलथुसणल्वमाः**" इत्यनेन तिपो णलादेशेऽनुबन्धलोपे, 'भू+अ' इति स्थिते, नित्यत्वाद्गुणवृद्धी बाधित्वा "**भुवो वुग्लुङ्लिटोः**" इत्यनेन वुगागमेऽनुबन्धलोपे, 'भूव्+अ' इति जाते, '**वृत्तः प्रचलन् सहावयवैः प्रचलति**" इति न्यायेन वुक्सहितस्य भुवो "**लिटि धातोरनभ्यासस्य**" इति द्वित्वे, "भूव्+भूव्+अ' इति भूते, "**पूर्वोऽभ्यासः**" इति प्रथम'भूव्' इत्यस्याभ्याससञ्ज्ञायां "**हलादिः शेषः**" इत्यनेन वकारस्य लोपे 'भू+भूव्+अ' इति जाते "**ह्रस्वः**" इत्यनेनाभ्यासस्य ह्रस्वे '**भवतेरः**" इत्यनेनाभ्यासोकारस्य अकारे 'भ+भूव्+अ' इति जाते, "**अभ्यासे चर्च**" इत्यनेन पूर्वभकारस्य बकारे '**बभूव**' इति रूपं सिद्धम् ।

मिमीते ।

'माङ् [1]माने शब्दे च' इत्यस्माद्धातोः "**वर्त्तमाने लट्**" इति

१ नापना, बिल्ली या बकरी का शब्द 'मैं-मैं' करना ।

सूत्रेण लट्यनुबन्धलोपे, लकारस्थाने 'त' प्रत्यये, टेरेत्वे "जुहोत्यादिभ्यः श्लुः" इत्यनेन शपः श्लौ "श्लौ" इत्यनेन द्वित्वे "पूर्वोऽभ्यासः" इत्यभ्याससञ्ज्ञात्वे, "ह्रस्वः" इति ह्रस्वे, "भृञामित्" इत्यनेन इत्वे, तस्य ङित्वात् "ई हल्यघोः" इति सूत्रेण ईत्वे च कृते 'मिमीते' इति रूपं साधु ।

अहिनः ।

हिंसार्थकात् 'हिस्' धातोर्लुङि, "अनद्यतने लङ्" इति सूत्रेण लङि, अनुबन्धलोपे, लस्य स्थाने सिप्यनुऽबन्धलोपे "इतश्च" इत्यनेन इकारलोपे "लुङ्-लङ्-लृङ्क्ष्वडुदात्तः" इत्यनेनाडागमेऽनुबन्धलोपे, "रुधादिभ्यः श्नम्" इति श्नम्यनुबन्धलोपे, नलोपे, हल्ङ्यादिलोपे च "सिपि धातो रुर्वा" इति पाक्षिके रुत्वे विसर्गे च कृते 'अहिनः' इति, अत्र 'वा'शब्दस्य समुच्चयार्थकत्वात् "वसु-स्रंसु-ध्वंस्वनडुहां दः" इति दकारस्यानुवृत्त्या रुत्वाभावपक्षे—सकारस्य दत्वे "वाऽवसाने" इति वैकल्पिके चर्त्वे 'अहिनत्'–'अहिनद्' इति त्रीणि रूपाणि साधूनि ।

प्र० [ ४ ] अबोभोत् ।

'भू'धातोः "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इत्यनेन यङि "यङोऽचि च" इत्यनेन यङो लुकि, प्रत्ययलक्षणेन यङन्तत्वात् "सन्यङोः" इति सूत्रेण द्वित्वे "गुणो यङ्लुकोः" इत्यनेन गुणे "अभ्यासे चर्च" इति भस्य बत्वे "सनाद्यन्ता धातवः" इति धातुसंज्ञायां धातुत्वात् "लुङ्" इत्यनेन लुङ्यनुबन्धलोपे लकारस्थाने तिप्यनुबन्धलोपेऽडागमे, इकारलोपे "च्लि लुङि" इति च्लौ "च्लेः सिच्" इत्यनेन सिचि "गाति-स्था-घु-पा भूभ्यः सिचः परस्मैपदेषु" इत्यनेन सिचो लोपे "यङो वा" इति पक्षिके इडभावे गुणे च कृते 'अबोभोत्' इति, इटि कृते तु 'अबोभूवीत' इति रूपद्वय सिद्ध्यति ।

[1]अलाभि ।

'लभ्'धातोर्भावे लुङि "भावकर्मणोः" इत्यनेनाऽऽत्मनेपदत्वाल्लुङस्त-

१ प्राप्त किया हुआ ।

प्रत्यये "लुङ् लङ्-लृङ्क्ष्वडुदात्तः" इत्यडागमेऽनुबन्धलोपे "च्लि लुङि" इति च्लौ "चिण् भावकर्मणोः" इत्यनेन च्लेश्चिणि 'अ+लभ्+इ+त' इति स्थिते "विभाषा चिण्णमुलोः" इत्यनेन पाक्षिके नुमोऽभावे "चिणो लुक्" इति सूत्रेण तकारस्य लोपे "अत उपधायाः" इत्यनेन वृद्धौ कृतायां सत्यां 'अलाभि' इति रूपं सिद्धम् ।

[1]अवावा ।

ओणतीति विग्रहे 'ओणृ अपनयने' इत्यस्माद्धातोर्वनिपि "विड्वनोरनुनासिकस्याऽऽत्" इति सूत्रेण णकारस्याऽऽत्वे, ओकारस्याऽवादेशे, ततः 'अवावन्'शब्दात् "सर्वनामस्थाने चाऽसम्बुद्धौ" इति सूत्रेण दीर्घे, हल्ङ्यादिना सोर्लोपे, नकारस्य च लोपे कृते 'अवावा' इति रूपं सिद्धम् ।

[2]शुभंयुः ।

शुभमस्य विद्यते-इति विग्रहे 'शुभम्' इत्यस्मात् "अहंशुभमोर्युस्" इति सूत्रेण युसि, अनुस्वारे, ततः प्रातिपदिकत्वात्स्वादिकार्ये च कृते 'शुभंयुः' इति रूपं साधु ।

[3]मानुषी ।

'मनु'शब्दात्-अपत्येऽर्थे "मनोर्जातावञ्यतौ षुक् च" इति सूत्रेण 'अञ्' प्रत्यये, षुगागमे चाऽनुबन्धलोपे, वृद्धौ, 'मानुष'शब्दात् "जातेरस्त्रीविषयादयोपधात्" इत्यनेन ङीषि, अनुबन्धलोपे, भत्वे, "यस्येति च" इत्यनेनाकारस्य लोपे, ततः प्रातिपदिकत्वात्सौ, सोर्लुकि च कृते 'मानुषी' इति रूपं सिद्धम् ।

१ दूर करने वाली ब्राह्मणी । २ शुभान्वित अर्थात् कल्याण कारक (पुरुष) । ३ स्त्री ।

[1] विप्राय गां ददाति ।

'विप्राय गां ददाति' इत्यत्र "कर्मणा यमभिप्रैति स सम्प्रदानम्" इति सूत्रेण विप्रस्य सम्प्रदानसञ्ज्ञायां "सम्प्रदाने चतुर्थी" इत्यनेन तस्य सम्प्रदानत्वात्पञ्चमी 'विप्राय गां ददाति' इत्यस्य सिद्धिः ।

प्र० [ ५ ]

"अन्तादिवच्च" योऽयमेकादेशः स पूर्वस्याऽन्तवत्परस्याऽऽदिवत्, इति सूत्रार्थः, यथा 'शिवेहि' इत्यत्रैकादेशो गुणस्तस्य पूर्वान्तवद्भावेनाऽऽङ्त्वं मत्वा "ओमाङोश्च" इत्यनेन पररूपं भवति । "प्रथमलिङ्गग्रहणञ्च" पूर्वस्याऽव्ययस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः, यथा 'श्रेयसी'-शब्दः प्राक् नित्यस्त्रीलिङ्गः, पश्चाद् 'बहु' इत्यस्योपसर्जनत्वेऽपि नदीसञ्ज्ञको भवत्येवेति । "नाऽनर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे" अनर्थके "अलोऽन्त्यस्य" इति विधिर्न प्रवर्त्तते, अभ्यासविकारं वर्जयित्वा । अभ्यासविकारे त्वनर्थकेऽपि "अलोऽन्त्यस्य" इति प्रवर्त्तते एवेत्यर्थः । तेन 'बिभर्ति' पिपर्त्ति' इत्यादौ "भृञामित्" इति "अर्तिपिपर्त्योश्च" इति च सूत्रेणाभ्यासावयवस्यान्त्यस्याल इत्वं भवति, न सर्वस्याभ्यासस्येति । "आद्यन्तवदेकस्मिन्" एकस्मिन्क्रियमाणं कार्यमादाविवान्त इव स्यात्* । यथा —"सुपि च" इति सूत्रेणाकारान्तस्य दीर्घो विधीयते, "हलि लोपः" इत्यनेनेदो लोपे कृते 'अ + भ्याम्' इति स्थिते, 'इद'शब्दोऽदन्तो नास्ति, अतः "आद्यन्तवदेकस्मिन्" इति सूत्रेणाऽकारेऽदन्तत्वमाश्रित्य दीर्घो भवतीति शम् ।

---

* एकस्मिन्नपि वर्णे तदादित्वव्यवहारस्तदन्तत्वव्यवहारश्च भवतीति यावत् । यथा लोके एकपुत्रसत्त्वे तस्मिन्नेव ज्येष्ठत्वकनिष्ठत्वादिव्यवहारो भवति, तथैव शास्त्रेऽपि बोध्यः ।

[1] ब्राह्मण के लिये गौ देता है ।

"नेर्गद-नद-पत-पद-घु गा-स्यति-हन्ति-याति-वाति-द्राति-प्साति-चपति-वहति-शाम्यति-चिनोति-देग्धिषु च"। "पा-घ्रा-ध्मा स्था-म्ना-दाण्-दृश्यर्ति सर्ति-शद-सदां-पिव-जिघ्र-धम-तिष्ठ मन-यच्छ-पश्यर्च्छ-धौ-शीय-सीदाः"। "दाम्नी शस युयुज-स्तु-तुद-सि-सिच-मिह-पत-दश-नहः करणे।" "अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावा-ऽत्यया ऽसम्प्रति-शब्दप्रादुर्भाव-पश्चा-द्यथा-ऽऽनुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्या-ऽन्त-वचनेषु"। "पङ्क्ति-विंशति-त्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टि-सप्तत्यशीति-नवति-शतम्"।

प्र० [ ६ ]

समासः पञ्चधा। तत्र * समसनं समासः। स च विशेषसंज्ञाविनिर्मुक्तः **केवलसमासः** प्रथमः। यथा-'**भूतपूर्वः**'। प्रायेण पूर्वपदार्थप्रधानोऽ**व्ययीभावो** द्वितीयः। यथा-'**अधिहरि**'। प्रायेणोत्तरपदार्थप्रधानस्त**त्पुरुषस्तृतीयः**। यथा-'**राजपुरुषः**'। तत्पुरुषभेदः **कर्मधारयः**। यथा-'**नीलोत्पलम्**'। कर्मधारयभेदो **द्विगुः**। यथा-'**पञ्चगवम्**'। प्रायेणान्यपदार्थप्रधानो **बहुव्रीहिश्चतुर्थः**। यथा-'**लम्बकर्णः**' '**पीताम्बरः**' प्रायेणोभयपदार्थप्रधानो **द्वन्द्वः** पञ्चमः। यथा-'**रामलक्ष्मणौ**' '**धवखदिरौ**'।

प्र० [ ७ ]

पुँल्लिङ्गे [1]'द्वि'शब्दस्य रूपाणि।

| प्रथमा | द्वितीया | तृतीया | चतुर्थी |
|---|---|---|---|
| द्वौ | द्वौ | द्वाभ्याम् | द्वाभ्याम् |

| पञ्चमी | षष्ठी | सप्तमी |
|---|---|---|
| द्वाभ्याम् | द्वयोः | द्वयोः |

* अनेकपदानामेकीभवनमित्यर्थः।

1 दो।

पुँल्लिङ्गे [1]'त्रि'शब्दस्य रूपाणि ।

| प्रथमा | द्वितीया | तृतीया | चतुर्थी |
|---|---|---|---|
| त्रयः | त्रीन् | त्रिभिः | त्रिभ्यः |
| **पञ्चमी** | **षष्ठी** | **सप्तमी** | **सम्बोधनम्** |
| त्रिभ्यः | त्रयाणाम् | त्रिषु | हे त्रयः ! |

पुँल्लिङ्गे [2]'चतुर्'शब्दस्य रूपाणि ।

| प्रथमा | द्वितीया | तृतीया | चतुर्थी |
|---|---|---|---|
| चत्वारः | चतुरः | चतुर्भिः | चतुर्भ्यः |
| **पञ्चमी** | **षष्ठी** | **सप्तमी** | **सम्बोधनम्** |
| चतुर्भ्यः | चतुर्णाम् | चतुर्षु | हे चत्वारः ! |

स्त्रीलिङ्गे 'द्वि'शब्दस्य रूपाणि ।

| प्रथमा | द्वितीया | तृतीया | चतुर्थी |
|---|---|---|---|
| द्वे | द्वे | द्वाभ्याम् | द्वाभ्याम् |

| पञ्चमी | षष्ठी | सप्तमी |
|---|---|---|
| द्वाभ्याम् | द्वयोः | द्वयोः |

स्त्रीलिंगे 'त्रि'शब्दस्य रूपाणि ।

| प्रथमा | द्वितीया | तृतीया | चतुर्थी |
|---|---|---|---|
| तिस्रः | तिस्रः | तिसृभिः | तिसृभ्यः |
| **पञ्चमी** | **षष्ठी** | **सप्तमी** | **सम्बोधनम्** |
| तिसृभ्यः | तिसृणाम् | तिसृषु | हे तिस्रः ! |

स्त्रीलिङ्गे 'चतुर्'शब्दस्य रूपाणि ।

| प्रथमा | द्वितीया | तृतीया | चतुर्थी |
|---|---|---|---|
| चतस्रः | चतस्रः | चतसृभिः | चतसृभ्यः |

१ तीन । २ चार ।

| पञ्चमी | षष्ठी | सप्तमी | सम्बोधनम् |
|---|---|---|---|
| चतसृभ्यः | चतसृणाम् | चतसृषु | हे चतस्रः । |

नपुंसकलिङ्गे 'द्वि'शब्दस्य रूपाणि ।

| प्रथमा | द्वितीया | तृतीया | चतुर्थी |
|---|---|---|---|
| द्वे | द्वे | द्वाभ्याम् | द्वाभ्याम् |

| पञ्चमी | षष्ठी | सप्तमी |
|---|---|---|
| द्वाभ्याम् | द्वयोः | द्वयोः |

नपुंसकलिङ्गे 'त्रि'शब्दस्य रूपाणि ।

| प्रथमा | द्वितीया | तृतीया | चतुर्थी |
|---|---|---|---|
| त्रीणि | त्रीणि | त्रिभ्यः | त्रिभ्यः |

| पञ्चमी | षष्ठी | सप्तमी |
|---|---|---|
| त्रिभ्यः | त्रयाणाम् | त्रिषु |

नपुंसकलिङ्गे 'चतुर्' शब्दस्य रूपाणि ।

| प्रथमा | द्वितीया | तृतीया | चतुर्थी |
|---|---|---|---|
| चत्वारि | चत्वारि | चतुर्भिः | चतुर्भ्यः |
| **पञ्चमी** | **षष्ठी** | **सप्तमी** | **सम्बोधनम्** |
| चतुर्भ्यः | चतुर्णाम् | चतुर्षु | हे चत्वारि ! |

'युष्मद्'शब्दस्य लिखिष्यमाणानि रूपाणि (७७) पृष्ठे द्रष्टव्यानि ।

[1]'अस्मद्' शब्दस्य रूपाणि ।

| एकवचनम् | द्विवचनम् | बहुवचनम् । | |
|---|---|---|---|
| अहम् | आवाम् | वयम् | प्रथमा । |
| माम् | आवाम् | अस्मान् | द्वितीया । |
| मया | आवाभ्याम् | अस्माभिः | तृतीया । |
| मह्यम् | आवाभ्याम् | अस्मभ्यम् | चतुर्थी । |

१ हम ।

| | | | |
|---|---|---|---|
| મત્ | આવાભ્યામ્ | અસ્મત્ | **पञ्चमी ।** |
| મમ | આવયોઃ | અસ્માકમ્ | **षष्ठी ।** |
| મયિ | આવયોઃ | અસ્માસુ | **सप्तमी ।** |

[1]'लिह्'धातोः सर्वलकारेषु प्रथमं रूपम् ।

| | | | | |
|---|---|---|---|---|
| लटि | [ પરસ્મૈપદે ] | लेढि | [ આત્મનેપદે ] | लीढे । |
| लिटि | ,, | लिलेह | ,, | लिलिहे । |
| लुटि | ,, | लेढा | ,, | लेढा । |
| लृटि | ,, | लेक्ष्यति | ,, | लेक्ष्यते । |
| लोटि | ,, | लेढु–लीढात् | ,, | लीढाम् । |
| लङि | ,, | अलेट्–अलेड् | ,, | अलीढ । |
| विधि लिङि | ,, | लिह्यात् | ,, | लिहीत । |
| आ० लिङि | ,, | लिह्यात् | ,, | लिक्षीष्ट । |
| लुङि | ,, | अलिक्षत् | ,, | अलिक्षत–अलीढ । |
| लृङि | ,, | अलेक्ष्यत् | ,, | अलेक्ष्यत । |

[2]'ब्रू'धातोः सर्वलकारेषु प्रथमं रूपम् ।

| | | | | |
|---|---|---|---|---|
| लटि | [ પરસ્મૈપદે ] | आह ( पक्षे ) ब्रवीति | [ આત્મનેપદે ] | ब्रूते । |
| लिटि | ,, | उवाच | ,, | ऊचे । |
| लुटि | ,, | वक्ता | ,, | वक्ता । |
| लृटि | ,, | वक्ष्यति | ,, | वक्ष्यते । |
| लोटि | ,, | ब्रवीतु–ब्रूतात् | ,, | ब्रूताम् । |
| लङि | ,, | अब्रवीत् | ,, | अब्रूत । |
| वि० लिङि | ,, | ब्रूयात् | ,, | ब्रुवीत । |
| आ० लिङि | ,, | उच्यात् | ,, | वक्षीष्ट । |
| लुङि | ,, | अवोचत् | ,, | अवोचत । |
| लृङि | ,, | अवक्ष्यत् | ,, | अवक्ष्यत । |

૧ ચાટના । ૨ સ્પષ્ટ બોલના ।

## सन् १९४०

### प्रश्नाः-

१ लण् सूत्रेऽकारस्येत्संज्ञायाः फलं तदुदाहरणञ्च ब्रूत । ५

२ कृष्णर्द्धिः, उत्थानम्, सच्छम्भुः, हरी रम्यः, एतेषां प्रयोगाणां सूत्रनिर्देशपुरस्सरं सिद्धिं प्रदर्शयत । १२

अथवा

विष्णो+इह, किमु+उक्तम्, तद्+शिवः, सुगण्+षष्ठः, इत्यस्यां स्थितौ कानि रूपाणि भवन्ति, कथञ्च तत्सिद्धिरिति ससूत्रं प्रतिपादयत । १२

३ (क) सखा, मतौ, त्वया, भवेयुः, अध्ययै, अनड्‌ ।
(ख) गाः, दध्नि, अमुया, एधस्व, पपरतुः, अनजानि ।
उपरिनिर्दिष्टयोः क, ख, प्रश्नयोर्मध्ये कस्यचिदेकस्य सम्पूर्णस्य प्रश्नस्य प्रयोगान् सम्यक् प्रसाधयत । १८

४ अबोभवुः, राजानति, धर्ममुच्चरते, अस्तावि, गोमयनिकायः, मातुः स्मरति, एतेषां प्रयोगाणां ससूत्रं सिद्धिप्रकारं लिखत । १८

५ अध्यात्मम्, रूपवद्भार्यः, सखिपथः, एतेषु समासविधायकानि सूत्राणि तत्तद्विशेषकार्यञ्च स्फुटं प्रदर्शयत । ६

६ द्वैमातुरः, मीमांसकः, शालीयः, आश्मनम्, नैकटिकः, मातृभोगीणः, एतेषु तत्तदर्थबोधकप्रत्ययविधायकानि शास्त्राणि साधु प्रतिपादयत । प्रयोगाणामर्थश्च लेख्यः । १८

७ मघवन्, निर्जर, अतिचमू, शब्देषु कयोश्चिद् द्वयोः शब्दयोः सर्वाणि रूपाणि विलिख्य, श्रु श्रवणे, हन हिंसागत्योः, रुधिर आवरणे, एतेषु कयोश्चिद् द्वयोः धात्वोः सर्वलकारेषु प्रथमं रूपञ्च स्पष्टं लिखत । १०

सूचना—स्पष्टसुन्दराक्षरविन्यासाय दशाङ्काः सुरक्षिता इति बोध्यम् ।

## उत्तराणि

प्र० [ १ ]

"लण्" सूत्रेऽकारस्येत्सञ्ज्ञायाः फलं 'र'प्रत्याहारसिद्धिः। तेन रप्रत्याहारसिद्ध्या "उरण् रपरः" इत्यादौ रपर इत्यनेन लपरस्यापि विधानात् 'तवल्कारः' इत्यादि प्रयोगाणां सिद्धिर्भवतीति बाध्यम्।

प्र० [ २ ] कृष्णर्द्धिः।

असौ प्रयोगः सन् १९३६ वर्षे ( ६७ ) पृष्ठे वर्तते।

उत्थानम्।

अस्यापि साधनप्रकारः सन् १९३१ वर्षे ( १४ ) पृष्ठे द्रष्टव्यः।

सञ्चच्छागुः।

असौ प्रयोगः सन् १९३० वर्षे ( ७२ ) पृष्ठे साधितो मया।

[1]हरी रम्यः।

'हरिस् + रम्यः' इत्यवस्थायां "ससजुषो रुः" इति सूत्रेण सकारस्य रुत्वेऽनुबन्धलोपे "रोरि" इत्यनेन रेफस्य लोपे "ढ्रलोपे पूर्वस्य दीर्घोऽणः" इत्यनेनेकारस्य दीर्घे 'हरी रम्यः' इति रूपं सिद्धम्।

[2]विष्णो इह।

'विष्णो + इह' इत्यवस्थायाम्, "एचोऽयवायावः" इति सूत्रेण ओकारस्यावादेशे 'विष्ण् + अव् + इह' इति जाते "लोपः शाकल्यस्य" इत्यनेन वैकल्पिके वकारलोपे, ततः "आद्गुणः" इत्यनेन गुणे प्राप्ते "पूर्वत्रासिद्धम्" इति सूत्रेण "लोपः शाकल्यस्य" इत्यस्यासिद्धत्वाद्गुणाभावे, 'विष्ण इह' इति रूपं निष्पन्नम्। वकारलोपाभावपक्षे 'विष्णविह' इति च रूपद्वयं साधु।

१ हरि भगवान् रमणीय हैं। २ हे विष्णु ! यहाँ [ आओ ]।

किम्बुक्तम्।

असौ प्रयोगः सन् १६३४ वर्षे ( ५० ) पृष्ठे कृतं राजते।

[1]तच्छिवः।

'तद्+शिवः' इत्यवस्थायां "स्तोः श्चुना श्चुः" इत्यनेन शकारयोगात्—दकारस्य श्चुत्वेन जकारे 'तज्+शिवः' इति जाते, "खरि च" इति सूत्रेण जकारस्य चर्त्वेन चकारे, "शश्छोऽटि" इत्यनेन शकारस्य स्थाने वैकल्पिके छकारे कृते 'तच्छिवः' इति रूपं साधु. छत्वाभावे सति—'तच्शिवः' इति रूपं भवतीति शम्।

[2]सुगण्षष्ठः।

'सुगण्+षष्ठ' इत्यवस्थायां "ङ्णोः कुक्-टुक्-शरि" इति सूत्रेण वैकल्पिके टुगागमेऽनुबन्धलोपे च कृते 'सुगण्+ट्+षष्ठ' इति भूते, "चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्" इति वार्तिकेन टकारस्य द्वितीयाक्षरे ठकारे कृते 'सुगण्ठ्षष्ठः' इति रूपम्। द्वितीयाक्षराभावपक्षे 'सुगण्ट्षष्ठः' इति। टुगागमाभावपक्षे 'सुगण्षष्ठः' इति त्रीणि रूपाणि साधूनि।

प्र० [ ३ ] ( क )

सखा।

प्रातिपदिकत्वात्—'सखि'शब्दात्प्रथमैकवचने 'सु'प्रत्ययेऽनुबन्धलोपे 'सखि+स्' इति स्थिते "यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम्" इति सूत्रेणाऽङ्गसञ्ज्ञायाम्, "अनङ् सौ" इत्यनेनाऽनङादेशे प्राप्ते स चाऽनङादेशः कुत्र स्यादित्याशङ्कायाम्, "अनेकाल्शित्सर्वस्य" इति सूत्रेण 'सखि' इति सम्पूर्णस्य स्थाने प्राप्ते, परञ्च "ङिच्च" इत्यनेन "अनेकाल्शित्सर्वस्य" इति सूत्रं प्रतिषेध्य 'सखि'शब्दघटकखकारोत्तरवर्तिन इकारस्य स्थाने-

१ वह शिव [ है ]। २ छठा अच्छा गणित जानता है।

ऽनङादेशेऽनुबन्धलोपे च कृते, 'सखन्×स्' इति जाते, ततः "अलोऽन्त्यात्पूर्व उपधा" इति सूत्रेणोपधासञ्ज्ञायां "सर्वनामस्थाने चाऽसम्बुद्धौ" इत्यनेन दीर्घे, 'सखान्+स्' इति स्थिते "अपृक्त एकाऽल्प्रत्ययः" इति सूत्रेण सकारस्यापृक्तसञ्ज्ञायां "हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्" इत्यनेन सकारलोपे 'सखान्' इति भूते, "नलोपः प्रातिपदिकान्तस्य" इति नकारस्य लोपे 'सखा' इति रूपं साधु।

मतौ ।

अस्योत्तरं सन् १६३१ वर्षे ( १९ ) पृष्ठे द्रष्टव्यम् ।

त्वया ।

प्रातिपदिकत्वात्–'युष्मद' शब्दाद् 'टा' विभक्तौ समागतायामनुबन्धलोपे "त्वमावेकवचने" इति सूत्रेण मपर्यन्तस्य युष्मदस्त्वादेशे "अतो गुणे" इत्यनेन पररूपे "योऽचि" इति दकारस्य यकारे च कृते 'त्वया' इति रूपं सिद्धम् ।

भवेयुः ।

'भू'धातोः "विधि-निमन्त्रणा-ऽऽमन्त्रणा-ऽधीष्ट-संप्रश्न-प्रार्थनेषु लिङ्" इति सूत्रेण लिङि, लिङः स्थाने 'झि'प्रत्यये "कर्त्तरि शप्" इति शप्यनुबन्धलोपे, "सार्वधातुकार्धधातुकयोः" इत्यनेन गुणेऽवादेशे च "झोऽन्तः" इति झस्यान्तादेशे प्राप्ते, तम्बाधित्वा "झेर्जुस्" इति जुसादेशेऽनुबन्धलोपे, "यासुट् परस्मैपदेषूदात्तो ङिच्च" इति सूत्रेण यासुटि, अनुबन्धलोपे "लिङः सलोपोऽनन्त्यस्य" इत्यनेन सकारस्य लोपे प्राप्ते, तम्प्रबाध्य "अतो येयः" इति यास इयादेशे, ततः "आद्गुणः" इत्यनेन गुणे रुत्वे विसर्गे च कृते सति 'भवेयुः' इति रूपं सिद्धम् ।

अध्ययै ।

अधिपूर्वात् 'इङ् [1]अध्ययने' इत्यस्माद्धातोः "लोट् च" इत्यनेन

१ पढ़ना ।

"आशिषि लिङ्-लोटौ" इत्यनेन वा लोटि, लोटः स्थाने इटि प्रत्यये तस्य "टित आत्मनेपदानां टेरे" इति सूत्रेण एत्वे "आडुत्तमस्य पिच्च" इत्यनेनाऽऽटि, "आटश्च" इति वृद्धौ 'अधि + इ + ऐ' इति स्थिते, गुणेऽयादेशे यणि च कृते 'अध्ययै' इति रूपं निष्पन्नम् ।

अनद्ध ।

'णह–[1]बन्धने' इत्यस्माद्धातोर्णस्य नत्वे, तत आत्मनेपदे 'त'प्रत्ययेऽटि, च्लौ, सिचि "नहो धः" इति सूत्रेण हकारस्य धकारे "झषस्तथोर्धोऽधः" इत्यनेन थकारस्य धकारे "झलो झलि" इति सकारस्य लोपे, जश्त्वे 'अनद्ध' इति रूपं साधु ।

[ ख ] गाः ।

'गो'शब्दात्प्रातिपदिकसंज्ञायां प्रातिपदिकत्वाद्द्वितीयाबहुवचने 'शस्'विभक्तावनुबन्धलोपेऽसर्वनामस्थानत्वाद् णिद्वद्भाववृद्ध्योरभावे "औतोऽम्शसोः" इति सूत्रेण आकारैकादेशे, सकारस्य रुत्वे विसर्गे च सति 'गाः' इति रूपं सिद्धम् ।

दध्नि ।

प्रातिपदिकत्वात् 'दधि'शब्दात्सप्तम्येकवचने 'ङि'विभक्तावनुबन्धलोपे "अस्थि-दधि-सक्थ्यक्ष्णामनङुदात्तः" इति सूत्रेणानङादेशेऽनुबन्धलोपे "विभाषा ङिश्योः" इत्यनेन वैकल्पिकेऽकारस्य लोपे 'दध्नि' इति । अल्लोपाभावपक्षे 'दधनि' इति द्वे रूपे निष्पन्ने ।

अमुया ।

प्रातिपदिकत्वात्–'अदस्'शब्दात्तृतीयैकवचने 'टा' विभक्तौ "त्यदादीनामः" इत्यनेनात्वे "अतो गुणे" इति सूत्रेण पररूपत्वे च "अजाद्यतष्टाप्" इत्यनेन टापि, "अकः सवर्णे दीर्घः" इत्यनेन दीर्घे "आङि चापः" इत्येत्वेऽयादेशे "अदसोऽसेर्दादु दो मः" इति मुत्वे कृते 'अमुया' इति रूपं सिद्धम् ।

1 बाँधना ।

### एधस्व ।

'एध-वृद्धौ' इत्यस्माद्धातोर्लोटि, तत्स्थाने थासि, शपि, **"थासः से"** इति 'से' इत्यादेशे **"आमेतः"** इति सूत्रेणाऽऽमं बाधित्वा **"सवाभ्यां वामौ"** इत्यनेन एकारस्य वादेशे **'एधस्व'** इति रूपं निष्पन्नम् ।

### पपरतुः ।

'पॄ [1]पालन-पूरणयोः' इत्यस्माद्धातोः **"परोक्षे लिट्"** इति सूत्रेण लिटयनुबन्धलोपे, लकारस्थाने **"तिप्-तस्-झि-सिप् थस् थ-मिब्-वस्-मस्-ता-ऽऽतां-झ-थासाथां-ध्वमिड्-वहि-महिङ्"** इत्यनेन प्रथमपुरुषद्विवचने तस्'प्रत्यये ,तसः स्थाने **"परस्मैपदानां णलतुसु-स्थलथुसणल्वमाः"** इत्यतुसादेशे **"लिटि धातोरनभ्यासस्य"** इति द्वित्वे **"पूर्वोऽभ्यासः"** इत्यभ्याससञ्ज्ञायाम्, **"उरत्"** इत्यत्वे **"उरण् रपरः"** इति रपरे **"हलादिः शेषः"** इति लोपे **"शॄ-दॄ-प्रां-ह्रस्वो वा"** इति सूत्रेण पाक्षिके ह्रस्वाभावे **"ऋच्छत्यॄताम्"** इत्यनेन गुणे, रपरे च कृते **'पपरतुः'** इति । ह्रस्वे कृते तु-यणि, रुत्वे विसर्गे च **'पप्रतुः'** इति रूपद्वयं सिद्धयति ।

### अनजानि ।

असौ प्रयोगः सन् १९३५ वर्षे ( ६४ ) पृष्ठे प्रेक्षणीयः ।

### प्र० [ ४ ] अबोभवुः ।

**'भू'**धातोः **"धातोरेकाचो हलादेः क्रियासमभिहारे यङ्"** इति यङि **"यङोऽचि च"** इति यङो लुकि **"प्रत्ययलोपे प्रत्ययलक्षणम्"** इत्यनेन यङन्तत्वात् **"सन्यङोः"** इत्यनेन द्वित्वे **"पूर्वोऽभ्यासः"** इत्यनेनाभ्याससञ्ज्ञायाम् **"गुणो यङ्लुकोः"** इति गुणे **"अभ्यासे चर्च"** इत्यनेन भकारस्य बत्वे **"सनाद्यन्ता धातवः"** इत्यनेन धातुत्वाल्लुङि, लुङः स्थाने झौ, **'च्लि लुङि"** इति च्लौ **"च्लेः सिच्"** इत्यनेन सिचि

[1] पालना, पूरा करना ।

"गाति-स्था-घु-पा-भूभ्यः सिचः परस्मैपदेषु" इत्यनेन सिचो लोपे, गुणं बाधित्वा "भुवो वुग्-लुङ्-लिटोः" इत्यनेन वुगागमेऽनुबन्धलोपे "सिजभ्यस्तविदिभ्यश्च" इति सूत्रेण झेर्जुसागमेऽनुबन्धलोपेऽटि, रुत्वे विसर्गे च कृते 'अबोभवुः' इति रूपं सिद्धम् ।

[1]राजानति ।

राजेवाऽऽचरतीति विग्रहे 'राजन्' शब्दात् "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इति सूत्रेण क्विपि तल्लोपे, "सनाद्यन्ता धातवः" इति सूत्रेण धातुत्वाल्लटस्तिपि, शपि, "अनुनासिकस्य क्वि झलोः क्ङिति" इति सूत्रेण दीर्घे 'राजानति' इति रूपं सिद्धम् ।

[2]धर्ममुच्चरते ।

धर्ममुच्चरते—इत्यत्र 'उत्'-पूर्वा'चर्'धातोः "उदश्चरः सकर्मकात्" इति सूत्रेणाऽऽत्मनेपदत्वाल्लटि, तत्स्थाने 'त'प्रत्यये "कर्त्तरि शप्" इति शपि "टित आत्मनेपदानां टेरे" इत्येत्वादिकार्ये कृते 'धर्ममुच्चरते' इति रूपं सिद्धम् ।

अस्तावि ।

असौ प्रयोगः सन् १६३८ वर्षे ( ६२ ) पृष्ठे द्रष्टव्यः ।

[3]गोमयनिकायः ।

निचायनं निकायः, यद्वा निचीयतेऽस्मिन्निति विग्रहे नि-पूर्वात्'चि'धातोः अधिकरणे भावे वा घञि, चस्य कत्वे, वृद्धौ, आयादेशे, ततः कृदन्तत्वात् "कृत्तद्धितसमासाश्च" इति प्रातिपदिकसञ्ज्ञायां सौ रुत्वे विसर्गे च कृते निकाय, इति गोमयानां निकाय इति 'गोमयनिकायः' इति रूपं सिद्धम् ।

[4]मातुः स्मरति ।

'मातुः स्मरति' इत्यत्र "षष्ठी शेषे" इति सूत्रेण कर्मत्वाविवक्षाया शेषत्वविवक्षया षष्ठी 'मातुः स्मरति' इति रूपं सिद्धम् ।

१ राजा के सदृश मानता है । २ धर्म का उल्लंघन करता है ।
३ गोबर की ढेरी । ४ माता को स्मरण करता है ।

प्र० [ ५ ] [1]अध्यात्मम् ।

आत्मनि + इति–इति लौकिकविग्रहे 'आत्मन् + ङि + अधि' इत्यलौकिकविग्रहे "**अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावा-ऽत्यया-ऽसम्प्रति-शब्दप्रादुर्भाव-पश्चा-द्यथा-ऽऽनुपूर्व्य-यौगपद्य-सादृश्य सम्पत्ति-साकल्या-ऽन्तवचनेषु**" इति सूत्रेण समासे "**सुपो धातुप्रातिपदिकयोः**" इति सुपो लुकि '**प्रथमानिर्दिष्टं समास उपसर्जनम्**" इत्यनेनोपसर्जनसञ्ज्ञायाम्, "**उपसर्जनं पूर्वम्**" इति 'अधि' इत्यस्य प्राक्प्रयोगे, 'अध्यात्मन्' इति जाते तस्य "**अनश्च**" इति सूत्रेण टचि, अनुबन्धलोपे "**नस्तद्धिते**" इति टिलोपे, ततः समासत्वात्प्रातिपदिकसञ्ज्ञायां सौ, अमादेशे च कृते "**अध्यात्मम्**' इति रूपं सिद्धम् ।

[2]रूपवद्भार्यः ।

रूपवती भार्या यस्येति लौकिकविग्रहे 'रूपवती + सु, + भार्या + सु' इत्यलौकिकविग्रहे "**अनेकमन्यपदार्थे**" इति सूत्रेण समासे, समासत्वात्प्रातिपदिकत्वेन "**सुपो धातुप्रातिपदिकयोः**" इत्यनेन सुपो लुकि, "**स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु**" इति सूत्रेण 'रूपवती'शब्दस्य पुंवद्भावान्ङीपो निवृत्तौ, "**गोस्त्रियोरुपसर्जनस्य**" इत्यनेन 'भार्या'शब्दस्य ह्रस्वे 'रूपवद्भार्य' इति स्थिते, पुनः प्रातिपदिकसञ्ज्ञाया सौ रुत्वे विसर्गे च कृते '**रूपवद्भार्यः**' इति रूपं साधु ।

[3]सखिपथः ।

सख्युः पन्था', इति लौकिकविग्रहे, सखि + ङस् , पथिन् । सु' इत्यलौकिकविग्रहे च षष्ठीसमासे, सुब्लुकि "**ऋक्पूरब्धूः पथामानक्षे**" इति सूत्रेण 'अ' प्रत्यये, टिलोपे, नकारलोपे, ततः प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च '**सखिपथः**' इति रूपं सिद्धम् ।

१ आत्मा में । २ रूपवती स्त्री वाला । ३ मित्र का रास्ता ।

प्र० [ ६ ] [1]द्वैमातुरः ।

द्वयोर्मात्रोरपत्यमिति लौकिकविग्रहे 'द्वि + ओस्, मातृ + ओस्' इत्यलौकिकविग्रहे "तद्धितार्थोत्तरपदसमाहारे च" इति समासे, सुपो लुकि 'द्विमातृ'शब्दात् "मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः" इत्यनेन 'अण्' प्रत्यये, ऋकारस्य उकारे च रपरत्वे, "तद्धितेष्वचामादेः" इति सूत्रेणाऽऽदिवृद्धौ, ततः प्रातिपदिकत्वे, सौ रुत्वे विसर्गे च कृते 'द्वैमातुरः' इति रूपं सिद्धम् ।

[2]मीमांसकः ।

मीमांसामधीते वेद वेति विग्रहे 'मीमांसा'शब्दात् "क्रमादिभ्यो वुन्" इति सूत्रेण 'वुन्'प्रत्यये "युवोरनाकौ" इत्यनेन अकादेशे, "यस्येति च" इति सूत्रेणाऽऽकारस्य लोपे, ततः प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च सति 'मीमांसकः' इति रूपं निष्पन्नम् ।

[3]शालीयः ।

शालाया भवः इति विग्रहे 'शाला'शब्दस्य "वृद्धिर्यस्याचामादिस्तद्वृद्धम्" इति सूत्रेण वृद्धिसञ्ज्ञायां "वृद्धाच्छः" इति सूत्रेण 'छ' प्रत्यये, सुब्लुकि 'शाला + छ' इति स्थिते, "आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम्" इत्यनेन छस्य स्थाने ईयादेशे "यचि भम्" इति भत्वात् "यस्येति च" इत्यकारस्य लोपे, ततः 'शालीय' इत्यस्य प्रातिपदिकसञ्ज्ञायां सौ रुत्वे विसर्गे च सति 'शालीयः' इति रूपं सिद्धम् ।

[4]आश्मनम् ।

अश्मनोऽवयवो विकारो वेति विग्रहे षष्ठ्यन्त-'अश्मन्'शब्दात् "मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः" इत्यनेन मयटोऽभावपक्षेऽणि, सुपो लुकि "तद्धितेष्वचामादेः" इति सूत्रेणाऽऽदिवृद्धौ "अन्" इति प्रकृतिभावा-

१ गणेश जी । २ मीमांसा पढ़ने वाला । ३ शाला ( घर ) में पैदा हुआ । ४ पत्थर का अवयव [ हिस्सा ] या विकार ।

टिलोपाभावे, ततः प्रातिपदिकत्वाद्विभक्तिकार्ये* 'आश्मनम्' इति रूपं सिद्धम्।

[1]नैकटिकः।

निकटे वसति—इति विग्रहे सप्तम्यन्तसमर्थात् 'निकट'शब्दात् "निकटे वसति" इति सूत्रेण 'ठक्'प्रत्यये "ठस्येकः" इत्यनेन इकादेशे "किति च" इत्यनेनाऽऽदिवृद्धौ, "यस्येति च" इत्यकारस्य लोपे, ततः प्रातिपदिकत्वात्सौ रुत्वे विसर्गे च कृते 'नैकटिको' [ भिक्षुकः ] इति रूपं सिद्धम्।

[2]मातृभोगीणः।

मातृभोगाय हितः—इति विग्रहे 'मातृभोग'शब्दात् "आत्मन्विश्वजनभोगोत्तरपदात्खः" इति सूत्रेण 'ख'प्रत्यये "आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्ययादीनाम्" इति सूत्रेण खस्य ईनादेशे, णत्वे, "यस्येति च" इत्यनेनाकारस्य लोपे, ततः प्रातिपदिकसंज्ञायां विभक्तिकार्ये च सति 'मातृभोगीणः' इति रूपं निष्पन्नम्।

प्र० [ ७ ] [3]'मघवन्'शब्दस्य रूपाणि।

| एकवचनम् | द्विवचनम् | बहुवचनम् | |
|---|---|---|---|
| मघवान् | मघवन्तौ | मघवन्तः | प्रथमा। |
| मघवन्तं | मघवन्तौ | मघवतः | द्वितीया। |
| मघवता | मघवद्भ्याम् | मघवद्भिः | तृतीया। |
| मघवते | मघवद्भ्याम् | मघवद्भ्यः | चतुर्थी। |
| मघवतः | " | " | पञ्चमी। |
| मघवतः | मघवतोः | मघवताम् | षष्ठी। |
| मघवति | मघवतोः | मघवत्सु | सप्तमी। |
| हे मघवन्! | हे मघवन्तौ! | हे मघवन्तः! | सम्बोधनम्। |

* अत्र "अश्मनो विकारे टिलोपो वक्तव्यः" इति वार्तिकेन टिलोपस्तु न शङ्क्यः, प्रसिद्धत्वात्पाषाणवाचकस्यैव 'अश्मन्'शब्दस्य वार्तिके ग्रहणादिति दिक्।

1 गाँव के समीप रहने वाला भिक्षुक। 2 माता के अनुकूल। 3 इन्द्र।

तृत्वाभावे ।

| एकवचनम् | द्विवचनम् | बहुवचनम् । | |
|---|---|---|---|
| मघवा | मघवानौ | मघवानः | प्रथमा । |
| मघवानम् | मघवानौ | मघोन | द्वितीया । |
| मघोना | मघवभ्याम् | मघवभिः | तृतीया । |
| मघोने | मघवभ्याम् | मघवभ्यः | चतुर्थी । |
| मघोनः | „ | „ | पञ्चमी । |
| मघोनः | मघोनोः | मघोनाम् | षष्ठी । |
| मघोनि | मघोनोः | मघवसु | सप्तमी । |
| हे मघवन् ! | हे मघवानौ ! | हे मघवानः ! | सम्बोधनम् । |

[1]'निर्जर' शब्दस्य रूपाणि ।

| एकवचनम् | द्विवचनम् | बहुवचनम् । | |
|---|---|---|---|
| निर्जरः | निर्जरसौ<br>निर्जरौ | निर्जरसः<br>निर्जराः | प्रथमा । |
| निर्जरसम्<br>निर्जरम् | निर्जरसौ<br>निर्जरौ | निर्जरसः<br>निर्जरान् | द्वितीया । |
| निर्जरसा<br>निर्जरेण | निर्जराभ्याम् | निर्जरैः | तृतीया । |
| निर्जरसे<br>निर्जराय | निर्जराभ्याम् | निर्जरेभ्यः | चतुर्थी । |
| निर्जरसः<br>निर्जरात् द् | „ | „ | पञ्चमी । |
| निर्जरसः<br>निर्जरस्य | निर्जरसोः<br>निर्जरयोः | निर्जरसाम्<br>निर्जराणाम् | षष्ठी । |

१ देवता ।

| | | | |
|---|---|---|---|
| निर्जरसि / निर्जरे | निर्जरसोः / निर्जरयोः | निर्जरेषु | सप्तमी । |
| हे निर्जर ! | हे निर्जरसौ ! / हे निर्जरौ | हे निर्जरसः ! / हे निर्जराः | सम्बोधनम् । |

[1]'अतिचमू'शब्दस्य रूपाणि ।

| एकवचनम् | द्विवचनम् | बहुवचनम् । | |
|---|---|---|---|
| अतिचमूः | अतिचम्वौ | अतिचम्वः | प्रथमा । |
| अतिचमुम् | अतिचम्वौ | अतिचमून् | द्वितीया । |
| अतिचम्वा | अतिचमूभ्याम् | अतिचमूभिः | तृतीया । |
| अतिचम्वै | अतिचमूभ्याम् | अतिचमूभ्यः | चतुर्थी । |
| अतिचम्वाः | ,, | ,, | पञ्चमी । |
| अतिचम्वाः | अतिचम्वोः | अतिचमूनाम् | षष्ठी । |
| अतिचम्वाम् | अतिचम्वो· | अतिचमूषु | सप्तमी । |
| हे अतिचमु ! | हे अतिचम्वौ ! | हे अतिचम्वः ! | सम्बोधनम् । |

[2]'श्रु'धातोः सर्वलकारेषु प्रथमं रूपम् ।

| | | | |
|---|---|---|---|
| लटि | लिटि | लुटि | लृटि |
| शृणोति | शुश्राव | श्रोता | श्रोष्यति |
| लोटि | लङि | (वि०) लिङि | (आ०) लिङि |
| शृणोतु·शृणुतात् | अशृणोत् | शृणुयात् | श्रूयात् |
| लुङि | लृङि | | |
| अश्रौषीत् | अश्रोष्यत् | | |

१ सेना को जीतने वाला । २ सुनना ।

[1]'हन'धातोः सर्वलकारेषु प्रथमं रूपम् ।

| | | | |
|---|---|---|---|
| लटि | लिटि | लुटि | लृटि |
| हन्ति | जघान | हन्ता | हनिष्यति |
| लोटि | लङि | (वि०) लिङि | (आ०) लिङि |
| हन्तु, हतात् | अहन् | हन्यात् | वध्यात् |
| लुङि | लृङि | | |
| अवधीत् | अहनिष्यत् | | |

[2]'रुध'धातोः सर्वलकारेषु प्रथमं रूपम् ।

| | | | | |
|---|---|---|---|---|
| लटि | [ परस्मैपदे ] | रुणद्धि | [ आत्मनेपदे ] | रुन्धे |
| लिटि | ,, | रुरोध | ,, | रुरुधे |
| लुटि | ,, | रोद्धा | ,, | रोद्धा |
| लृटि | ,, | रोत्स्यति | ,, | रोत्स्यते |
| लोटि | ,, | रुणद्धु-रुन्द्धात् | ,, | रुन्द्धाम् |
| लङि | ,, | अरुणत्-अरुणद् | ,, | अरुन्द्ध |
| वि०लिङि | ,, | रुन्ध्यात् | ,, | रुन्धीत |
| आ० लि० | ,, | रुध्यात् | ,, | रुत्सीष्ट |
| लुङि | ,, | अरुधत् [पक्षे]अरौत्सीत्, | | अरुद्ध |
| लृङि | ,, | अरोत्स्यत् | | अरोत्स्यत |

इति श्रीशिवदत्तमिश्रशास्त्रिविरचितायां सोत्तरा-प्रथमा-प्रश्नावल्यां-लघुकौमुदीप्रश्नोत्तराणि ।

१ मारना । २ रोकना ।

इति श्रीशिवदत्तमिश्रशास्त्रिकृत 'प्रयोगार्थमञ्जरी' नाम टिप्पणी समाप्त ।

सन् १९४०

## मूलरामायण-विदुरनीति-नीतिशतक-पद्य-दसु प्रश्नाः—

विशेष सूचना १० अंक स्पष्ट तथा सुन्दर लेख के लिये रक्खे गये हैं। १०

१ (क) स जगाम वनं वीरः प्रतिज्ञामनुपालयन्। १६
पितुर्वचननिर्देशात् कैकय्याः प्रियकारणात्॥

(ख) उत्स्मयित्वा महाबाहुः प्रेक्ष्य चास्थि महाबलः।
पादाङ्गुष्ठेन चिक्षेप सम्पूर्णं दशयोजनम्।

(ग) नन्दिग्रामे जटां हित्वा भ्रातृभिः सहितोऽनघः।
रामः सीतामनुप्राप्य राज्यं पुनरवाप्तवान्॥

कस्यापि श्लोकद्वयस्य हिन्दीभाषायामनुवादः कार्यः, कथासन्दर्भश्च प्रदर्शनीयः।

२ (क) परं क्षिपति दोषेण वर्तमानः स्वयं तथा। १
यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः॥

(ख) वनस्पतेरपक्वानि फलानि प्रचिनोति यः।
स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति॥

(ग) अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः।
इन्द्रियाणामनैश्वर्यादैश्वर्याद् भ्रश्यते हि सः॥

किमपि श्लोकद्वयं सान्वयं सभावार्थं च सम्यग् व्याख्येयम्।

३ – (क) सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु गजेषु। २०
प्रकृतिरियं सत्त्ववतां न खलु वयस्तेजसो हेतुः॥ १

(ख) आरम्भगुर्वी क्षयिणी क्रमेण लध्वी पुरा वृद्धिमती च पश्चात्।
दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम्॥

(ग) मालतीकुसुमस्येव द्वे गतीह मनस्विनः।
मूर्ध्नि सर्वस्य लोकस्य शीर्यते वन एव वा॥

किमपि श्लोकद्वयं सभावार्थं व्याख्येयम्।

४— तृतीयप्रश्नेऽधोरेखाङ्कितानां केषांचित् चतुर्णां पदानां विग्रहवाक्यानि समासनामानि च लेख्यानि । ८

५ (क) विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं १०
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं
विद्या राजसुपूजिता न तु धनं विद्याविहीनः पशुः ॥

(ख) यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः । स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ अनयोर्हिन्दीभाषायामनुवादः करणीयः ।

६ मालिनी-प्रहर्षिणी वसन्ततिलका-मन्दाक्रान्ता-स्रग्धराच्छन्दसां लक्षणानि सार्थं लिख्यन्ताम्, प्रत्येकलक्षणस्य उदाहरणमपि प्रदर्शनीयम् । १०

## उत्तराणि

### प्र० [ १ ] ( क )

वीर-श्रेष्ठ वह श्रीरामचन्द्रजी कैकेयी की प्रसन्नता के लिये पिता की आज्ञा से (अवश्य मैं वन में रहूँगा) इस प्रतिज्ञा को पालन करते हुए वन में गये ।

सन्दर्भ　देवासुर संग्राम के अवसर पर महाराज दशरथ के रथ का धुरा टूट गया था । उस समय रानी कैकेयी ने अपना हाथ धुरा के स्थान पर लगा दिया था । इस पर प्रसन्न होकर दशरथजी ने दो वरदान देने का वचन दिया था । उसी की पूर्ति के निमित्त कैकेयी ने राजतिलक के अवसर पर महाराज से दो वरदान राम वनगमन भरत को राज्य तिलक माँगा था ।

### ( ख )

लम्बी बाहुवाले और बड़े बलवान् ( सुग्रीव के सन्देह को समझ कर दुन्दुभि नामक राक्षस की ) हड्डी को देख कर और ( अरे ! यह कितना है ऐसा अनादर दिखाते हुए ) थोड़ा मुस्करा कर पाँव के अंगूठे से उसको पूरे दश योजन ( चालीस कोस ) पर फेंक दिया ।

**सन्दर्भ** वालि ने दुन्दुभि नामक असुर को मार कर उसके शव को ऋष्यमूक पर्वत पर फेंक दिया था जहाँ मतङ्ग नामक ऋषि तपस्या करते थे। उसके शव का रक्तबिन्दु ऋषि के शरीर पर पड़ा। उन्होंने क्रुद्ध हो कर वालि को शाप दिया कि इस पर्वत पर आने से उसकी मृत्यु हो जायगी।

प्र० [ २ ] ( क )

**परमिति**। यो नरः स्वयं तथा वर्तमानः=दोषेण विद्यमानः ( सन् ) परं=स्वेतरं, स्वस्मादन्यमिति यावत्, दोषेण=दुर्गुणेन, क्षिपति=आक्षिपति, न ईशानोऽनीशानः=असमर्थः, कुध्यति=कुप्यति, सः=एवं विधो नरः, अतिशयो मूढतमः=मूर्खतमः भवतीति शेषः। विविधदोषापन्नोऽपि यो नरः स्वेतरे जने दोषारोपणं करोति, तथाऽऽसक्तः सन् क्रुध्यति स वै महान्मूर्खोऽस्तीति भावः।

( ख )

**वनस्पतेरिति**। यः=कश्चित्, वनस्पतेः वृक्षादित्यर्थः, न पक्वानीत्य पक्वानि, फलानि, प्रचिनोति=सङ्गृह्णाति, सः, तेभ्य=फलेभ्यः, रसं हि आप्नोति=प्राप्नोति, 'प्रत्युत' अस्य=वनस्पते, बीजञ्च विनश्यति=नष्टं भवति। यो वृक्षादपक्वानि फलानि त्रोटयति तं रसप्राप्तिस्तु भवत्येव नहि, 'प्रत्युत' बीजमपि विनश्यतीति भावः।

प्र० [ ३ ] ( क )

**सिंह इति**। शिशु=बालः, अपि, सिंह—केसरी, प्रशस्ताः कपोलाः कपोलभित्तयः 'भित्ति'शब्दः प्रशस्तवचनः—यद्वा प्रदेशवाचकः। मदेन मलिनाः कपोलभित्तयस्तेषु मदनमलिनकपोलभितिषु=गजमदमलिनीकृत-कपोलप्रदेशेषु 'कपोलभित्तिषु' इत्यत्र 'प्रशंसावचनैश्चे'ति सूत्रेण समासो बोध्यः। गजेषु=हस्तिषु, वधाय धावति, इयम्=एषा, सत्त्ववतां=बलवतां प्राणिनां, प्रकृतिः=स्वभावः, एव, वयः=अवस्था, तेजसः=पराक्रमस्य, हेतुः= कारणं न भवति, खलु=निश्चयेनेत्यर्थः। बालोऽपि सिंहो मदमलिनगण्ड-स्थलेषु हस्तिषु तद्वधं कर्तुं निपतति, बलवतां प्राणिनामियमेव हि स्वभावः, न खलु तेजसोऽवस्था कारणमिति भावः।

( ग )

मालतीकुसुमस्येति । मालत्याः कुसुमं=पुष्पं मालतीकुसुमं "षष्ठी"ति षष्ठीसमासः, तस्य मालतीकुसुमस्य=जातिलतापुष्पस्य, इव, मनस्विनः=विवेकिनः पुरुषस्य द्वे, गती=अवस्थे, भवतः=स्तः । सर्वलोकस्य=सम्पूर्णजगतः, मूर्ध्नि=मस्तके ( स्थीयते ) वा वने, शीर्यते=शीर्णेन भूयते, गृहे लोकमान्या भवन्ति वनेऽरण्यवासिनो भवन्तीत्यर्थः ।

प्र० ( ४ )

मदेन मलिनाः कपोलभित्तयस्तेषु तयोक्तेषु, अत्र कपोलाश्चासौ भित्तयः कपोलभित्तयः । कर्मधारयतत्पुरुषसमासश्च । आरम्भे गुर्वी आरम्भगुर्वी, सप्तमी-समासः । खलाश्च सज्जनाश्च खलसज्जनास्तेषां खलसज्जनानामत्र द्वन्द्वसमासः । मालत्याः कुसुमं मालतीकुसुमं तस्य मालतीकुसुमस्यात्र "षष्ठी" इति सूत्रेण षष्ठीतत्पुरुषसमास ।

प्र० ( ५ )

मनुष्य का विद्या ही सर्वोत्तम रूप और गुप्त धन है । विद्या ही सम्पूर्ण भोग्य पदार्थ ( अन्न वस्त्र इत्यादि ) को देती है । यश और सुख को देने वाली तथा गुरुओं का भी गुरु विद्या ही है । विद्या ही परदेश में बन्धु जनों की तरह सुख दुःख में सहायक होती है, और यही सब से प्रबल भाग्य है । राजाओं के द्वारा विद्या ही की पूजा होती है, धन की नहीं । इसी से विद्या से रहित पुरुष पशु के सदृश है । कहने का तात्पर्य यह हुआ कि विद्या प्रत्येक व्यक्ति को पढनी चाहिए ।

जिसके पास धन है वही मनुष्य सद्वंशोत्पन्न है, वही पण्डित है, वही वेदवित् है । वही गुण को जानने वाला है, वही वक्ता है और वही दर्शनीय है क्योंकि सम्पूर्ण गुण धन पर निर्भर करते हैं ।

प्र० ( ६ )

अस्योत्तरं 'छन्दसङ्ग्रहे' लक्षणमुदाहरणञ्च तत्रैव भवद्भिरवलोकनीयम् । अत्र ग्रन्थविस्तरभिया न लिख्यते ।

सन् १९४०

## अनुवादे कोषे पञ्चतन्त्रे च प्रश्नाः

सूचना सुन्दर और स्पष्ट लेख के लिये । १०

१ (क) निम्नाङ्कितस्य सन्दर्भस्य हिन्दीभाषायामनुवादः कार्य्यः । २०

उज्जयिनीमार्गे महानेकः पिप्पलवृक्षो वर्तते । तत्र हंसकाकौ निवसतः । कदाचित् ग्रीष्मसमये परिश्रान्तः कश्चित्पथिकस्तत्र तरुतले धनुष्काण्डं निधाय सुप्तः । ततः क्षणान्तरे तन्मुखात् वृक्षच्छायाऽपगता । अनन्तरं सूर्य्यतेजसा पीडितं तन्मुखमवलोक्य कृपया पुण्यात्मना तत्पिप्पलवृक्षवासिना हंसराजेन पक्षौ प्रसार्य्य पुनस्तन्मुखे छाया कृता । परक्लेशनिवारणं हि महात्मनां स्वाभाविको धर्मः ।

(ख) अधस्तनस्य हिन्दीभागस्य संस्कृतभाषायामनुवादो विधेयः । ३०

कौआ और कोयल दोनों का रूप काला है । कौआ किसी की हानि नहीं करता है । कोयल किसी को कुछ नहीं देती है । तो भी आदमी कौआ से घृणा करता है, और कोयल का आदर करता है । इसका कारण क्या है ? कौआ का शब्द कर्कश है । और कोयल का शब्द मीठा है । मधुर वचन बोलने से मनुष्य सब को अपने अनुकूल कर सकता है ।

२ अधोलिखितेषु केषामपि पञ्चानां शब्दानामर्थौ हिन्दीभाषायां लेख्यः

(क) स्वतः, सान्त्वम्, अपलापः, अध्यवसायः, विषवैद्यः, कर्णधारः, कालिन्दी । ५

(ख) 'धर्मस्य' पर्यायशब्दा लेख्याः । ५

३ निम्नाङ्कितस्य गद्यस्य हिन्दीभाषायामनुवादः कार्य्यः २०

एवं ते त्रयोऽपि वेलायां कञ्चित्कालं सुभाषितगोष्ठीसुखमनुभूय भूयोऽपि सलिलं प्रविशन्ति। अथ कदाचित्तेषां गोष्ठीगतानां जालहस्ता धीवराः प्रभूतैर्मत्स्यैर्व्यापादितैर्मस्तके विधृतैर् अस्तमनवेलायां तस्मिञ्जलाशये समायाताः। ततः सलिलाशयं दृष्ट्वा मिथः प्रोचुः—'बहुमत्स्योऽयं ह्रदो दृश्यते, स्वल्पसलिलश्च, तत्प्रभातेऽत्रागमिष्यामः।

(ख) अधस्तनस्य पद्यस्य स्वसंस्कृतेन व्याख्या विधेया १०

तृष्णे देवि ! नमस्तुभ्यं, यया वित्तान्विता अपि ।
अकृत्येषु नियोज्यन्ते, भ्राम्यन्ते दुर्गमेष्वपि ॥

## उत्तराणि

[ १ ] ( क )

उज्जयिनी ( उज्जैन ) के रास्ते में एक बड़ा पिप्पल का वृक्ष है। उस पर हंस और कौआ रहते थे। गर्मी के दिनों में कभी थका हुआ कोई पथिक ( राही ) उस वृक्ष के नीचे धनुष्षण्ड को रख कर सो गया। तदनन्तर थोड़ी ही देर में उसके मुख से वृक्ष छाया हट गई। तब सूर्य के तेज ( घाम ) से पीड़ित उस पथिक के मुख को देख पुण्यात्मा उस पीपल वृक्ष पर रहने वाले हंसराज ने पङ्ख फैला कर उसके मुख पर छाया किया। दूसरे के क्लेश को निवारण करना ही महात्माओं ( सज्जन लोगों ) का स्वाभाविक धर्म है।

[ ख ]

काककोकिलयोः स्वरूपं कृष्णवर्णमेव। काक न कस्याप्यपकारं करोति। कोकिला न किमपि किञ्चिद्ददाति। तथापि जनाः काकाद्घृणां कुर्वन्ति, कोकिलां प्रशसन्ति च। अत्र किं कारणम् ? काकशब्दो रूक्षः, कोकिलायाश्च मधुरः। प्रियवचनाज्जन सर्वानपि स्वानुकूल्यं कर्तुमर्हतीति।

प्र० [ २ ] ( क )

स्तवः='स्तव'शब्द का अर्थ स्तुति है।

सान्त्वम्='सान्त्व'शब्द का अर्थ है खूब मीठी बात ।

अपलापः='अपलाप'शब्द का अर्थ है कही हुई बात से मुकर जाना।

अध्यवसायः='अध्यवसाय' का अर्थ उत्साह है।

विषवैद्यः='विषवैद्य'शब्द का अर्थ है सर्प के विष को दूर करने वाला।

कर्णधारः='कर्णधार' पतवार पकड़ने वाले का नाम है।

कालिन्दी='कालिन्दी'शब्द का अर्थ यमुना नदी है।

( ख )

धर्मम्=पुण्यम् श्रेयसी-सुकृतम् इत्यादि ।

प्र० [ ३ ]

इस प्रकार वे तीनों जल के किनारे ही कुछ काल तक सुभाषित गोष्ठी ( बातचीत ) का आनन्द लेकर फिर भी जल में कूद जाते। बाद किसी समय उनके गोष्ठी करते हुए धीवर ( मल्लाह ) जाल हाथ में लिये हुए बहुत सी मछलियों को मार कर, शिर पर रख कर, सूर्यास्त के समय तालाब के किनारे आ पहुंचे। तब तालाब को देख कर वे आपस में कहने लगे 'अहो, यह तालाब बहुत मछलियों से पूर्ण तथा थोड़ा ही जल वाला दिखाई पड़ता है। सो प्रातःकाल यहाँ आवेंगे।

[ ख ]

तृष्णे-इति। हे तृष्णे देवि! तुभ्यं नमः=नमस्करोमि, यया=तृष्णया, ( त्वया ) वित्तेन=धनेन, अन्विता=युक्ता, अपि, अकृत्येषु=निन्द्यकार्येषु, नियोज्यन्ते=संयोज्यन्ते, तथा दुर्गमेषु=गन्तुमशक्येषु स्थलेष्वित्यर्थः, भ्राम्यन्ते=परिप्राप्यन्ते।

* इति श्रीशिवदत्तमिश्रशास्त्रिविरचितान्यनुवाद-कोष-पञ्चतन्त्राणां प्रश्नोत्तराणि *

## सन् १९४०

## गणिते प्रश्नाः—

सूचना स्पष्ट तथा सुन्दर लेख के लिये १० अङ्क सुरक्षित हैं।

१ (क) निम्नलिखित संख्या को अङ्कों में लिखोः
पचास अरब अस्सी करोड़ तीस लाख दस हजार पांच। ५

(ख) निम्नलिखित संख्या को शब्दों में लिखोः ५
३८५६०० ९८०३४
उपर्युक्त संख्यामें जितने ३ हैं उनके स्थानीय मान बताओ। ३

२ निम्नलिखित संख्याओं का योगफल निकालोः
१२३४५६७८, ८७६५४३२१, ७०६०५०४०, ६००६०००६, ३५६९७०९५, ८३४०९९९८ १३

३ १६२१-१५९७३ । ३०७ - ९६ - ३५ में कितनी संख्या जोड़ी जावे कि योगफल दस लाख के बराबर हो ? १२

४ सरल करोः ४ ÷ [३ + ४ ÷ {२ + ४ ÷ (४ - २)}] १०

अथवा

दो संख्याओं का गुणनफल ७२४३४९१ है। उनमें बड़ी संख्या ३४००७ है तो बताओ कि दोनों संख्याओं का अन्तर क्या है ? १०

५ पानी की किसी टङ्की में दो नल लगे हुए हैं। एक नल से उसमें एक मिनिट में २ मन ४ सेर ३ छटांक पानी आता है और उसी समय में दूसरे नल से २४ सेर ११ छटांक पानी निकल जाता है। यदि दोनों नल एक साथ खोल दिये जावें तो उस टङ्की में २७ मिनिट में कितना पानी जमा हो जावेगा ? १५

६ एक थैली में कुछ अठन्नियाँ और चवन्नियाँ हैं तथा उनकी

कुल संख्या ५० है। यदि उस थैली में कुल १८ रु० ४ आना है तो बताओ कितनी अठन्नियाँ और चवन्नियाँ हैं ? १२

७ ६५७ मन आटे को बोरों में भरना है। यदि प्रत्येक बोरे में १ मन १ सेर १ छटांक आटा भरा जा सकता हो तो बताओ कि कुल कितने बोरों की आवश्यकता होगी ? १५

अथवा

६६३ पौंड १४ शि० ८ पे० में से कम से कम कितना द्रव्य निकाल लिया जावे कि शेष द्रव्य ३७ मनुष्यों में बराबर बराबर विभक्त हो सके। १५

## उत्तराणि-

प्र० [ १ ] (क)

५०, ८०, ३०, १०, ००५

(ख)

अड़तीस अरब, छप्पन करोड़, अट्ठानवे हजार, चौंतीस।

(३) का स्थानीयमान १० अरब है।

(३) का स्थानीयमान दहाई का है।

प्र० [ २ ]

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
| ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |
| ७ | ० | ६ | ० | ५ | ० | ४ | ० |
| ६ | ० | ० | ६ | ० | ० | ० | ६ |
| ३ | ५ | ६ | ९ | ७ | ० | ९ | ५ |
| ८ | ३ | ४ | ० | ९ | ९ | ९ | ८ |
| ३४ | ९ | ७ | ७ | २ | १ | ३ | ८ |

यह योगफल हुआ।

प्र० [ ३ ]

१६२१ − १५९७ + २०७ − ९६ − ३५

१६२१ + २०७ = १९२८ योगफल हुआ ।

१५९७ − ९६ − ३५ =

१५९७
  ९६
  ३५
१७२८ बाकी हुआ ।

१९२८ − १७२८

१९२८
१७२८
 २००

१०००००० − २००

१०,०००००
    २००
९९९८०० इतनी संख्या जोड़ने से दस लाख के बराबर होगी ।

प्र० [ ४ ]

$$४ \div \left[ ३ + ४ \div \left\{ २ + ४ \div \left( ४ - २ \right) \right\} \right]$$

$$४ \div \left[ ३ + ४ \div \left\{ २ + ४ \div \left( ४ - २ \right) \right\} \right]$$

$$४ \div \left[ ३ + ४ \div \left\{ २ \mid ४ \div २ \right\} \right]$$

$$४ - \left[ ३ + ४ \div \left\{ २ + \frac{२}{४} \times \frac{१}{२} \right\} \right]$$

$$४ \div \left[ ३ + ४ \div \left\{ २ + \frac{२}{१} \right\} \right]$$

$४ \div \left[३ + ४ \div \left\{ ४ \right\}\right]$

$४ \div \left[३ + ४ \div \frac{४}{१}\right]$

$४ \div \left[३ + \frac{\not{४}}{१} \times \frac{१}{\not{४}}\right]$

$४ \div \left[३ + \frac{१}{१}\right]$

$४ \div \left[\frac{३ + १}{\not{४}}\right]$

$\frac{\not{४}}{१} \times \frac{१}{\not{४}}$

∴ उत्तर १।

अथवा

```
३४००७ ) ७२४३४६१ ( २१३
        ६८०१४
        ------
         ४४२०६
         ३४००७
        ------
        १०२०२१
        १०२०२१
        ------
           ×
```

बड़ी संख्या = ३४००७

छोटी संख्या = २१३

दोनों का अन्तर = ३३७९४ उत्तर।

प्र० [ ५ ]

२ मन ४ सेर ३ छ० १ मिनट में आता है।
२४ सेर ११ छ० १ मिनट में निकलता है।

१ मन १६ सेर ७ छ० १ मिनट में
२७ २७ मिनट में

उत्तर ४० मन ४ सेर १३ छ०

प्र० [ ६ ]

अगर १ अठन्नी और १ चवन्नी हों
तो २० अठन्नी + २० चवन्नी = १०) + ५) = १५) रु०
अर्थात् ४० सिक्का = १५) रु०
शेष १० सिक्का = चवन्नियाँ + अठन्नियाँ ३।)
अगर इसमें ३ अठन्नी हों और ७ चवन्नी
तो ३ अठन्नी + ७ चवन्नी = १॥) + १॥।) = ३।)
∴ २० अठन्नी + ३ अठन्नी + २० चवन्नी + ७ चवन्नी = १८।) रु०
∴ २३ अठन्नी + २७ चवन्नी = १८ रु० ४ पा०।

| मन | मन | सेर | छटाँक |
|---|---|---|---|
| ६५७ | १ | १ | १ |
| ४० | ४० | | |
| ००० | ४० | | |
| २६२८ | १ | | |
| २६२८० | ४१ | | |
| १६ | १६ | | |
| १५७६८० | ६५६ | | |
| २६२८० | १ | | |
| ४२०४८० छटाँक | ६५७ छटाँक | | |

६५७ ) ४२०४८० ( ६४०
३९४२

२६२८
२६२८

०

∵ ६४० घोरों की आवश्यकता होगी।

अथवा

| पौ० | शि० | पे० |
|---|---|---|
| ६६३ | १४ | ८ |

२०

०००
१३२६

१३२६०
१४

१३२७४ शिलिङ्ग

१२

२६५४८
१३२७४

१५९२८८
८

१५९२९६ पेन्स

३७ ) १५६२६६ ( ४२०५
१४८

११२
१११

१६६
१८५

११ शेष

११ पेन्स निकाल लेने से पूरा पूरा विभक्त होगा।

* इति श्रीशिवदत्तमिश्रशास्त्रिकृतानि गणितस्य प्रश्नोत्तराणि *

सन १९४०

## हिन्दीपाठमालायां स्वास्थ्यशिक्षायां च प्रश्नाः

[ अनावश्यक समझ कर केवल प्रश्नपत्र ही दिये गये हैं, उत्तर नहीं लिखे हैं ]

सूचना १० अङ्क स्पष्ट तथा सुन्दर लेख के लिये हैं।

१ शिष्टाचार किसे कहते हैं? उससे क्या लाभ होता है? शुद्ध हिन्दी में संक्षेप से उत्तर लिखिये। १५

२ 'गो-सेवा' या 'ब्रह्मचर्य्य' पर अपनी हिन्दी में एक शुद्ध संक्षिप्त निबन्ध लिखिये जो उत्तर पुस्तक के दो पन्ने से अधिक न हो। १६

३ नीचे लिखी चौपाई का अर्थ प्रसङ्ग बताते हुए लिखिये। १५

वर्षा काल मेघ नभ छाये; गरजत लागत परम सुहाये।

दामिनि दमक रही घनमाहीं ; खल की प्रीति यथा थिर नाहीं ॥

४ (क) नीचे लिखे वाक्यों को शुद्ध कीजिये:

(१) गऊ का गोबर के खाद बहुत अच्छा होता है। (२) हम आपका साथ देवी का दर्शन को चलूँगा। (३) गुरु का आगमन को सुनकर छात्रों का विस्मय हुई। ८

(ख) नीचे लिखे शब्दों को लेकर पाँच वाक्य पृथक् पृथक् बनाइये। जिनसे इनके लिङ्ग का भी ज्ञान स्पष्ट मालूम हो जाय

बात, वायु, महिमा, कीर्त्ति और हाथी। १०

५ (क) कपड़े और कमरे का सफाई से क्या लाभ होता है ? १०

(ख) प्रकाश और पानी का जीवन में क्या उपयोग होता है ? १०

(ग) नशे को कौन कौन वस्तुएँ हैं ? उनसे क्या क्या हानियाँ होती हैं ? ५

सन् १९४०

## इतिहास तथा भूगोल

सूचना: तीन प्रश्न इतिहास के और तीन ही भूगोल के करें। छः प्रश्न से अधिक न करें। १० अङ्क सुलेख के लिये सुरक्षित हैं।

### (क) इतिहास

१ कौरव पाण्डव कौन थे ? संक्षेप में महाभारत की लड़ाई का कारण बताइये ? १५

२ अशोकवर्धन को राजगद्दी किस तरह मिली? उन्होंने प्रजा के सुख के लिये जिन २ कार्यों को किया उनका उल्लेख करिये? १५

३ पृथ्वीराज चौहान और जयचन्द में लड़ाई होने का कारण बताइये? पृथ्वीराज का राज्य कहाँ था लिखिये? १५

४ अकबर बादशाह के जन्म के विषय में आप क्या जानते हैं। उनके सुधारों का संक्षेप में उल्लेख करिये? १५

५ निम्नलिखित में से किन्हीं तीन के विषय में लिखिये। १५

(१) रामवनगमन का कारण।

(२) महाराणा प्रताप की वीरता।

(३) महमूद गजनवी और सोमनाथ का पुजारी।

(४) सिक्ख किस तरह बहादुर बने।

(ख) भूगोल

६ भारत की सीमा तथा उसके प्रान्तों को दिखलाते हुए भारतवर्ष का एक चित्र खींचिये? १५

७ भारत के किन्हीं पाँच प्रान्तों का नाम लिखिये। उनकी राजधानियों और प्रत्येक प्रान्त में दो प्रसिद्ध जिलों का उल्लेख करिये? १५

८ सिन्धु, गंगा, नर्मदा, नदियाँ कहाँ २ से निकलती हैं? इनकी मुख्य २ सहायक नदियों का नाम लिखिये? १५

९ भारतवर्ष के मुख्य मुख्य पर्वतों के नामों तथा भारतवर्ष में उनके स्थानों को लिखिये? १५

१०—निम्नलिखित में से किन्हीं तीन के विषय में लिखिये । १५

(१) काश्मीर ।

(२) बर्मा ।

(३) राजपूताना ।

(४) नेपाल ।

(५) मानसरोवर ।

इति गोरखपुरमण्डलान्तर्गत-'मझौली राज्य'-निवासि-सुप्रसिद्ध-
पण्डितकुलप्रसूत-पण्डितश्रीसन्तशरणमिश्रात्मजेन
पण्डितश्रीशिवदत्तमिश्रशास्त्रिविरचिता
'सोत्तरा-प्रथमा-प्रश्नावली'
समाप्ता ।



# वैद्यक, यूनानी और डॉक्टरी का निचोड़

श्रीमान् कविविनोद वैद्यभूषण पं० ठाकुरदत्त शर्मा वैद्य लाहौर ने बड़े अनुसंधान और अनुभव के पश्चात् एक एसी औषधि तैयार की है, जो एक ही औषधि प्रायः सर्व रोगों का इलाज है। जैसे—




## उन रोगों की नामावली जिन्हें अकेले अमृतधारा दूर करती है

हर प्रकार की शिर-पीड़ा, मस्तिष्क की कास, संबंधी समस्त रोग। दंत-पीड़ा, दाँत को पानी लगना, खून या दंतव्रण इत्यादि समस्त दंत-रोग। कर्णपीड़ा, कर्ण-व्रण, कर्ण-कु